एतस्य शिष्यनामानि त्वेवमाह चित्रकूटीय**महावीर**जिनप्रशस्तौ **श्रीजिनवल्लभसूरिः**—

सत्तर्कन्यायचर्चार्चितचतुरगिरः **श्रीप्रसन्नेन्दुसूरिः**
सूरिः **श्रीवर्द्धमानो** यतिपति**हरिभद्रो** मुनि**र्देवभद्रः**।
इत्याद्याः सर्वविद्यार्णवकलशभुवः सञ्चरिष्णूरुकीर्तिः–
स्तम्भायन्तेऽधुनापि श्रतचरणरमारञ्जिनो यस्य शिष्याः ॥

**सुरसुन्दरी**कथाकृद्धनेश्वरसाधुः संवेगरङ्गशालाकार**जिनचन्द्रसूरि**-श्चास्य सतीर्थ्यौ।

अस्यैव सूरिशिरोमणेरुपदेशामृतपानपीनमना **जिनवल्लभ**श्चैत्य-वासमपहाय त्यागमार्ग भेजिवान्, यदाह **धन्यशालिभद्र**चरित्रप्रशस्तौ **पूर्णभद्रगणिः**—

आकर्ण्या**भयदेवसूरि**सुगुरोः सिद्धान्ततत्त्वामृतं
येनाज्ञायि न सङ्गतो जिनगृहे वासो यतीनामिति।
तं त्यक्त्वा गृहमेधिगेहवसतिं निर्दूषणां शिश्रिये
सूरिः **श्रीजिनवल्लभो**ऽभवदसौ विख्यातकीर्तिस्ततः ॥५॥

| अस्य कृतिततिस्त्वेवम्— | ग्रन्थाग्रम् | रचनाकालः |
|---|---|---|
| १ स्थानाङ्गवृत्तिः | १४२५० | वि. सं. ११२० |
| २ समवायाङ्गवृत्तिः | ३५७५ | ,, ११२० |
| ३ भगवतीवृत्तिः | १८६१६ | ,, ११२८ |
| ४ ज्ञाताधर्मकथाङ्गवृत्तिः | ३८०० | ,, ११२० |
| ५ उपासकदशाङ्गवृत्तिः | | |

६ अन्तकृद्दशाङ्गवृत्तिः ३०००
७ अनुत्तरोपपातिकाङ्गवृत्तिः १३३०
८ प्रश्नव्याकरणाङ्गवृत्तिः
९ विपाकाङ्गवृत्तिः ५६३०
१० औपपातिकाङ्गवृत्तिः ३१२५
११ प्रज्ञापनातृतीयपदसङ्ग्रहणी ४०७
१२ नवतत्त्वप्रकरणभाष्यम् गा. १३८
१३ पञ्चनिग्रन्थीप्रकरणम् गा.
१४ हरिभद्रीयपञ्चाशकवृत्तिः ( सं. ११२४ )
१५ षट्स्थानप्रकरणभाष्यवृत्तिः
१६ विशेषावश्यकभाष्यवृत्तिः ( ? )
१७ हारिभद्रीयषोडशकप्रकरणवृत्तिः ( ? )
१८ देवेन्द्रसूरिकृतशातारिप्रकरणवृत्तिः ( गाथाबद्धा )
१९ जयतिहुयणस्तोत्रम्
२० निगोदषट्त्रिंशिका[2] } पूर्वतना
२१ पुद्गलषट्त्रिंशिका }
२२ साधुसमाचारी ( अन्या ? )
२३ दोषापहारस्तोत्रम् ( ? )[3]
२४ विविधतीर्थकल्पम् ( ? )[4]

---

१ यद्यपि भाष्यकृता न क्वापि स्वनाम निरदेशि तथापि ' भाष्यकर्तुः **श्रीमदभयदेवसूरेः** स्थानाङ्गादिवृत्तिकृतो वचनम् ' इत्युदलेखि टीकाकारेण ।

२ मुद्रिता तु **रत्नसिंहसूरीया** ।

३–४ **श्रीजिनप्रभसूरिकृताभ्यां** भिन्ने नवेति न निश्चयः ।

२५ आराधनाकुलकम् ( गा. ८६ )
२६ साहम्मियवच्छलकुलम् ( गा. २९ )
२७ वंदणयभासं गा. ३३

सत्तायामस्य सूरेः स्वर्गमानन्तरं चाभयदेवाचार्यस्य

## १०. श्रीजिनवल्लभसूरिः

वि. सं. ११३८ वर्षे प्राग्वाटकुलीन**नेमिकुमार**लिखितं **कोट्याचार्य**कृताया **विशेषावश्यक**टीकायास्ताडपत्रात्मकमेतदीयं प्राचीनं जीर्णमादर्शपुस्तकमद्याप्युपलभ्यते यत्र **श्रीजिनेश्वरसूरि**शिष्यत्वमस्य निरदेशि। सूरिरयं स्वयमपि स्वीये प्रश्नोत्तरषष्टिशतककाव्येऽष्टसप्ततिकादौ च **श्रीजिनेश्वरसूरिमभयदेवाचार्यं** च सत्स्तुतिपात्रं कुर्वन् क्रमेण सद्गुरुत्वमाचार्यत्वं च समसूचयत्।

विस्तरेण चरितमस्य प्रतिपादितं दृश्यते **चारित्रसिंहग**णिना **सुमतिगणि**विनिर्मितगणधरसार्द्धशतकबृहद्वृत्तेरेव प्रोद्धृते गणधरसार्द्धशतकान्तर्गतप्रकरणे, **श्रीजिनदत्तसूरीय**गणधरसार्द्धशतकस्य पूर्वोक्तमेव **सुमतिगणीय**विवरणमुपजीव्य **जिनेश्वरसूरि**शिष्येण वाचक**सर्वराज**गणिना विरचितायां संक्षिप्तवृत्तौ, वि सं. १६२९ वर्षे **धर्मसागरोपाध्याय**विरचिते स्वोपज्ञवृत्तिसमन्वितप्रवचनपरीक्षापरनाम्नि-कुपक्षकौशिकसहस्रकिरणे, **क्षमाकल्याणा**दिरचितखरतरगच्छपट्टावल्यादौ च संक्षिप्तरूपेणातो नात्र प्रपञ्च्यते तत्।

वि. सं. ११२५ वर्षे **जिनचन्द्रसूरि**विरचिता संवेगरङ्गशालाऽनेन समशोधि।

सूरिवरस्यास्य पट्टधरं **जिनदत्तसूरि**मन्तरेण केकेऽन्ये शिष्यवराः समासन्निति न विशेषतो व्यज्ञायि।

नामशेषस्यापि सूरिशिरोमणेरस्य षडशीति–सूक्ष्मार्थसिद्धान्त-विचारसारसार्द्धशतकाख्यकर्मग्रन्थ–पिण्डविशुद्धि–पोषधविधि (?) प्रतिक्रमण सामाचारी–सङ्घपट्टक–धर्मशिक्षा–द्वादशकुलकरूपप्रकरण-

१ एतद्धि भावनगरस्थयाऽऽत्मानन्दसभया बृहद्गच्छीयहरिभद्रसूरि-मलयगिरिविरचितवृत्तिद्वयसमन्वितं प्राकाशि । एतदुपरि भाष्यद्वयं श्रूयते । मूलग्रन्थकारश्रीवल्लभसूरिशिष्यरामदेवगणिप्रणीतं प्राकृतविवरणं यशोभद्रसूरिविरचिता वृत्तिश्चोपलभ्यते । मेरुवाचककृतं विवरणं तथोद्धारावचूर्यादिकमप्यन्यत्र पठ्यते ।

२ धनेश्वरसूरिविरचितवृत्तिसमेतमेतद् भावनगरस्थया जैनधर्मप्रसार-सभया प्रसिद्धिमापितम् । एतदुपरि भाष्यं तथा वि. सं. ११७० वर्षे मुनि-चन्द्रसूरिविरचिता चूर्णिश्च ज्ञायते । चक्रेश्वरसूरि (?) रामदेवगणि-विहितं प्राकृतविवरणं टिप्पनमपि च श्रूयते ।

३ वि. सं. ११७६ वर्षे यशोदेवसूरिणैतस्य विवरणं व्यधायि. बृहट्टिप्पनिका जैनग्रन्थावल्यादौ सूचिता वि. सं. ११८० वर्षे श्रीचन्द्रसूरि-कृतैतदीया वृत्तिर्यशोदेवसूरिकृतविवरणात् पृथक् न प्रतीयते । तथा वि. सं. १२९२ वर्षे उदयसिंहसूरिणा दीपिका, वैक्रमीयपञ्चदशशताब्दीपूर्वार्द्धे तपागच्छीयसंवेगदेवगणिना बालावबोधश्च व्यधायि । एतदतिरिक्तावचूरिप-ञ्जिकाद्यप्युपलभ्यते ।

४ गुरुजिणवल्लहविरइयपोसहविहिपयरणाउ संखेवा ।

देसियमेयविहाणं विसेसओ पुण तओ नेयं" पत्तनीयभां० सूची ।

एतदाधारेण निर्मितमेकं सक्षिप्तमपि पौषधविधानमुपलभ्यते–

वि. सं. १६१७ वर्षे जिनचन्द्रसूरिणाऽस्य वृत्तिर्व्यधायीति जैन-ग्रन्थावल्यादौ सूचितम्,

५ जिनपतिसूरिरचितबृहद्वृत्तिविभूषितोऽयं 'श्रावक जेठालाल दलसुख' इत्यनेन प्रसिद्धिं नीतः । वि. सं. १३२३ वर्षे लक्ष्मीसेनेन विरचितास्य लघुवृत्तिः समसूचि जैनग्रन्थावल्याम् । हर्षराजोपाध्यायविरचिताऽस्य

प्रश्नोत्तरशतक–शृङ्गारशतक–नानाप्रकारविचित्रचित्रकाव्यसारशतसङ्ख्या स्तुतिस्तोत्रादिरूपकीर्तिपताकाद्यापि सकलं महीमण्डलं मण्डयन्ती विद्वज्जनमनांसि प्रमोदयति ।

---

लघुवृत्तिः वि. सं. १६१९ वर्षे **साधुकीर्ति**गणीप्रणीताऽवचूरिश्चोपलभ्यते ।

६ एतदुपरि **सकलचन्द्र**कृता वृत्तिरिति जैनग्रन्थावल्याम् ।

७ वि. सं. १२९३ वर्षे **जिनपालगणि**ना प्रणीतास्य वृत्तिः ।

८ अवचूरिसहितमिदं महेसाणस्थ**यशोविजय**जैनपाठशालया प्रसिद्धिमानीतं । वि. सं. १४८३ वर्षे तपागच्छनायक**सोमसुन्दर**सूरिशिष्येण लेखितं सटीकमिदमुपलभ्यते । वि. सं. १६४० वर्षे पाठक**पुण्यसागरेण** विरचिता वृत्तिश्च प्राप्यते ।

९ 'उल्लासिक्कम' इत्यादि लघ्वजितशान्तिस्तोत्रं वि. १३२२ वर्षे **धर्मतिलक**मुनिविरचितया, विक्रमीयसप्तदशशताब्दयुत्तरार्धे **गुणविनयगणि**प्रणीतया च वृत्त्योपेतम् । 'भावारिवारणादि' **वीरजिन**स्तोत्रं सं. १४८७ वर्षे **जयसागरगणि**प्रथितवृत्तिमण्डितं ही. हं. पण्डितेन प्राकाशि ।

'दुरियरयसमीर' इत्यादि वीरस्तोत्रं सं. १६८७ (?) वर्षे **समयसुन्दरगणि**विनिर्मितवृत्तिविभूषितं **सूर्यपुर (सूरत)** स्थ**जिनदत्तसूरि**ज्ञानभाण्डागारसंस्थया मुद्रापितम् ।

'सम्मं नमिऊण' पञ्चकल्याकस्तोत्रम्, 'नमिरासुर' पार्श्वनाथस्तवनम्, 'पायात् पार्श्वः!' पार्श्वजिनस्तवनं चात्रैव प्रकाश्यतेऽस्माभिः ।

नाभेय–शान्ति–नेमि–पार्श्व–वीरजिनचरितपञ्चकरूपं स्तोत्रपञ्चकम् वि. सं. १५१९ वर्षे साधुसोमगणिविहितया वृत्त्या समलङ्कृतं प्राप्यते । मूलमात्राणि तु मुद्रापितानि रतलाम ( माळवा ) न्तगतया **श्रीऋषभदेवजी केसरीमलजी** जैनश्वेताम्बरसंस्थया **सिरिपयरणसंदोहे** ।

एतदतिरिक्तान्यन्यानि चतुर्विंशतिजिनस्तुति–जिनविज्ञप्ति–वीरकल्याणकस्तोत्रादिस्तोत्राण्यपि यत्रकुत्रचिदुपलभ्यन्ते । स्वप्नाष्टकविचारनामा ग्रन्थो **जिनपालोपाध्याय**सन्दब्धभाष्यभूषितो ज्ञायते । अष्टसप्तत्यागमोद्धाराद्यान्यपि कृतिर्विज्ञायते । जैनग्रन्थावल्यां **जिनवल्लभ**सूरिनाम्नि निर्दिष्टाः पर्यन्तोपदेश –तीर्थकरस्थानप्रकरणबृहत्संग्रहणीवृत्ति–रत्नचूडकथाप्रभृतयो ग्रन्थास्तथैव वान्यथेति न निश्चीयते ।

## (१२) श्रीहरिभद्रसूरिः ।

१ एतन्नामभृतस्त्रयः समजायन्त सूरिवराः तेषु **प्रथमश्चतुर्दश-शतप्रकरणकारो याकिनीमहत्तरा**धर्मपुत्रो विदित एव ।

२ वटगच्छीय**चन्द्रसूरि**शिष्यः **कुमारपाल**राज्येऽणहिल्लपुरपत्तने वि. सं. १२१६ वर्षे ऽष्टसहस्रश्लोकपरिमितप्राकृतापभ्रंशभाषाविभू-षित**श्रीनेमिनाथचरित्र**प्रणेता । असौ स्वस्य चतुर्विंशतिजिनचरित्ररच-यितृत्वं प्रतिपादयति स्मान्यत्र तन्मध्या**च्चन्द्रप्रभ**चरित्रं, **मल्लिनाथ**चरित्रं चोपलभ्यते पत्तनादिभाण्डागारेषु ।

३ बृहद्गच्छीय**मानदेवसूरि**शिष्य**जिनदेवोपाध्याय**शिष्य-वर्योऽसौ **सिद्धराजराज्ये** विद्यमानतां बिभर्त्ति स्म । सं. ११७२ बन्ध-स्वामित्वषडशीत्यादिकर्मग्रन्थवृत्तिः, सं. ११८५ प्रशमरतिवृत्तिः, संग्रहणीवृत्तिः, मुनिपतिचरित–श्रेयांसचरिते चेत्याद्यनेन निरमामि ।

एतत्सूरिवर्यत्रयमध्यात् अत्रैव ( पृष्ट १६ ) मुद्रितं **साधारणजिन-**स्तोत्रं कस्य कृतिरिति न निश्चयः, परन्तु **विरहाङ्कविरहा**न्नेयं याकि-नीमहत्तरासूनोः प्रणीतिः ।

## (१३) श्रीधर्मसूरिः ।

जैनग्रन्थावल्यानुसारेण संवत् १२४८ वर्षे आत्महितकुलक-( गा. ३२ ) आत्मानुशासनकुलक ( गा. ५६ ) आत्मानुशास्तिकुल-क ( गा. २५ ) उपदेशकुलक ( गा. २६ ) गुर्वाराधनकुलक (गा. ) जिनेन्द्रविज्ञप्तिकुलक ( गा. ३० ) धर्माचार्यबहुमानकुलक-( गा. ३४ ) परमसुखद्वात्रिंशिकाकुलक ( गा. ३२ ) पर्यन्ताराधना-कुलक ( गा. १६ ) मनोनिग्रहभावनाकुलक ( गा. ४४ ) श्रावक-

वर्षाभिग्रहकुलक ( गद्य ) संवेगामृतपद्धति (प्रा. गा. ११२ ) संवेगामृतपद्धति ( सं. श्लो. ४३ ) संवेगरङ्गमाला ( गा. ५० ) प्रभृतिप्रकरणप्रणेतुः **श्रीरत्नसिंहसूरे**र्गुरुश्चेत् त्रयोदशशताब्द्येव सत्तासमयोऽस्य

श्रीमतो गच्छ—गुरु—शिष्यादिपरिचितिं प्रापयति प्रो. **पिटर्सन**-महाशयस्य पञ्चमरिपॉर्ट पुस्तकस्य १०९ तमपृष्ठगतकल्पसूत्र**कालिकाचार्य**कथाप्रतिप्रान्तस्थ उल्लेखः।-- तथाहि—

" श्रीराजगच्छमुकुटोपमशीलभद्र-
सूरेर्विनेयतिलकः किल **धर्मसूरिः** ।
दुर्वादिगर्वभरसिन्धुरसिंहनादः
श्रीविग्रहक्षितिपतेर्दलितप्रसादः ॥ १८ ॥

**आनन्द**सूरिशिष्य**श्रीअमरप्रभ**सूरितः ।
श्रुत्वोपदेशं कल्पस्य पुस्तिकां नूतनामिमाम् ॥ १९ ॥
उद्यमात् **सोमसिंहस्य** सपुण्यः पुण्यहेतवे ।
अलेखयच्छुभायैषा निजमातु**र्गुणश्रियः** ॥ २० ॥
यावच्चिरं धर्मधराधिराजः सेवाकृतां सुकृतिनां वितनोति लक्ष्मीम् ।
मुनीन्द्रवृन्दैर्विहिताभिमाना तावन्मुदं यच्छतु पुस्तिकाऽसौ ॥२१॥
संवत् १३४४ वर्षे मार्ग सुदि २ रवौ **सोमसिंहेन** लिखापिता।

---

१ **सिरिरयणसिंहसूरी** भावणसिहरम्मि आरुहेऊणं ।
अप्पाणुसासणं भो ! जंपइ जिणसासणे सारं ॥ ५५ ॥
बारसअउणत्ताले ( १२४९ ) वइसाहे सेयपंचमिदिणम्मि ।
अणहिल्लवाडनयरे विहियमिणं अप्पसरणत्थं ॥ ५६ ॥

—आत्मानुशासनकुलके ।

**पिटर्सन**कृततृतीयरिपॉर्टपुस्तकस्य अैपेन्डिकस, ( १५ मे, ३०७ मे ) पृष्ठेऽस्यैव **धर्मघोषसूरि**रिति निर्दिष्टं नाम **शाकम्भरी-नृप**प्रतिबोधकश्च व्यावर्णि । तत्रैव २६२ तमे पृष्ठे **सपादलक्षनृपति-**समक्षमनेकवादिनोऽजयत् तत्रभवानिति दर्शितमस्ति ।

**श्रीजिनविजय**महाशयसम्पादित '**प्राचीन जैनलेखसंग्रह**' द्वितीयविभागान्तर्मुद्रितश्री**ज्ञानचन्द्र**गुरुविहित**विमलवस**हिगतप्रशस्तिलेख (लेखाङ्क १३२) प्रान्ते—

" वादिचन्द्र**गुणचन्द्र**विजेता भूपतित्रयविबोधविधाता ।
**धर्मसूरि**रिति नाम पुरासीद् विश्वविश्वविदितो मुनिराजः ॥३९॥ "

इत्याद्युल्लेखेनात्रभवतो वादिचन्द्र**गुणचन्द्र**वादिजेतृत्वं, नृपतित्रयप्रतिबोधकत्वं च समसूचि तेनाऽसाधारणशक्तिसम्पन्नः श्रीमानिति वदने नैव कथमपि कथङ्कथिकताया अवकाशः ।

कृतिस्त्वस्य मङ्गलस्तोत्र ( श्लो. १५ ) पार्श्वस्तोत्र (श्लो. १६) मन्तरेण नान्या नयनपथमागता मे । पूज्यपादस्य स्तुतिगर्भितानि रचितानि ३७ कुलकानि श्रीरत्नसिंहसूरिभिरिति ' जैनगूर्जरकविओ ' प्रथमविभागस्य पृ. ७४ दर्शनेनावगम्यते ।

## ( १४ ) पार्श्वदेवगणिः ।

चन्द्रकुलकमलषण्डमार्तण्डशील**शीलभद्र**सूरिपट्टप्रभावक**धनेश्वर-सूरेः** शिष्योऽयम् । सामान्यावस्थायामस्य **पार्श्वदेव**गणिरिति, सूरिपदानन्तरं च श्रीचन्द्रसूरिरिति नामासीत् । सं ११७१ वर्षे स्वगुरो-

---

१ **हस्तकाण्ड**प्रणेता **पार्श्वचन्द्र**स्त्वितो न भिन्न इतिमुनि **श्रीकल्याणविजय**मतम्

२ उक्तं च गायकवाड ऑरीयेन्टल इन्स्टीट्युटद्वारा मुद्रापित **न्याय-प्रवेश** पञ्जिकाप्रान्ते—

धनेश्वरसूरेः सार्धशतकवृत्तौ साहाय्यताऽस्य ।

श्रीभरतेश्वराचार्यः श्रीवैरसूरिश्चास्य गुरोः संतीर्ध्यौ । पूर्णभद्रसूरिस्त्वस्य शिष्यः ।

अत्रैव ( पृ ७७ ) घ परिशिष्टप्रदत्तपद्मावत्याष्टकवृत्त्यतिरिक्तोऽस्य कृतिकलापस्त्वेवम्—

सं. ११६९ वर्षे न्यायप्रवेशवृत्तिपञ्जिका, सं. ११७३ वर्षे निशीथचूर्णिविंशोद्देशकवृत्तिः ( ले. सं. १२२६ ), नन्दीटीकादुर्गपदव्याख्या, सं. १२२२ वर्षे श्रावकप्रतिक्रमणसूत्रवृत्तिः, सं. १२२७ वर्षे जीतकल्पबृहच्चूर्णिव्याख्या, सं. १२२८ वर्षे निरयावलि- ( पञ्चोपाङ्ग ) वृत्तिः, चैत्यवन्दनसूत्रवृत्तिः, प्रतिष्ठाकल्पः, सर्वसिद्धान्तविषमपदपर्यायः, सुखबोधा समाचारी, उवसग्गहरं वृत्तिः, सिद्धचक्र-

---

" इति श्रीशीलभद्रसूरिशिष्यसुगृहीतनामधेय श्रीमद्धनेश्वरसूरिशिष्यैः सामान्यवस्थाप्रसिद्धपण्डितपार्श्वदेवगण्यभिधानैर्विशेषावस्थावाप्त श्रीचन्द्रसूरिनामभिः स्वपरोपकारार्थं दृष्ट्वा विषमपदभञ्जिकापञ्जिका परिसमाप्तेति । "

१ विलोक्यतां प्राचीनजैनलेखसङ्ग्रहप्रथमविभागे ले. २१८, २२०, २२१ ।

२ निरीक्ष्यतां (ले. ३५१) जालोरदुर्गस्थशिलालेखान्तर्गत उल्लेखः—

" श्री चन्द्रगच्छमुखमण्डनसुविहितयतितिलकसुगुरुश्रीश्रीचन्द्रसूरिरचणनलिनयुगलदुर्ललितराजहंसश्रीपूर्णभद्रसूरिचरणकमलपरिचरणचतुरमधुकरेण " इत्यादिः । सङ्ग्रहणी ( जिनभद्रीय ) वृत्तिविरचयिता शालिभद्रसूरिगुरुः थारापद्रीयगच्छीयत्वात्, सं. १२८२ वर्षे अतिमुक्तकचरित्रप्रणेता श्रीजिनपतिसूरिशिष्यः खरतरगच्छीयत्वाच्चेतो भिन्नः ।

स्तवनम् ( गेयमयं ) सङ्गीतसमयसारः, सङ्गीतरत्नाकरश्चेत्यादिः[3] ।

अपरञ्च—

मलधारिहेमचन्द्रसूरिशिष्य—सङ्ग्रहणीसूत्ररचयितृचन्द्रसूरिप्रसङ्गे दे. ला. पु. फं. द्वारामुद्रितपुस्तके लिखितं चोपाद्घातलेखकेन— "त्रिनवत्युत्तरैकादशशते ( ११९३ ) विक्रमसंवत्सरे यदैते भृगुकच्छ ( भरुच ) नगरं विभूषयाम्बभूवुः तदा नगरश्रेष्ठी धवलशाहः ससङ्घस्तान् मुनिसुव्रतस्वामिनां पवित्रं चरित्रं रचयितुं प्रार्थयाञ्चक्रे । तत एते तत् स्वीकृत्याऽऽशापल्ल्यामागत्य च श्रीमालकुलभूषणस्य नागिलनाम्नः श्रावकस्योपाश्रयमाश्रित्य तं ग्रन्थं विरचयाञ्चक्रुः । तस्य ग्रन्थस्य प्रथमं पुस्तकं पार्श्वदेवगणिना लिखितमिति श्रूयते' । विचारणीयमेतदितिहासविद्भिः ।

## ( १५ ) श्रीचन्द्राचार्यः

एतदभिधानभाजोऽनेके समजायन्त सूरिवराः, तथाहि—

(१) जेसलमेरुभाण्डागारीयग्रन्थानां सूचिपत्र (पृ. १५) निर्दिष्ट सं. १२१६ वर्षे प्राकृतनेमिचरित्रविरचयितुः श्रीहरिभद्रसूरेर्गुरुर्बृहद्गच्छीयश्रीजिनचन्द्रसूरिशिष्यः ।

---

३ मुद्रापितोऽयं त्रावणकोरनरपतिना त्रिवेन्द्रसंस्कृत सीरीझ संस्थायाम् महोपाध्याय टी. गणपतिशास्त्रिद्वारा । अस्य चादावेव द्वितीये पद्ये भोजनृपतेः सोमेश्वरमन्त्रिणश्चोल्लेखो दृश्यते । भोजराज्ञः इ. स. ११५३ रूपः, सोमेश्वरस्य इ. स. ११८३ रूपश्च सत्ताकालः प्रतीत एवं ।

४ डॅा. हल्मुतकृत जैनधर्म ( Jainism) पुस्तकस्य पृ. ११५ तमे दर्शिताविमौ ख्याततयाऽस्य । अस्ति सङ्गीतरत्नाकर इत्युपनाम चास्य सूरेः ।

(२) श्रीहर्षपुरीयगच्छालङ्कारमलधारिश्रीमदभयदेवसूरिपद-रत्नश्रीहेमचन्द्रसूरिशिष्यः सङ्ग्रहणीसूत्रविरचयिता तद्वृत्तिविधातुर्देवभद्रसूरेर्गुरुः।

(३) सं. ११८० वर्षे श्रीजिनवल्लभसूरिकृतपिण्डविशुद्धिप्रकरणस्य वृत्तिविरचयिता।

एतेषां मध्यात् कोऽत्र प्रस्तुत उपसर्गहरस्तोत्रलघुवृत्तिविधानवेधा इति न शक्नोमि निश्चेतुं साधनाभावात्।

(१६) श्रीजिनदत्तसूरिः।

आचार्यवर्यस्यास्य धवलक्कनिवासी क्षपणकभक्तो (हुंबडज्ञातीयः) वाच्छिगश्रेष्ठी पिता, बाहडदेवी माता, एकादशशतद्वात्रिंशद्वत्सरे (११३२) जन्म। एकादशशतैकचत्वारिंशत्संवत्सरे (११४१) श्रीजिनेश्वरसूरिसत्कश्रीधर्मदेवोपाध्यायैः प्रदत्तास्य दीक्षा, नाम च कृतं 'सोमचन्द्र' इति। अशोकचन्द्राचार्ये गोपस्थापना कृता, हरिसिंहाचार्येण सर्वसिद्धान्तवाचना दत्ता मन्त्रपुस्तिका च। सं. ११६९ वर्षे वैशाखकृष्णषष्ठीदिने देवभद्राचार्येण प्रादायि सूरिमन्त्रप्रदानपूर्वकमाचार्यपदम्।

मन्त्रादिसाधन—चतुःषष्टियोगिन्यादिवशीकरण—चमत्कारदर्शन-शासनप्रभावनाजनकत्रिविधकार्यकरणरूपं विस्तरेण व्यावर्णितं वृत्तमस्य खरतरगच्छीयपट्टावल्यादौ।

जिनचन्द्रसूरिनामाचार्यः स्वपदे स्थापितस्तथा पं. जिनरक्षितः १ वा. पं. शीलभद्रगणिः २ वा. पं. स्थिरचन्द्रगणिः ३, वा. पं. ब्रह्मचन्द्रगणिः ४ वा. पं. विमलचन्द्रगणि ५ वा. वरदत्तगणिः ६,

वा. भुवनचन्द्रगणिः ७ वा. वरणागगणिः ८, वा. रामचन्द्रगणिः ९ वा. मणिभद्रगणिः १० श्चेति दश वाचनाचार्याः कृताः। श्रीमती महत्तरा १, जिनमती महत्तरा २, पूर्णश्री महत्तरा ३, जिनश्री महत्तरा ४, ज्ञानश्री महत्तरा ५ चेति पञ्च विहिता महत्तराः।

संवत् १२११ वर्षे आषाढसुदिएकादश्यां अजयमेरुनगरेऽनशनं कृत्वा स्वर्गं गताः

श्रीमता विरचितानां ग्रन्थानां[2] नामसूची—

१ गणधरसार्द्धशतकम् ( प्रा. गा. १५० )
२ सन्देहदोलावली ( प्रा. गा. १५० )
३ चैत्यवन्दनकुलकम् ( प्रा. गा. २८ )
४ उपदेशरसायनम् ( अप. गा. ८० )
५ गणधरसप्ततिः ( प्रा. गा. ७० )*
६ चर्चरी ( अप. ग. ४७ )
७ कालस्वरूपकुलकम् ( अप. गा. ३२ )
८ सर्वाधिष्ठायि स्मरणस्तोत्रम् ( गा. २६ )
९ सुगुरुपारतन्त्र्यम् ( प्रा. गा. २१ )
१० विंशिका*
११ विघ्नविनाशि स्तोत्रम् ( प्रा. गा. १४ )
१२ उपदेशकुलकम्*

---

१ आचार्य बु. सा. कृत गच्छमतप्रबन्धे, मो. द. देशाई कृते 'जैनगूर्जरकविओ' द्वितीये विभागे तु 'धंधुक्क' इति जन्मस्थानं निरदेशि।

२ एतदर्थे विशेषार्थिना विलोकनीया पं. लालचन्द्रगान्धिविहिता अपभ्रंशकाव्यत्रय्याः सुविस्तृता भूमिका।

१३ व्यवस्थाकुलकम् ( प्रा. गा. ६२ )

१४ श्रुतस्तवः*

१५ अध्यात्मगीतानि*

१६ उत्सूत्रपदोद्धाटनकुलकम्

१७ दर्शनकुलकम्

## (१७) जिनपतिसूरिः।

अयं सूरिर्जिनचन्द्रसूरिशिष्यो **जिनेश्वरसूरि-जिनपालोपाध्याय-सूरप्रभवाचक-पूर्णभद्रगणि-सुमतिगण्यादीनां** गुरुः।

खरतरगच्छपट्टावल्यनुसारेणाऽस्य सूरेर्जन्म सं. १२१० वर्षे, दीक्षा सं. १२१८ वर्षे, सूरिपदं सं. १२२३ वर्षे, स्वर्गमनं च सं. १२७७ वर्षे समजनीति ज्ञायते। सं. १२३३ वर्षेऽनेन **कल्याणनगरे** श्री**महावीर**प्रतिमा प्रतिष्ठितेति तीर्थकल्पे । **जिनप्रभसूरिः**।

अत्र मुद्रापित............स्तोत्रातिरिक्ताऽस्य कृतिस्तीर्थमाला, सङ्घपट्टकटीका, पञ्चलिङ्गीप्रकरणमित्यादिका सुप्रसिद्धा।

## (१८) जिनेश्वरसूरिः।

एतन्नामभाक् समजायत सूरिद्वयम्।

१ तत्राद्यः श्री**वर्द्धमानसूरि**शिष्यः सं. १०८० वर्षे जावालिपुरेऽष्टकवृत्ति-प्रमालक्ष्म-निर्वाणलीलावत्यादिविरचयिता, अस्य गुरुभ्राता श्री**बुद्धिसागराचार्येण** विरचितं नवीनं सप्तसहस्रश्लोकसंख्याकं व्याकरणम्।

---

१ उक्तं च तदन्ते—

श्रीविक्रमादित्यनरेन्द्रकालात् साशीतिके याति समासहस्रे। (१०८०)
सश्रीकजाबालिपुरे तदाद्यं दृब्धं मया सप्तसहस्रकल्पम्॥ ११॥

२ श्रावकधर्मप्रकरणप्रणेता श्रीजिनपतिसूरिशिष्यः 'सट्ठिसय' नामप्रकरणविधातुर्मरुकोट्टनिवासिनो नेमिचन्द्रभाण्डागारिकस्य पुत्रो द्वितीयः । अस्य सं. १२४५ वर्षे सूरिपदम्, सं. १३३१ वर्षे स्वर्गमनं च खरतरगच्छीयपट्टावल्यादौ दर्शितम् ।

एतयोर्मध्यात् केन विरचितान्यत्र प्रकटीकृतानि.... स्तोत्राणीति न निर्णयः ।

## (१९) श्रीवादिदेवसूरिः ।

उपर्युक्तस्य श्रीमतो मुनिचन्द्रसूरेः शिष्यपुङ्गवोऽसौ ।

पूज्यपादस्यास्य सं. ११४३ वर्षे जन्म[1], सं. ११५२ दीक्षा, सं. ११७४ सूरिपदम्, १२२६ निर्वाणम् ।

गूर्जरेश्वरश्रीसिद्धराजजगतीपतिसदसि चतुरशीतिमहावादलब्धजयपताकं मदोद्धतं कुमुदचन्द्र[2]दिगम्बरेन्द्रं विजित्य स्वप्रतिभावैभवेन जयश्रियमशिश्रयत् पत्तने श्रीमान्, प्राणिनाय च प्रमाण–नय–तत्त्वस्वरूपज्ञापकं चतुरशीतिसहस्रश्लोकसंख्याकं यथार्थनामक स्याद्वा-

१ उक्तं च प्रभावकचरित्रे—

शिखिवेदशिवे जन्म (११४३), दीक्षा युग्मशरेश्वरे (११५२) ।
वेदाश्वशङ्करे (११७४) वर्षे सूरित्वमभवत् प्रभोः ॥२८६॥
रसयुग्मरवौ वर्षे (१२२६) श्रावणे मासि सङ्गते ।
कृष्णपक्षस्य सप्तम्यामपराण्हे गुरोर्दिने ॥२८४॥
मर्त्यलोकस्थितं लोकं प्रतिबोध्य पुरन्दरम् ।
बोधका इव ते जग्मुर्दिवं श्रीदेवसूरयः ॥२८५॥

२ चन्द्राष्टशिववर्षेऽत्र वैशाखे पूर्णिमादिने ।
आहूतौ वादशालायां तौ वादिप्रतिवादिनौ ॥१९३॥

**दरत्नाकरा**भिधानं महाग्रन्थरत्नं यदद्यापि मुद्रयति प्रोन्मादिदुर्वादिवृन्दवदनानि ।

श्रीमतः सदुपदेशवासितचेतसा **सिद्धराजजयसिंह**देवेन सं. ११८३ वर्षे पत्तनमध्ये ८५ अङ्गुलप्रमाण**ऋषभजिन**बिम्बयुग् राजविहारनाम्ना कारापितः **श्रीऋषभजिन**प्रासादः, व्यधाप्यत **सिद्धपुरे** नवीनं रम्यं चतुर्द्वारं चैत्यम्, चक्रे च सं. ११९८ वर्षे **रुद्रमहालय**-चिन्ताकारक प्र० **आलिग**कारितनगरमध्यचतुर्मुखप्रासादः राजविहाराभिधानप्रदानेन बहुग्रामग्रासार्पणेन मं० **आलिगस्य।**

आरासणे **पासिलश्रावक**कारितचैत्ये ( सं. ) **मेडता**ग्रामे **पारस**श्राद्धनिर्मापित**श्रीपार्श्वजिन**भवने च सं. ११९९ वर्षे फाल्गुनशु० १० दिने श्रीपार्श्वजिनबिम्बप्रतिष्ठापनादि व्यधायि यथाविधि सूरिसत्तमैरेभिः ।

भट्टीकाव्यवृत्तिकृत् **श्रीजयमङ्गलाचार्यः** अस्य शिष्यरत्न**रामचन्द्रसूरि**शिष्यः ।

प्रदर्शितं मयोपरि सं. १२२६ वर्षे श्रीमतो निर्वाणं तत्र—
"एकदा **कोरण्टक**स्थाने वृद्ध**श्रीदेवसूरयो** विक्रमात् सं. १२५२ वर्षे चतुर्मासी स्थिताः, तत्र मन्त्री **नाहडो** लघुभ्राता **सालिग**स्तयोः ५०० कुटुम्बानां च प्रतिबोधस्तत आश्विनसुदिपापनवम्यां तैर्गुरव उक्ताः प्रभो! अस्माकं गोत्रदेवी **चण्डिका**ऽधिष्ठात्री सा महिषं मार्गयति किं करिष्यते? गुरुभी रात्रौ **चण्डिका** प्रत्यक्षीकृत्वोक्ता त्वं पूर्वभवे श्रीपुरे **धनसार**व्यवहारिवधूः श्राविका पञ्चमीदिने धौतिकानि परिधाप्य बालं पुत्रं वञ्चयित्वा देवगृहं प्रति चलिता, पुत्रो दृष्ट्वा निर्यान्तीं त्वां

त्वत्पृष्टौ लग्नो जल्पति स्म, तदवसरे महिषस्त्र तस्तेन पातितो मारितश्च तत्र पुत्रः, पुत्रार्या त्वमपि मृता **चामुण्डा** जाता । पूर्वभववैरान्महिषानपरान् किं मारयसि ? दयां भज, शान्ता भव । साऽऽह बहुलकर्माऽहं जीववधं त्यक्तुं न शक्नोमि, तर्हि मन्त्रि**नाहड**गृहं त्यज, तया तथाकृतम्, मन्त्रिणा दृढधर्मरङ्गेण ७२ जैनविहारा **नाहडवस**हिप्रमुखाः कारिता **कोरण्टका**दिषु प्रतिष्ठिताः **श्रीदेवसू**रिभिः सं. १२५२ वर्षे। मन्त्रिणा यावज्जीवं जिनपूजनाद्यभिग्रहो गृहीतः प्राक् भोजनस्य" **उपदेशतरङ्गिणी**गतं वृत्तमिदं जनयति भ्रान्तिं, परं—

"अथो गुरुश्चन्द्रकुलेन्दुदेवकुलादिवासोदितनिर्ममत्वः ।
**समन्तभद्रः** श्रुतदिष्टशुद्धतपस्क्रियः पूर्वगतश्रुतोऽभूत् ॥२८॥
वृद्धस्ततोऽभूत् किल **देवसूरिः** शरच्छते विक्रमतः सपादे (१२५)
कोरण्टके यो विधिना प्रतिष्ठां शक्रोर्यधान्नाहडमन्त्रिचैत्ये २९

इत्येनन **श्रीमुनिसुन्दरसूरि**कृत—**गुर्वावली**गतपद्यद्वयेन '**वाराणसी**परतो गङ्गातटवास्तव्या आरण्यकाः श्री**सामन्तभद्रसूरयो** वृद्धाः सिद्धिक्षेत्रे कालकरणाय चलितास्तैर्मार्गे कोरटाग्रामे चैत्यनिवासी पं. **देवचन्द्रो**ऽतीवविद्वान् संविज्ञ औत्सर्गिको निजोपसम्पदाऽनुगृह्य स्वे पदे स्थापितः स **वृद्धदेवसूरि**तस्तत्र नाहडामात्येन देवकुलं कारितं श्रीऋषभबिम्बप्रतिष्ठितं तैः सं विक्रमार्कात् १२५, तथा मेदपाटे देशे आघाटनगरे **नाहडराजानं** प्रतिभाऽतिशयेन प्रतिबोध्य तत्र **नाहडवसही**ति देवकुलं कारितं प्रतिष्ठितं सं. १५० " इति **भावदेव**सूरिशिष्य**वामेलदेव**कृतांतवाच्यप्रान्तगतगुर्वावलीस्थोल्लेखेन च **नाह-**

**डमन्त्रि**प्रतिबोधकाः कोरण्टके प्रतिष्ठाकारकाश्च ते **समन्तभद्र**सूरि-शिष्या **वृद्धदेवसूरयो** भिन्ना एतस्मात्। **उपदेशतरङ्गिण्यां** संवदङ्केषु लेखकप्रमादस्ततो नाऽत्र दोषः ॥

## (२०) श्रीहेमचन्द्राचार्यः—

गूर्जरेश्वरश्री**कुमारपालभूपाल**प्रतिबोधकः सूरिपुरन्दरोऽसौ। **धन्धुकनिवासी** मोढज्ञातियो वणिक् श्रेष्ठिवर**श्चाचिगो**ऽस्य पिता। शीलादिगुणवाहिनी **पाहिनी** माता। पूर्णतल्लगच्छीयाः **श्रीदेवचन्द्र-सूरयः** श्रीमतो गुरवः।

अत्रभवतः सं. ११४५ वर्षे जन्म[1], सं. ११५० वर्षे दीक्षा सं. ११६६ सूरिपदम् सं. १२२९ वर्षे स्वर्गमनं च बभूव। वि-शेषचरित्रजिज्ञासुभिर्विलोकनीयाः प्रभावकचरित्र–चतुर्विंशतिप्रबन्ध-प्रभृतयो ग्रन्थाः।

श्री **जिनदत्तसूरि–वादिदेवसूरि**–श्री**हेमचन्द्राचार्याणां** जन्म-दीक्षासमय–स्थलादिविषयकं समवक्तव्यताकं कोष्ठकं प्रकटीकृतं गान्धी-त्युपाह्वेन **पं.** लालचन्द्रेण गायकवाडओरीयन्टलइन्स्टीटयुटमुद्रापिताऽपभ्रंशकाव्यत्रयीभूमिकायां तच्च दीयतेऽत्र पुनः सोपयोगित्वाद् वाचक-मनोविनोदाय—

---

१ शरवेदेश्वरे (११४५) वर्षे कार्तिके पूर्णिमानिशि।
जन्माभवत् प्रभोर्व्योमबाणशम्भौ (११५०) व्रतं तथा ॥८४८॥
रसषट्केश्वरे (११६६) सूरिप्रतिष्ठा समजायत।
नन्दद्वयरवौ (१२२९) वर्षेऽवसानमभवत् प्रभोः ॥८४९॥

| | | जिनदत्तसूरेः | वादिदेवसूरेः | हेमचन्द्रसूरेः |
|---|---|---|---|---|
| १ | जन्मसंवत् | ११३२ | ११४३ | ११४५ |
| २ | जन्मस्थलम् | धवलक्ककपुरम्(गूर्जरदेशे) | मद्दाहृतम्(गूर्जरदेशे) | धन्धूकपुरम् (गूर्जरदेशे) |
| ३ | जन्मनाम | ० | पूर्णचन्द्रः | चङ्गदेवः |
| ४ | ज्ञातिः | क्षपणकभक्ता(हुंबडवणिक्) | प्राग्वाटवणिक् | मोढवणिक् |
| ५ | पिता | वाछिगः | वीरनागः | चच्चः (चाचिगः) |
| ६ | माता | बाहडदेवी | जिनदेवी | चाहिणी (पाहिनी) |
| ७ | दीक्षासंवत् | ११४१ | ११५२ | ११५० (४) |
| ८ | दीक्षानाम | सोमचन्द्रः | रामचन्द्रः | सोमचन्द्रः |
| ९ | दीक्षागुरुः | धर्मदेवोपाध्यायः | मुनिचन्द्रसूरिः | देवचन्द्रसूरिः |
| १० | गच्छनाम | विधिपथः (खरतरः) | बृहद् (वड) गच्छः | पूर्णतल्लगच्छः |
| ११ | सूरिपदसंवत् | ११६९ | ११७४ | ११६६ |
| १२ | परिचितनृपः | अर्णोराजः | सिद्धराजः | सिद्धराज-कुमारपालौ |
| १३ | स्वर्गमनसंवत् | १२११ | १२२६ | १२२९ |
| १४ | स्वर्गमनस्थलम् | अजयमेरुदुर्गः | ० | अणहिलपाटक(पत्तन)म् |
| १५ | पट्टधरः | जिनचन्द्रसूरिः | भद्रेश्वरसूरिः | रामचन्द्रसूरिः |
| १६ | मुख्यकृतिनाम | गणधरसार्धशतकम् | स्याद्वादरत्नाकरः | सिद्धहेमशब्दानुशासनम् |

अद्यावधि प्रसिद्धिमागता सुरिशिरोमणेरस्य कृतिततिस्त्वेवम् ।

| | | |
|---|---|---|
| सिद्धहेमशब्दानुशासनम्[1] | ( सवृत्ति ) | परिशिष्टपर्व |
| काव्यानुशासनम् | ,, | अर्हन्नीतिः |
| छन्दोऽनुशासनम् | ,, | सप्तसन्धानमहाकाव्यम् |
| लिङ्गानुशासनम् | ,, | द्व्याश्रयमहाकाव्यम् (सं.) |
| वादानुशासनम् (?) | ,, | कुमारपाल ,, (प्रा.) |
| धातुपारायणम् | | वीतरागस्तोत्रम् |
| महार्णवन्यासः | | महादेवस्तोत्रम् |
| त्रिषष्टिशलाकापुरुषचरित्राणि | | अर्हन्नामसहस्रसमुच्चयः |
| अन्ययोगव्यवच्छेदद्वात्रिंशिका | | प्रमाणमीमांसा |
| अयोगव्यवच्छेदिका द्वात्रिंशिका | | योगशास्त्रम् (सवृत्ति) |
| अभिधानचिन्तामणिः ( सवृत्तिः ) | | देशीयनाममाला (सवृत्तिः) |

---

१ व्याकरणं पञ्चाङ्गं प्रमाणशास्त्रं **प्रमाणमीमांसा** ।
**छन्दोऽलङ्कृतिचूडामणी** च शास्त्रे विभुर्व्यधित ॥
**एकार्थानेकार्था देश्या निर्घण्ट** इति च चत्वारः ।
विहिताश्च नामकोशा भुवि कवितानट्युपाध्यायाः ॥
त्र्युत्तरषष्टि**शलाका**नरेशवृत्तं गृहिव्रतविचारे ।
अध्यात्म**योगशास्त्रं** विदध जगदुपकृतिविधित्सुः ॥
लक्षणसाहित्यगुणं विदधे च **द्व्याश्रयं** महाकाव्यम् ।
चक्रे विंशतिमुच्चैः स **वीतरागस्तवानां** च ॥
इति तद्विहितग्रन्थसङ्ख्यैव नहि विद्यते ।
नामापि न विदन्त्येषां मादृशा मन्दमेधसः ॥

—प्रभावकचरित्रे श्लो. ८३२ तः ८३६

अनेकार्थसंग्रहः " निघण्टुः ( सशेषः )

श्रीमतः शिष्यादिपरिचयः—

**महेन्द्रसूरिः**—

अनेन **सूरिणा**ऽनेकार्थकैरवाकरकौमुदीसञ्ज्ञिता । हैमानेकार्थसंग्रह-टीका गुरुनाम्नैव प्रतिष्ठिता ।

**श्रीसोमप्रभाचार्येण** वि. सं. १२४१ वर्षे समापितो जिनधर्म-प्रतिबोधापरनाम **कुमारपाल**प्रतिबोधग्रन्थश्च श्राविा ।

**गुणचन्द्रगणिः**—

अनेन साकं कवि**रामचन्द्रेण**स्वोपज्ञद्रव्यालङ्कारवृत्ति—नाट्यदर्प-णविवृत्ती विहिते । एतेनाऽपि श्री**सोमप्रभाचार्य**प्रणीतः **कुमारपाल**-( जिनधर्म ) प्रतिबोधः श्रुत आसीत् ।

**रामचन्द्रसूरिः**—

सूरिवरोऽयं **श्रीहेमचन्द्राचार्येण** स्वपदप्रतिष्ठितो गुणाधिकः शिष्यः । उपर्युक्तस्य **श्रीगुणचन्द्रगणेः** परमप्रीतिपात्रं समविद्यागुण-शीलः । विशेषपरिचितिं तु दास्यामि यथास्थानमग्रतोऽस्य (पृ.४४) ।

---

१ **श्रीहेमसूरि**शिष्येण **श्रीमहेन्द्रसूरिणा** ।
भक्तिनिष्ठेन टीकेयं तन्नाम्नैव प्रतिष्ठिता ॥
—अनेकार्थकैरवाकरकौमुदी ।

२–३ शशिजलधिसूर्यवर्षे (१२४२) शुचिमासे रविदिने सिताष्टम्याम् ।
जिनधर्मप्रतिबोधः क्लृप्तोऽयं गूर्जरेन्द्रपुरे ।
श्री**हेमसूरि**पदपङ्कजहंसैः श्री**महेन्द्र**मुनिपैः श्रुतमेतत् ।
**वर्धमानगुणचन्द्र**गणिभ्यां साकमाकलितशास्त्ररहस्यैः ॥
—कुमारपालप्रतिबोधप्रशस्तिः ।

**वर्द्धमानगणिः**—

अयमपि पूर्वोक्तं प्रतिबोधग्रन्थमश्रौषीत् । **कुमारविहार**प्रशस्ति-काव्यव्याख्यानादिकमनेन निर्ममे[1] ।

**देवचन्द्रमुनिः**—

चन्द्रलेखाविजयप्रकरणमनेन प्रणीतम् ।

**यशश्चन्द्रगणिः**—

वि. सं. १३६१ वर्षे **श्रीमेरुतुङ्गसूरि**णा विरचिते प्रबन्धचि-न्तामणौ ( सं. ४, पृ. २०६, २३३ ) एतस्य नामोपलभ्यते ।

**उदयचन्द्रः**—

अस्योपदेशाद् **देवेन्द्रसूरि**शिष्यः मनीषी **कनकप्रभो** हेमन्यासस.रं समुद्धरत्[2] ।

---

१ **हेमचन्द्रसूरि**शिष्येण **वर्द्धमानगणि**ना **कुमारविहार**प्रशस्तौ काव्येऽस्मुध्मिन् पूर्वं षडर्थे कृतेऽपि कौतुकात् षोडशोत्तरं शतं व्याख्यानां चक्रे । P. P. ३, ३१६ एतस्य मुद्रणार्हा पुस्तिका मया कृताऽस्ति ।

२ भूपालमौलिमाणिक्यमालालालितशासनः ।
दर्शनषट्ककनिस्तन्द्रो **हेमचन्द्रो** मुनीश्वरः ॥
तेषा**मुदयचन्द्रो**ऽस्ति शिष्यः संख्यावतां वरः ।
यावज्जीवमभूद् यस्य व्याख्या ज्ञानामृतप्रपा ॥
तस्योपदेशाद् **देवेन्द्रसूरि**शिष्यलवो व्यधात् ।
न्याससारसमुद्धारं मनीषी **कनकप्रभः** ॥

—हैमशब्दानुशासनबृहन्न्यासप्रान्ते ।

**बालचन्द्रः**—

अयं **श्रीरामचन्द्रसूरेः** प्रतिस्पर्धी, **पूर्वमजयपालनरेशस्य** मित्रमासीत् । **'स्नातस्याप्रतिमस्य'** इत्यादिका प्रसिद्धा स्तुतिरेतस्य कृतिरूपेति प्रघोषः ।

इतरेऽप्यविदिता अनेके सम्भवेयुः श्रीमतः शिष्याः इतिहासरसिकसज्जनानां प्रयत्नेन सुविदिता भविष्यन्ति ।

## (२१) श्रीरामचन्द्रसूरिः—

असौ **श्रीहेमचन्द्राचार्य**शिष्यः । बाल्येऽपि शीघ्रकवित्वशक्तिं परीक्ष्य प्रसन्नेन **श्रीसिद्धराजजयसिंहदेवेना**ऽस्मै **'कविकटारमल्ल'** बिरुदं सर्वसमक्षमुपदीकृतमित्यवसीयते वि. सं. १५१७ वर्षे **भोज**प्रबन्धादिप्रणेतुः श्रीरत्नमन्दिरगणेरुपदेशतरङ्गिण्यन्तर्गतोल्लेखतः- " तथा रैवतोद्धारक**श्रीसज्जन**दण्डनायक—२४ प्रासादकारक मं० **आभड**—देवगुरुभक्त मं० **आलिग** मं० **शान्तू** ९९ लक्षहाटकस्वामी श्री० **छाडा**—षट्कोटि द्रव्यस्वामि **कुबेरदत्ता।द**—कोटिध्वजाष्टदशशतव्यवहारि**शाकम्भरीपति-अर्णोराज-लाटाधिप**गजमांगूझालकप्रभृति—७२ राणकपरिकरितश्री**जयसिंह**देवेन ग्रीष्मे क्रीडोद्यानं गतेन मार्गेमिलितः **श्रीरामचन्द्र**क्षुल्लः पृष्टः कथं ग्रीष्मे दिवसा गुरुतराः ? । **रामचन्द्रः** प्राह—

देव ! श्रीगिरिदुर्गमल्ल ! भवतो दिग्जैत्रयात्रोत्सवे
धावद्वीरतुरङ्गनिष्ठुरखुरक्षुण्णक्ष्मामण्डली ।

वातोद्धूतरजोमिलत्सुरसरित्सञ्जातपङ्कस्थली—
दूर्वाचुम्बनचञ्चुरा रविहयास्तेनातिवृद्धं दिनम् ॥

चमत्कृतेन **सिद्धराजे**नोक्तम् सद्यो नगरं वर्णय पत्तनाभिधम्–

एतस्याम्य पुरस्य पौरवनिताचातुर्यतो निर्जिता
मन्ये नाथ ! **सरस्वती** जडतया नीरं वहन्ती स्थिता ।
कीर्तिस्तम्भमिषोच्चदण्डरुचिरामासूत्र्य वाहावली–
तन्त्रीकां गुरुसिद्धभूपतिसरस्तुम्बीं निजां कच्छपीम् ॥

तुष्टेन सर्वसमक्षं '**कविकटारमल्ल**' इति बिरुदं दत्तम् ॥

**श्रीसिद्धराज**भूपकारित**सहस्रलिङ्ग**सरोवरस्य **श्रीपालक**विना विरचितप्रशस्तावन्यविदुषामगोचरं दूषणद्वयं दर्शितं विपश्चितानेने- त्यवगम्यते प्रबन्धचिन्तामणितः—

" अथ **श्रीपालक**विना सहस्रलिङ्गसरोवरस्य रचितायां प्रशस्ति- पट्टिकायामुत्कीर्णायां तत्स्थकाव्यमिदम्—

न मानसे माद्यति मानसं मे पम्पा न सम्पादयति प्रमोदम् ।
अच्छोदकाच्छोदकमत्र सारं विराजते कीर्तितसिद्धभर्तुः ॥

तत्प्रशस्तिशोधनाय सर्वदर्शनेष्वाहूयमानेषु **श्रीहेमचन्द्राचार्यैः** सर्वविद्वज्जनानुमते प्रशस्तिकाव्ये भवता वैदग्ध्यं किमपि न प्रकाश्य- मित्युक्त्वा पण्डित**रामचन्द्रो**ऽनुशिष्य तत्र प्रहितः ।

ततः सर्वविद्वद्भिः शोध्यमानायां प्रशस्तौ नृपोपरोधात् **श्रीपालक**- वैदक्ष्यदाक्षिण्याच्च सर्वेषु काव्येषु मन्यमानेषु—

' कोशेनापि युतं दलैरुपचितं नोच्छेत्तुमेतत् क्षमं
स्वस्यापि स्फुटकण्टकव्यतिकरं पुंस्त्वं च धत्ते न हि ।

एकोऽप्येष करोति कोशरहितो निष्कण्टकं भूतलं
मत्वैवं कमला विहाय कमलं यस्यासिमाशिश्रियत् ॥ '

विशेषेणास्मिन् काव्ये प्रशस्यमाने श्री**सिद्धराजेन** पृष्टः **श्रीरामचन्द्रः** ' चिन्त्यमेतत् ' इत्यवादीत् । अथ तैरेव सर्वैरनुयुक्तः । एतस्मिन् काव्ये सैन्यवाचको दलशब्दः, कमलशब्दस्य नित्यक्लीबत्वमिति दूषणद्वयं चिन्त्यम् । ततः सर्वानपि पण्डितानुपरुध्य दलशब्दो राजसैन्यार्थे प्रमाणीकारितः । कमलशब्दस्य तु लिङ्गानुशासनसिद्धं नित्यक्लीबत्वं केन निर्णीयत इति ' पुंस्त्वं च धत्ते नवा ' इत्यक्षरभेदः कारितः । "

अनेन कौमुदीमित्रा गन्द–निर्भयभीमव्यायोगादिप्रस्तावनायां ' प्रबन्धशतकर्तुर्महाकवे **रामचन्द्रस्य** ' इति विशेषणमात्मनि प्रयोजयता स्वस्य प्रबन्धशतकर्तृत्वं प्रकटं पर्यचायि । किन्तु साम्प्रतं निम्नलिखिता एव प्रबन्धा दृग्गोचरीभवन्ति–

१ नलविलासनाटकम्[1]
२ कौमुदीमित्राणन्दप्रकरणम्[2]
३ मल्लिकामकरन्दप्रकरणम्*
४ सत्यहरिश्चन्द्रनाटकम्
५ यादवाभ्युदयम्*
६ राघवाभ्युदयम्*
७ रघुविलासम्*
८ रोहिणीमृगाङ्कप्रकरणम्*

---

१ गायकवाड ऑरीयन्टल इन्स्टीस्युट (वडोदरा) द्वारा प्रसिद्धम् ।
२ भावनगरस्थया श्री आत्मानन्दसभया प्रकाशितम् ।

९ वनमालीनाटिका*
१० निर्भयभीमव्यायोगः[1]
११ सुधाकलशः*
१२ द्रव्यालङ्कारः ( सवृत्तिकः )*
१३ नाट्यदर्पणम् ( सविवरणम् )[2]
१४ यदुविलासम्
१५ कुमारविहारशतकम्[4]
१६ हेमबृहन्न्यासः ।*
१७ युगादिदेवद्वात्रिंशिका++
१८ व्यतिरेकद्वात्रिंशिका++
१९ प्रसादद्वात्रिंशिका++
२० अपन्हुतिद्वात्रिंशिका++
२१ अर्थान्तरन्यासद्वात्रिंशिका++
२२ जिनस्तुतिद्वात्रिंशिका ++
२३ दृष्टान्तगर्भा जिनस्तुतिद्वात्रिंशिका ++
२४ शान्तिद्वात्रिंशिका++
२५ भक्त्यतिशयद्वात्रिंशिका++
२६ आदिदेवस्तवः++

१ श्री यशोविजय जैन ग्रन्थमालाया प्रसिद्धिं नीतः ।
२ मुद्रापितमिदं गा. ओ. सिरीझद्वारा (वडोदरा) ।
३ सूचितं कविना स्वयं रघुविलासे ।
४ आत्मानन्दसभा (भावनगर) तः प्रसिद्धम् ।

२७ नेमिस्तवः++

२८ मुनिसुव्रतदेवस्तवः++

२९–४४ षोडशिकाः साधारणजिनस्तवाः (१६)++

४५ जिनस्तोत्राणि*

प्राचीनेतिहासगवेषणातिकुशलाः श्रीमन्तः **कल्याणविजय**मुनिप्रवराः "संवत् १२२१ **श्रीजावालिपुरीयकाञ्चनगिरिगढस्योपरि** प्रभुश्री**हेमसूरि**प्रबोधितगूर्जरधराधीश्वरपरमार्हतचौलुक्यमहाराजाधिराजश्री**कुमारपाल**कारिते श्रीपार्श्वनाथसत्कप्रभुबिम्बसहिते श्रीकुमारविहाराभिधाने जैनचैत्ये सद्विधिप्रवर्त्तनाय बृहद्गच्छीयवादीन्द्रश्री**देवाचार्या**णां पक्षे आचन्द्रार्कं समर्पिते संवत् १२४२ वर्षे एतद्देशाधिपचाहमानकुलतिलकः महाराजश्री**समरसिंह**देवादेशेन भां. **पासुपुत्र** भां. **यशोवीरेण** समुद्धृते श्रीमद्राजकुलादेशेन श्री**देवाचार्य**शिष्यैः श्री**पूर्णदेवाचार्यैः** संवत् १२५६ ज्येष्ठ शुद ११ श्री**पार्श्वदेवे** तोरणादीनां प्रतिष्ठाकार्ये कृते मूलशिखेर च कनकमयध्वजदण्डस्य ध्वजारोपणप्रतिष्ठायां कृतायां संवत् १२६८ दीपोत्सवदिने अभिनवनिष्पन्नप्रेक्षामण्डपे श्री**पूर्णदेव**सूरिशिष्यैः **श्रीरामचन्द्राचार्यैः** सुवर्णमयकलशारोपणप्रतिष्ठा कृता । शुभं भवतु ॥" इत्येतच्छिलालेखानुसारेण, चैत्यं हि बृहद्गच्छीय**देवसूरि**सन्तानीयानां व्यवस्थायामासीदित्यनेन च युगादिदेवद्वात्रिंशिकादीनि स्तोत्राणि श्री**पूर्णदेव**सूरिशिष्य**रामचन्द्र**सूरिप्रणीतानि, न तु श्री**हेमचन्द्राचार्य**शिष्यश्री**श्रीरामचन्द्र**सूरिविरचितानीति मन्वते,

‡ अंतच्चिन्हाङ्कितानि विलोकनीयान्यत्रैव मुद्रापितानि ।

५ वटपद्रीय झवेरी **अंबालाल नानाभाई** श्रेष्ठिगृहसङ्ग्रहे प्रतिः ।

परन्तु सत्यहरिश्चन्द्र–निर्भयभीमव्यायोगादिषु यथाऽस्य स्वातन्त्र्यमुद्राऽस्ति तथा षोडशिकास्तवादावपि कचित् कचिद् दृश्यते। तथाहि—

स्वतन्त्रो देव! भूयासं सारमेयोऽपि वर्त्मनि।
मा स्म भूवं परायत्तस्त्रिलोकस्यापि नायकः॥
स्वातन्त्र्यश्रीपवित्राय परमब्रह्ममूर्तये।
साधिताशेषसाध्याय नमो भगवतेऽर्हते॥

अपरञ्च—प्रभावकचरित्रादौ श्रीरामचन्द्रसूरेर्दृष्टिविनाशो व्यावर्णितोऽस्ति, स एव ध्वन्यते—

स्वामिन्ननन्तफलकल्पतरोऽभिरामचन्द्रावदातचरित्राञ्चितविश्वचक्र!। शक्रस्तुतांह्रिसरसीरुह! दुःस्थसार्थे देव! प्रसीद करुणां कुरु देहि दृष्टिम्॥ इत्यादिपद्यैः षोडशिकास्तोत्रादिष्वपि।

इत्येताभ्यां कारणाभ्यां प्रबन्धशतप्रणेतुः श्रीरामचन्द्रस्यैवाऽमूनि कृतिरूपाणीति मे मतम्॥

## (२२) श्रीपालकविः—

श्रीजयसिंहनरेन्द्रेण कवीन्द्रः, भ्रातेति च व्याहृतः प्राग्वाटज्ञातीयः श्रावकपुङ्गवोऽयम् यदाहुः श्रीसोमप्रभाचार्याः सुमतिनाथचरित्र–कुमारपालप्रतिबोधप्रशस्तौ–

प्राग्वाटान्वयसागरेन्दुरसमप्रज्ञः कृतज्ञः क्षमी
वाग्मी सूक्तिसुधानिधानमजनि श्रीपालनामा पुमान्।
यं लोकोत्तरकाव्यरञ्जितमतिः साहित्यविद्यारतिः
श्रीसिद्धाधिपतिः कवीन्द्र इति च भ्रातेति च व्याहरत्॥

एकदिनप्रगीतमहाप्रबन्धेन षड्भाषाकविचक्रवर्तिनानेन कलिकालसर्वज्ञश्री हेमचन्द्रसूरिप्रणीतं द्विसन्धानमहाकाव्यं समशोधि । उक्तंच तत्प्रशस्तौ—

एकाहनिष्पन्नमहाप्रबन्धः श्रीसिद्धराजप्रतिपन्नबन्धुः ।
श्रीपालनामा कविचक्रवर्ती सुधीरमुं शोधितवान् प्रबन्धम् ॥

" प्राग्वाटान्वयवंशमौक्तिकमणेः श्रीलक्ष्मणस्यात्मजः
श्रीश्रीपालकवीन्द्रबंन्धुरमलप्रज्ञालतामण्डपः ।
श्रीनाभेयजिनांह्रिपद्ममधुपस्त्यागाद्भुतैः शोभितः
श्रीमान् शोभित एष सद्यविभदः स्वौर्णौकमासेदिवान् ॥

इत्यनेन श्रीजिनविजयसम्पादितप्राचीनजैनलेखसंग्रहद्वितीयविभागान्तर्गत (२७१) लेखाल्लक्ष्मणाख्योऽस्य पितेति ध्वन्यते ।

श्रीसोमप्रभाचार्येण सुमतिनाथचरित्र—कुमारपालप्रतिबोधयो रचना एतच्छ्रीपालकविसूनोः कुमारपालभूपालप्रीतिपात्रस्य सिद्धपालकवेर्वसतावकारीति प्रतिपाद्यते तेनैव सूरिणा निजकृतिप्रान्ते—

" सूनुस्तस्य कुमारपालनृपतिप्रीतेः पदं धीमता—
मुत्तंसः कविचक्रमस्तकमणिः श्रीसिद्धपालोऽभवत् ।
यं व्यालोक्य परोपकारकरुणासौजन्यसत्यक्षमा—
दाक्षिण्यैः कलितं कलौ कृतयुगारम्भो जनैर्मन्यते ॥
तस्य पौषधशालायां पुरेऽणहिलपाटके ।

१ तनुजन्मनाऽस्य विजयपालेन व्यरचि द्रोपदीस्वयंवरनाटकम् ।

निष्प्रत्यूहमिदं प्रोक्तं परार्थान्तं........ ॥

—सुमतिनाथचरित्रान्ते ।

पुत्रस्तस्य **कुमारपाल**नृपतिप्रीतेः पदं धीमता–
मुत्तंसः कविचक्रमस्तकमणिः श्री**सिद्धपालो**ऽभवत ।
क्लृप्तं तद्वसताविदं किमपि यच्चायुक्तमुक्तं मया
तद्युष्माभिरिहोच्यतामिति बुधा ! वः प्राञ्जलिः प्रार्थये ॥

—कुमारपालप्रतिबोधप्रान्ते ।

" तथा **सिद्धभूपालः** स्वकृतपादद्वयसमस्यापूरणं सर्वाङ्गशृङ्गारं रत्नमुद्रादिकं **श्रीपालकवये** ददौ "इत्येवं नैकवेलायां **सिद्धराज**कार्त्तिदानप्रसङ्गे स्मरत्यमुं श्री**रत्नमन्दिर**गणिः उपदेशतरङ्गिण्याम् । चतुर्विंशतिजिनस्तवनम्, सहस्रलिङ्गसरोवरस्य प्रशस्तिश्चानेन विनिर्ममे ।

## (२३) अमरचन्द्रसूरिः ।

अणहिल्लपत्तनासन्नवर्त्तिनि **वायट**महास्थाने परपुरप्रवेशादिविद्यासम्पन्नश्री**जीवदेवसूरि**सन्ताने **जिनदत्तसूरेः** शिष्योत्तमोऽयं प्रज्ञाल-

---

१ अस्य गुणदोषस्वरूपं तु व्यावर्णितं श्री**रामचन्द्रसूरि**वृत्तान्तेऽस्माभिः ।

२ परकायप्रवेशादिवृत्तमस्य विज्ञेयं पद्मानन्दमहाकाव्यप्रशस्तेः ।

३ व्यावर्णितं वृत्तमस्य सविस्तरं चतुर्विंशतिप्रबन्धे ( प्रबन्धकोषे ) तथापि दीयतेऽत्र **रत्नशेखरसूरि**विरचिताचारप्रदीपान्तर्गतं किञ्चित्—

" वायटमहास्थाने श्रेष्ठि**धर्मदेव**स्याद्यः सुतो **महीधरो** देशान्तरभ्रमी दिक्पटैर्दीक्षितः सूरिपदे न्यस्तः परकायप्रवेशादिविद्याश्च दत्ताः, द्वितीयः सुतो **महीपालः** भ्रातृवियोगादात्तदीक्षः श्वेताम्बराचार्यो जज्ञे । द्वयोर्मिलने मात्रा भ्रात्रा चाहाराशुद्ध्यायुक्त्या बोधितो दिगम्बराचार्यः श्वेताम्बरो जज्ञे । सूरित्वे **जीवदेवे**तिति नाम । स यतिपञ्चशतीपरिवारो व्याख्याक्षणागत-

चूडामणिः ' **वेणीकृपाण** ' इत्युपनामभृत् ।

अस्य च **पद्ममन्त्रि**सदनैकदेशे **अरिसिंह**कविराजप्रदत्त**सरस्वती**-मन्त्राराधन-वरप्राप्ति-**वीसलदेव**नृपतिविद्वद्वर्गोद्गीर्णसमस्यापूरणप्रभृति सविस्तरं वृत्तान्तं व्यावर्णितं श्री**राजशेखरसूरि**भिः प्रबन्धकोषे, प्रसिद्धिमागतं च **बालभारत**-स्यादिशब्दसमुच्चय-पद्मानन्दमहाकाव्य-भूमिकास्वतः पुनर्नात्र निरूप्यते तत् । विशेषार्थिभिर्द्रष्टव्यानि तान्येव स्थलानि ।

---

स्वजिह्वापर्यङ्कबन्धिवाचकजिह्वास्तम्भकसाध्वीशिरश्चूर्णक्षेपवशीकारकदुष्टयोगिनमासनस्तम्भनादिना न्यग्रहीत् । तत्रैव **मल्लः** श्रेष्ठी सूर्यपर्वणि कृतधर्मार्थ-लक्षद्रव्यसङ्कल्पोऽग्निकुण्डे यज्ञं कारयन् उपरि वृक्षात् धूमाकुलं महासर्पं विप्रैः पर्यस्याग्निकुण्डे क्षिप्तं दृष्ट्वा हाहाकारं कुर्वंस्तैरुक्तः-अत्र मृताः स्वर्यान्ति, तथापि तेन प्रायश्चित्ते प्रार्थिते सौवर्णं द्विगुणमहिं कृत्वा देहीति विप्रैरुक्तं, तेन तथा कृतेऽभिमन्त्र्य विभजनार्थं तस्य छेदे भृशं खिन्नो यागं विससर्ज। धर्मार्थी साधुद्वयं भिक्षाग्रहणे यतमानं दृष्ट्वा साधूक्त्या श्री**जीवदेवसूरि**पार्श्वं गतः तैर्बोधितः श्राद्धो जज्ञे सङ्कल्पितद्रव्यलक्षार्थं प्रागर्घ्यितं विप्रादौ अर्द्धं यूयं गृह्णीतेति तेनोक्ते गुरुभिस्तद्द्रव्येण प्रासादाद्यकारि । तद्द्वेषाद् द्विजैर्म्रियमाणा गौरर्हच्चैत्यगर्भगृहे नीता मृता च । गुरुभिरन्तर्मठमासनस्थैः स्वाङ्गरक्षार्थं मुनीन् मुक्त्वा कुम्भकेन ध्यानं धृत्वा विद्यया तद्देहे प्रविश्य सा ब्रह्मचैत्यगर्भगृहे प्रवेशिता, द्विजैः पदोर्लगने मद्गच्छे नव्याचार्यो हैमसुपवीतं दत्त्वा ब्रह्मचैत्यं ब्राह्मणैरभिषेच्य सोत्सर्वामित्याद्युक्तिस्वीकृतौ ततोऽपि निष्कासिता । आयुःप्रान्ते एकखण्डमस्मत्कपालं लात्वा स योगी जिनमतोपद्रवान् कर्तेति तन्निर्जीवं भङ्क्तव्यमेवेत्याप्ताय उक्त्वा ते स्वर्ययुः । तेन तथा चक्रे स योगी कपटशुचा तत्रागतः कपाल भग्नं दृष्ट्वा करौ घृष्ट्वा प्राह-विक्रमार्कस्य मम चैकखण्डं कपालं विद्यासिद्धिहेतुस्तत् तु न प्राप्तम् । स व्योम्ना मलयाद्यानीतश्रीखण्डागुरुभिर्गुरुदेहदाहं ददे ॥ "

समनस्कमनश्चमत्कारिण्यः कृतयस्त्वस्य—

१ पद्मानन्दमहाकाव्यम्। २ बालभारतमहाकाव्यम्।

३ काव्यकल्पलता (कविशिक्षा) ४ स्यादिशब्दसमुच्चयः

५ कलाकलापः* ६ छन्दोरत्नावली, मुक्तावली च।*

सत्तासमयस्तु **वीसलदेव** नरेश्वर—मन्त्रि **वस्तुपालादि**समकालीनत्वात् सुनिश्चित एव त्रयोदशशताब्दीरूपः।

वरिवर्ति पत्तनस्थ टांगडियावाडान्तर्गतजिनालये प्रतिमाऽस्य।

---

४ विवेकविलासादिप्रणेता।

५ व्यावर्णितं चात्रैकोनविंशतिसर्गात्मके श्रीऋषभजिनचरिते। मुद्राप्यतेऽधुना **गायकवाड ओरीयेन्टल इन्स्टीटयुट** (वडोदराद्वारा)

६ प्रसिद्धिमानीतमिदं निर्णयसागर मुद्रणालयाधिकारिणा काव्यमालायम्।

७ प्रसिद्धेय चोखंवा ग्रन्थमालायाम्

८ प्रकटीकृतोऽय पं. **लालचन्द्भगवानदास**गान्धीमहाशयेन।

९ उक्तं च कीर्तिदानप्रसंगे उपदेश तरङ्गिण्यां **रत्नमन्दिरगणिना**—

"**एकदाऽमरचन्द्रमुनौ** पर्षदि तत्कालकृतनव्यश्लोकैर्व्याख्यानं कुर्वति द्विपदी प्रोक्ता। '**अस्मिन्नसारे संसारे सारं सारङ्गलोचना।**' वन्दनार्थमागच्छता द्वारस्थेन मन्त्रिणा श्रुता। अहो रागी स्त्रीकथाकृद् मुनिः इति ध्यात्वा न वन्दितः ज्ञातमन्त्रिचित्ताभिप्रायेणा**मरचन्द्रेणो**क्तम्—

'**अस्मिन्नसारे संसारे सारं सारङ्गलोचना।**
**यत्कुक्षिप्रभवा एते वस्तुपाल भवादृशा॥**'

**तुष्टेन** पादोपवेशनं कारितम्।

१० तस्यायं लेखः—"संवत् १३४९ चैत्रवदि ६ शनौ श्रीवायटीयगच्छे श्री**जिनदत्त**सूरिशिष्यपण्डितश्री**अमरचन्द्रमूर्त्तिः** पण्डित **महेन्द्र**शिष्य**मदनचन्द्रा**ख्येन कारिता। शिवमस्तु।"

( प्राचीनजैनलेखसंग्रहद्वितीयविभागे लेखाङ्कः ५२३ )

## (२४) कनकप्रभः ।

एतदभिधानधारकं बभूव मुनिपुङ्गवद्वयम् ।

तत्राद्यश्चान्द्रगच्छीयश्रीधर्मसूरिपट्टपरम्परायां श्रीदेवचन्द्रसूरि-विरचित सिद्धहैमशब्दानुशासनलघुन्यासविधाता ।

२ समरादित्यसंक्षेपप्रव्रज्याविधानवृत्त्यादिविरचयितुः प्रद्युम्न-सूरेर्गुरुः श्रीदेवानन्दसूरिशिष्यः ।

एतयोः कतरस्य कृतिरिह पृ. २४ मुद्रितं साधारणजिनस्तवन-मिति साधनाभावाद् सन्दिग्धमेव ।

## (२५) नरचन्द्रसूरिः ।

आचार्यवर्योऽयं हर्षपुरीयगच्छीयमलधारिश्रीदेवप्रभसूरिशिष्यस्त्र-योदशशताब्दयुत्तरार्धे विद्यमान आसीत् । सुप्रसिद्धमन्त्रिवर्यवस्तुपाला-भ्यर्थनयाऽनेन कथारत्नसागरो निरमायि । एतद्व्यतिरिक्ताऽनेर्घरा-घवटिप्पनकम् , न्यायकन्दलीटिप्पनकम्, । ज्योतिः सारः, प्राकृत-दीपिकाप्रबोध इत्याद्या एतदीया अनल्पग्रन्थास्तत्तच्छास्त्रेष्वस्य वैदु-ष्यमुद्बोधयन्ति । सं. १२७१ वर्षेऽस्यैवादेशात् गुणवल्लभेन व्याकर-णचतुष्कावचूरिः समर्थिता । देवप्रभसूरीयं पाण्डवचरित्रम्, उदय-प्रभसूरिसन्दब्धं धर्माभ्युदयकाव्यं चानेन समशोधि । सं. १२८८

---

१ टिप्पनमनर्घराघवशास्त्रे किल टिप्पनं च कन्दल्याम् ।
सारं ज्योतिषमदभद् यः प्राकृतदीपिकामपि च ॥
न्यायकन्दलीपञ्जिकायां राजशेखरसूरिः ।

२ संवत् १२७१ कार्तिकशुदिषष्ठ्यां श्रीनरचन्द्रसूरीणामादेशेन गुणवल्लभेन समर्थितेयं पुस्तिका । प्र. २८१८

वर्षे प्रस्तुतसूरिविरचितानि प्रशस्तिरूपाणि **वस्तुपाल**स्तुतिकाव्यानि गिरनारगिरौ शिलालेखे वर्त्तन्ते। मन्त्रीश्वर**वस्तुपाल**प्रार्थनयाऽलङ्कार-महोदधिविरचयिता **नरेन्द्रप्रभ**सूरिरस्य शिष्यः।

नरचन्द्रटिप्पनकम्, प्रश्नचतुर्विंशतिका, प्रश्नशतकमित्येतेषां प्रणेताऽयमेव परो वेति न निर्णयः।

## (२६) श्रीदेवेन्द्रसूरिः।

श्री**चित्रकूट** ( चीतोड ) महीपतिप्रदत्त '**हीरला**' बिरुदभृतां विश्वविश्वविख्यातयशसां श्री**जगच्चन्द्र**सूरीणां विनेयवर्गग्रामणीः सूरिवर्योऽसौ। श्री**मुनिसुन्दर**सूरिप्रणीत**गुर्वावली**लेखानुसारेण विक्रमीय-सप्तविंशत्यधिकत्रयोदशशतमितेऽब्देऽस्य स्वर्गारोहणं, तेन निर्णीयते निर्विरोधं सत्तासमयोऽस्य विक्रमीयत्रयोदशशताब्दीरूप एव।

ग्रन्थसन्दर्भस्त्वस्य—

भाष्यत्रयम् ( चैत्यवंदनभाष्यं गा. ६३, गुरुवन्दनभाष्यं गा. ४१, प्रत्याख्यानभाष्यं गा. ४८ ), सिद्धपञ्चाशिका ( गा. ५० ), सिद्धदण्डिका ( गा. १३ ), नव्यकर्मग्रन्थपञ्चकं ( गा. ), वन्दारुवृत्तिः, 'चत्तारिअट्ठ' स्तवनं, वृद्धचतुःशरणग्रन्थः ( गा. ११५ ), सम्यक्त्वस्वरूपस्तवः ( गा. २५ ), चैत्यप्रतिकृतिस्तवनं सावचूरिकम् ( गा. ), शाश्वतबिम्बसङ्ख्यास्तवनम् ( गा. २४ ), श्राद्धदिनकृत्यम् ( गा. ३४४ ), उपमितिभवप्रपञ्चासारोद्धारः ( गा. ५७० ), धर्मरत्नप्रकरणवृत्तिः ( ग्रं. ९६८२ ), नवपदप्रकरण-वृत्तिः ( ग्रं. ९००० ), वीतरागविज्ञप्तिः ( ग्रं. १८४८ ), उपदेश-कुलकम्, दानादिकुलकचतुष्कम्, ( गा. ) प्रणिधानकुलकम्

( गा. ९० ), चन्द्रप्रभचरित्रं संस्कृतप्राकृतमयम् ( ग्रं. ५३२५ सं. १२६४ विरचितम्, साधुसामाचारी ( ग्रं. ), विचाररत्नाकरः ( ग्रं. ) सुदर्शनाचरितं

प्रश्नोत्तररत्नमालावृत्ति । ( ग्रं. ), त्वस्य कृतितया मन्यन्ते केचित् तद् भ्रान्तिमूलमेव ।

यै. **सेरीसा**स्थाने श्रीपार्श्वनाथस्य प्रासाद एकरात्रिमध्ये व्यन्तरबलान्निष्पादितस्ते **श्रीदेवेन्द्रसूरयो नागेन्द्रगच्छीयत्वात् कलिकालसर्वज्ञश्रीहेमचन्द्रा**चार्यसमकालिकत्वाच्चेतो भिन्नाः ।

## (२७) श्रीधर्मघोषसूरिः ।

श्रीदेवेन्द्रसूरिपट्टाम्बरदिवामणिः सुविहितचूडामणिः सूरिवरोऽयं । विभूषयाञ्चक्रे तपागच्छीयं षट्चत्वारिंशत्तमं पट्टम् ।

एतस्योपदेशामृतपानपीनमनाः **पृथ्वीधरः** साधुर्यदीघपदनेकशो

---

१ सारवृत्तिदशाः **कर्मग्रन्थ**दीपास्तमोहराः ।
तस्य प्रवचनावासे भान्ति प्रेष्ठार्थदर्शकाः ॥
नाना**स्तवन**प्रकरणरत्नानि समुद्धृतानि समयाब्धेः ।
पुरुषोत्तमेन तेनालङ्कृतये शासनस्यासन् ॥
**पञ्चाशिका** सिद्धविचारवाच्या **भाष्याणि** वृत्तं च **सुदर्शनायाः**।
उपासकानां **दिनकृत्यसूत्रवृत्ती** च टीकापि च **धर्मरत्ने** ॥
देवेन्द्राङ्का श्राद्धयामोघभङ्गिग्रन्थाद्यन्याप्यस्त्यनेकास्य सृष्टिः ।
एवं नानाग्रन्थसोपानपङ्क्त्या स्वारोहं तन्मुक्तिसौधं व्यधात् सः ॥
—गुर्वावल्यां मुनिसुन्दरसूरिः ।

२ गुरुपर्वक्रमपरिचयार्थमस्य विलोक्यतां पं **हंसराजात्मज हीरालाल** मुद्रापितवृत्तिप्रशस्तिः ।

जिनालयानि सप्त ज्ञानभाण्डागाराँश्च । एकविंशतिसुवर्णघटीव्ययेन व्यधापयच्छत्रुञ्जये श्रीऋषभजिनप्रासादम् , पर्यदधाच्च षट्पञ्चाशत्सुवर्णघटीव्ययेनेन्द्रमालामतिविशालाम् ।

श्रीमतो मन्त्रविद्याविशारदत्वोदाहरणानि प्रदत्तान्यनेकानि श्री **श्रीमुनिसुन्दर**सूरिप्रणीतायां गुर्वावल्याम् । परमिह तु वाचकचेतश्चमत्कारकारकं प्रदीयते श्री**गुणरत्न**सूरिविरचितक्रियारत्नसमुच्चयान्तःस्थगुरुपर्वक्रमवर्णनाधिकारगतो योगिराजपराजयनवृत्तान्तः, तथाहि–

" योगी कश्चन शिष्यवृन्दकलितोऽवन्त्यां स्थितो गर्भभृ–
न्नानासिद्धिबहुप्रसिद्धिहृतहृद्भूपप्रजाभ्यर्चितः ।
तत्र स्थातुमयं न जैनयतिनां दत्ते कदापि क्वचि–
च्चेदागच्छति कोऽपि साधुरिह यस्तं प्रत्यसौ मत्सरात् ॥३२॥
आसन्नोऽप्यथ दूरगोऽपि सहसा सौवप्रभावोद्धुरो
हुङ्कारात् तृणतन्तुधूलिकणिकाक्षेपात् तथा स्वाङ्गतः ।
मार्जारान् नकुलोन्दुराहिसरटान् गोधावृकान् वृश्चिकान्
फेरण्डप्रभृतींश्च मुञ्चतितमां लक्षादिसङ्ख्यान् क्षणात् ॥३३॥
युग्मम् ।
अन्याश्चापि बिभीषिकाः प्रकटयत्युच्चैः स नानाविधा–
स्तद् दृष्ट्वा भयप्लुविताँश्छलयति क्षुल्लान् स पापः क्षणात् ।
साधुः कोऽपि न तत्र तिष्ठति ततः श्री**धर्मघोषो**ऽन्यदा
सूरिस्तत्र समीयिवान् बहुपरीवारो विहारक्रमात् ॥३४॥
साधूनध्वनि सङ्गतान् स सहसा दृष्ट्वाऽथ दुष्टो रुषा
दन्तैर्दष्टरदच्छदोऽवददद्ः श्वेताम्बराः ! किं धरा ।

शून्याऽस्ते सकलाऽपरा यदिह भोः प्राप्ता विशङ्का हठात्
दृष्टोऽहं यदि नो श्रुतोऽपि किमु रे नात्र स्थितो नन्वहम्? ॥३५॥

बाहुभ्यां जलधिं तराणि यदि वा तं शोषयाणि क्षणा–
दाकाशं विपुलं प्रयाणि खगवद्रात्रौ च कुर्यां दिनम्।
शेषाहिं दृढयोगपट्टतुलया बध्नानि सौवासने
फूत्कृत्यापि गिरीन् नयानि गगने वायू रजोवद् रयात् ॥३६॥

युग्मम् ॥

भो! भो! यात पलाय्य दृष्टिपथतो मां मा वमन्ध्वं हठा–
न्नो चेत् स्थेयमिह स्थिरैर्भवति यत् तद् दृश्यतां सम्प्रति।
व्याहार्षुर्मुनयो मुधात्मनि मदं धत्से विधत्से न किम्?
क्षान्तिं ब्रूम इदं हिताय भवतो जानासि चेत् किञ्चन ॥३७॥

नो चेद् यत्तनु रोचते प्रकुरु तत् तावत् स्थिताः स्मो वयं
योगिन्नुच्छलितोऽपि यन्न चणको भाण्डं प्रभेत्तुं क्षमः।
क्रुद्धस्तद्वचसा विधाय विकृतं वक्त्रं स भीत्यावहं
दन्तान् स्थूलतरानदीदृशदथो जान्वग्रजाग्रन्मुखान् ॥३८॥

किं नो भीषयसे तृणाय न वयं मन्यामहे त्वादृशं
व्याहृत्येति भयोज्झिता मुनिवरास्तत्पातसंसूचिनीम्।
उद्गीर्य स्वकफोणिमुन्नततरां जग्मुस्ततः श्रीगुरो–
रभ्यर्णे जगदुश्च तद्गुरुरथो प्रोवाच सर्वान् यतीन् ॥३९॥

चेद् योगीह बिभीषिकां विकुरुते मा भैष्ट तद् भो! मनाक्
त्राताहं वरिवर्मि वोऽथ वसतौ दोषागमे लक्षशः।

सूच्याख्या अतिवज्रतुण्डनखरा अन्यान्यदेहोर्ध्वगाः
कल्लोला इव वारिधेर्दशदिगुद्भूताः प्रसस्रुः क्षणात् ॥४०॥
अङ्गारोहणवस्त्रपात्रवलकस्तम्भादनैकादरान्
दृष्ट्वा तान् वसतेर्बहिश्च परितः श्वानौतुसर्पध्वनीन् ।
श्रुत्वा रौद्रतमान् प्रकम्प्रतनवो भीतेर्भरात् साधवो-
ऽन्योऽन्याह्वानपराश्च नालमभवन् स्थातुं प्रनष्टुं तथा ॥४१॥
वस्त्रच्छन्नमुखे घटे प्रथमतः सज्जीकृते श्रीगुरु-
र्दत्वा हस्तमथाजपद् गतभयो यावत् स तावच्छठः ।
सर्वाङ्गेऽप्युदितं व्यथासमुदयं हर्तु विषोद्धुं प्रणि-
न्होतुं वाप्यसहस्ततोऽनुगजनानूचे म्रिये भो ! म्रिये ॥४२॥
धिग्मामनात्मज्ञमदीर्घदर्शिनं येनाभिमानादपमानितो गुरुः ।
काणुः कः मेरुः क सरः क सागरः काहं हहा कैष च
सर्वसिद्धिवित् ॥४३॥
भीतः सोऽविकलं निजं विलसितं संहृत्य पीडावशा-
दाक्रन्दंश्च कणंश्च तत्र वसतौ गत्वा मुखात्ताङ्गुलिः ।
ऊचेऽज्ञानवशाद् यदत्र विहितं तत् क्षम्यतां क्षम्यतां
नातो वो विदधामि किञ्चिदशुभं साक्षी जनोऽत्राखिलः ॥४४॥
निरीक्ष्य दीनं स्वपदोर्विलीनं तं योगिराजं सुसमाधिभाजम्
चकार शान्तः प्रभुधर्मघोषः पुण्यप्रभायाश्च बभूव पोषः ॥४५॥"

प्रायशो '**देवेन्द्रविद्यानन्दधर्मकीर्ति**' पदाङ्किताः श्रीमतः कृतयः । ताश्चैवम्—चैत्यवन्दनभाष्यवृत्तिः (सङ्घाचारनाम्नी), यो-

निस्तवनम् (गा. १३) समवसरणप्रकरणम् (गा. २४), ( लोकनालिकाद्वात्रिंशिका गा. ) कायस्थितिप्रकरणम् ( गा. ) भवस्थितिप्रकरणम् ( गा. ) कालसप्ततिका ( गा. ७४ ) देहस्थिति प्रकरणम् (गा. १८ ) दुषमाकालसङ्घस्तवनम् (गा. २६) **युगप्रधाधानस्तोत्रम्** ( गा. ) **ऋषिमण्डलस्तोत्रम्** ( गा. २१० ) परिग्रहप्रमाणम् ' **सुअधम्म** ' स्तवनम् ( गा. ३९) चतुर्विंशतिजिनानां चतुर्विंशतिः स्तवनानि, ' **स्वस्ताशर्म** ' स्तोत्रम् (पद्य. ४) ' **देवेन्द्रैरनिशं** ' ( श्लो. ) श्लेषस्तोत्रम् , ' **यूयं युवां त्वं** ' ( श्लो. ) श्लेषस्तुतयः, चतुर्विंशति जिनस्तवनम् , ' **जयवृषभ !** चतुर्विंशतिजिनस्तुतयः, अष्टापदकल्पः, गिरनारकल्पः, श्राद्धजीतकल्पः संस्कृतप्राकृतभाषानिबद्धान्यत्र (पृ. १३) मुद्रापितानि चतुर्विंशति जिनभवस्तवनादीनि विविधानि स्तोत्राणि ।

' **देवेन्द्र** ' शब्देन स्वगुरोः श्री **देवेन्द्रसूरेः**, ' **विद्यानन्द** ' पदेन स्वज्येष्ठ गुरुभ्रातुः श्री **विद्यानन्दसूरेः**, ' **धर्मकीर्तिः** ' इत्युल्लेखेनात्मनो **धर्मकीर्ति** दिति नाम च प्रथमभास स्वकृतौ लक्ष्मभिधात् ।

विक्रमीयद्व्युत्तरत्रयोदशशत (१३०२) तमेऽब्दे जातदीक्षस्य स्वज्येष्ठसोदरस्य श्री**विद्यानन्दमुने**र्दीक्षानन्तरम् **धर्मकीर्ति**रिति

---

१ तः ५ पर्यन्तानि स्तोत्राणि प्रसिद्धिं नीतानि सावचूरिकाणि **भावनगरस्थया श्री जैन आत्मानन्द सभया.**

२ अष्टयमकमयकाव्यकरणाभिमत्तमन्त्रिमदापनोदाय प्रणीतेयमेकरात्रावेवात्रभवता, यदुक्तं **श्रीमुनिसुन्दरसूरिणा** गुर्वावल्याम्—

" **श्रीशारदालब्धवरो** निशैकयाऽष्टभः स कृत्वा यमकैरलङ्कृताः ।
स्तुतीर्जिनानां शमदज्वरौषधीरबुधद् गुर्जरराजमन्त्रिणम् ॥११६॥

नाम्ना गृहीतवानसौ दीक्षाम्, विक्रमीयत्रयोविंशत्यधिकत्रयोदशशततमेऽब्दे ( १३२० ) उपाध्यायपदम्, अष्टाविंशत्यधिकत्रयोदशशत ( १३२८ ) तमे संवत्सरे व्यभूषयत् सूरिपदम्, विक्रमीयसप्तपञ्चाशदुत्तरत्रयोदशशत ( १३५७ ) तमे हायने च दिवं जगामेति पट्टावल्याद्युल्लेखदर्शनाद् द्व्युत्तर त्रयोदशशत ( १३०२ ) वर्षतोऽनन्तरं सप्तविंशत्यधिक त्रयोदशशततमाब्दतश्चाऽर्वाक् मध्यवर्ती श्रीमतः सत्तासमयः सुनिश्चित एव ॥

## (२५) श्री सोमप्रभसूरिः ।

तपागच्छीयसप्तचत्वारिंशत्तमपट्टविभूषकः **श्रीधर्मघोषसूरि**शिष्यशिरोवतंसः सूरिवरोऽयम् ।

वि. सं. १३१० वर्षे जन्म, सं. १३२१ वर्षे दीक्षा, सं. १३३२ वर्षे सूरिपदम्, सं. १३७३ वर्षे स्वर्गारोहणमस्य ।

अप्कायविराधना भयेन **कोङ्कणदेशे**, क्षुद्रजलदौर्लभ्येन **मरुदेशे** च साधूनां विहारकरणं निषेधयामासासौ ।

कृतयोऽस्य–यतिजीतकल्पसूत्रम्, 'यत्राखिल' स्तुतयः, 'जिनेन येन' स्तुतयः, 'श्रीमच्छर्म' स्तोत्रम् ।

सं. १३५७ स्वगुरुश्री**धर्मघोषसूरि**स्वर्गवासदिवस एव स्वस्याल्पमायुर्विज्ञाय न्यवीविशद् **विमलप्रभं** सूरिपदेऽसौ ।

शतार्थकाव्य–कुमारपालप्रतिबोध, सुमतिनाथचरित्र, सूक्तावल ( सिन्दूरप्रकर० ) प्रणेता श्रीसोमप्रभाचार्यस्त्वितो भिन्नः, श्री**विजयसिंहाचार्य**शिष्यत्वात् ।

## (२६) श्री सोमतिलकसूरिः ।

श्री **सोमप्रभसूरि**पट्टपद्माकरप्रबोधनैक प्रद्योतनस्यास्य सूरिवर्यस्य वि. सं. १३५५ माघे जन्म, सं. १३६९ वर्षे दीक्षा, सं. १३७३ वर्षे सूरिपदम्, सं. १४२४ वर्षे स्वर्गगमनं च ।

कृतिकलापस्त्वस्य—

बृहन्नव्यक्षेत्रसमासः, सप्ततिशतस्थानप्रकरणं, ‘**यत्राखिल**’ सञ्ज्ञकचतुर्विंशतिजिनस्तुतिवृत्तिः, ‘**जयवृषभ**’ चतुर्विंशतिजिनस्तवनवृत्तिः, ‘**स्वस्ताशर्म**’ स्तुतिः, ‘**श्रीतीर्थराज**’ स्तुः ( **चतुरर्थभाक्** ) एतद्वृत्तिश्च, ‘**शुभभावानत०**,’ ‘**श्रीमद्वीरं स्तुवे०**’ ( कमलबन्धस्तवनम् ), **शिवशिरसि०**, ‘**श्रीनाभिसम्भव०**’ ‘**श्रीशैवेय०**,’ ‘**श्रीसिद्धार्थ०**’ वीरस्तवनम् ( श्लो. १२), चतुर्विंशतिजिनस्तवनम्,

एतस्मा एव प्राभृतीचकार श्री**जिनप्रभसूरिः** स्वनामाङ्कितानि सप्तशतीमितानि स्तोत्राणि सबहुमानम् ।

शीलतरङ्गिणीवृत्तिविधायिनः **सोमतिलक**सूरयस्त्वतो भिन्नः ।

## (२७) जिनप्रभसूरिः ।

वि. सं. १३३१ वर्षे लघुखरतरशाखासंस्थापक श्री **जिनसिंहसूरेः** शिष्यचूडामणिरयम् । अनेन च स्वयमेवाऽ**जितशान्तिस्तव**वृत्त्यादौ स्वस्य कृतिकलापे—

“ संवद् विक्रम भूपतेः शरऋतूदर्चिः शशाङ्कैर्मिते ( **वै. १३६५**, शा. श. १२३० )

पौषस्यासितपक्षभाजि शनिना युक्ते द्वितीयातिथौ ।

श्रीमान् श्री**जिनसिंह**सूरिसुगुरोः पादाब्जपुष्पन्धयः
पुर्यां दाशरथेर्**जिनप्रभ**गुरुर्जग्रन्थ टीकामिमाम् ॥ ”

इत्यादिना निरदेशि चतुर्दशशताद्वीरूपः स्वस्य सत्ताकालः ।
अस्य हि मन्त्रविद्यायां सुमनोमनश्चमत्कारि सामर्थ्यमासीत्–

उक्तं च— गयण थकी जिगि कुलह नंषिउ घट्ट उतारी
विद्र महि य मुष वाद नयरि षट्ट नववारी ।
**ढिल्लीपतिसुलताण** पूठि वडवृक्ष चलावी
रायण सेतुंज सिहरि दुद्ध जलहर वरसावी ।
दोरडई मुद्रकिय प्रतिमा जिन बोलइ वयण ।
**जिनप्रभसूरि** कवि वयर कहि भरतषंडमंडन रयण ॥

एतदर्थे विशेषजिज्ञासुभिर्विलोकनीयः श्री**सोमधर्म**गणि–
विरचितोपदेश सप्ततिकायास्तृतीयाधिकारप्रान्तगतो वृत्तान्तः।
दन्त विश्वमिते (१३३२) वर्षे श्री **जिनप्रभ**सूरयः ।
अभूवन् भूभृतां मान्याः श्री**जिनप्रभ**सूरयः । ”

इत्याद्यश्लोकात्मकः

मूर्त्तिमान् प्रतिभाप्रकर्ष इव राजतेतरामत्रभवतोऽनघा कृतितति-
स्त्वेवम्—

१ परमसुखद्वात्रिंशिका
२ प्रव्रज्याविधानवृत्तिः
३ प्रत्याख्यानस्थानविवरणम्
४ साधुप्रतिक्रमणवृत्ति (सं. १३६५)
५ सन्देह विषौषधिवृत्तिः (सं. १३६४)
६ श्रेणिकचरित्तम् (द्व्याश्रयं) (सं. १३५६)
७ विषमकाव्यवृत्तिः

८ तपोटमतकुट्टनकम्
९ धर्माधर्मकुलकम्[1]
१० पूजाविधिः
११ विधिप्रभा (सं. १३६३)
१२ समवसरणटीका
१३ वन्दनस्थानविवरणम्
१४ विविधतीर्थकल्पः (सं. १३२७ तः १३८९)
१५ दीपालिकाकल्पः
१६ सूरिमन्त्रप्रदेशविवरणम्
१७ अजितशान्तिभयहर-उपसर्गहरस्तोत्रवृत्तिः (सं. १३६५)

काव्यमाला सप्तम गुच्छकान्त (पृ. ८६–९५) मुद्रित**विशालराज**-गणिशिष्यविहिता सिद्धान्तस्तवावचूरिप्रारम्भे "पुरा श्री**जिनप्रभसू**-रिभिः प्रतिदिनं नवस्तवनिर्माणपुरःसरं निरवद्याहारग्रहणाभिग्रहवद्भिः प्रत्यक्ष**पद्मावती**देवीवचसामभ्युदयिनं श्री**तपगच्छं** विभाव्य भगवतां श्री**सोमतिलक**सूरीणां स्वशैक्षशिष्यादिपठनविलोकनाद्यर्थं यमकश्लेष-चित्रच्छन्दोविशेषादि नवनवभङ्गीसुभगाः सप्तशतीमिताः स्तवा उपदी-कृता निजनामाङ्किताः" इत्युल्लेखदर्शनात् कृता एभिः सप्तशती-मिताः स्तवा इति निश्चीयते परमुपलभ्यमानास्त्वेवम्—

---

१ ज्ञानप्रकाशकुलक (गा. १२५), मदनरेखासन्धि, चतुर्विधभावना कुलक (गा. ११), जीवानुशास्तिसन्धि (गा. १८), नेमिनाथरास (कडवा ११), भव्यचरित (गा. ४४), युगादिजिनचरितकुलक (गा. २७), भविय कुटुंबचरित (गा. ३४) श्रावकविधिप्रकरण (गा. ३४), सर्वचैत्यपरिपाटि स्वाध्याय प्रभृतिप्रणेताऽऽगमगच्छीय **देवभद्रसूरि**शिष्यः श्री**जिनप्रभसूरिः** त्रयोदशताब्दीभवोऽपि अस्माद्भिन्नः।

५

| | नाम | प्रतीकम् | पद्यानि | मुद्रितस्थलम् ) |
|---|---|---|---|---|
| १ | सिद्धान्तागमस्तवः | नत्वा गुरुभ्यः० | ४६ | सप्तमगुच्छे (पृ. ८६) |
| २ | पार्श्वस्तवः | का मे वामेय ! शक्तिः | १७ | ,, (पृ. १०७) |
| ३ | गौतमस्तोत्रम् | श्रीमन्तं मगधेषु | २१ | ,, (,, ११०) |
| ४ | वीरस्तवः | कंसारिक्रमनिर्यदापगा | २५ | ,, (,, ११२) |
| ५ | चतुर्विंशतिजिनस्तवः | कनककान्तिधनुः | २९ | ,, (,, ११५) |
| ६ | पार्श्वस्तवः | अधियदुपनमन्तो | १२ | ,, (,, ११७) |
| ७ | श्रीवीरनिर्वाणकल्याणकस्तवः | श्रीसिद्धार्थनरेन्द्रवंश० | १९ | ,, (,, ११९) |
| ८ | श्रीऋषभजिनस्तवनम् | अस्तु श्रीनाभिभूर्देवो | ११ | जै. स्तो.स.(,, २६) |
| ९ | अजितजिनस्तवनम् | विश्वेश्वरं मथितमन्मथ | २१ | ,, (,, २८) |
| १० | श्रीवीरस्तवनम् | चित्रैः स्तोष्ये जिनं वीरं | २७ | ,, (,, ९२) |
| ११ | श्रीऋषभजिनस्तवनम् | अल्लाल्लाहि (पारसीभाषायाम् ) | ११ | ,, (,, २४७) |
| १२ | चतुर्विंशतिजिनस्तोत्रम् | ऋषभनम्रसुरासुरशेखर | २९ | ,, (,, १४९) |
| १३ | ,, | आनन्दसुन्दरपुरन्दरनम्र | २९ | ,, (,, १५१) |

| | | | | |
|---|---|---|---|---|
| १४ | चतुर्विंशतिजिनस्तवनम् | पात्वादिदेवो दश कल्पवृक्षा | २९ | (प्रक.रत्ना भा. २ ,, १७५) |
| १५ | श्रीवीरस्तवनम् (पञ्चवर्गपरिहारेण) | स्वः श्रेयससरसीरुह | २६ | ( ,, ,, २४२) |
| १३ | श्रीनेमिस्तवनम् ( क्रियागुप्तम् ) | श्रीहस्तिकुलहीराकर | २० | ( ,, २४४) |
| १७ | महावीरस्तवनम्(पञ्चकल्याणकमयम् ) | पराक्रमेणेव पराजितोऽयं | ३६ | ( ,, २५०) |
| १८ | श्रीमन्त्रस्तवनम् | स्वः श्रियं श्रीमदर्हन्तः | ५ | ( ,, २५१) |
| १९ | वर्द्धमानस्तवनम् | श्रीवर्द्धमानः सुखवृद्धयेऽस्तु | ९ | ( ,, २५१) |
| २० | पार्श्वजिनस्तवनम् | पार्श्वप्रभुं शश्वदकोपमानम् | ८ | ( ,, २५१) |
| २१ | श्रीपार्श्वनाथस्तवनम् | श्रीपार्श्व ! पादानतनागराज | ८ | ( ,, २५२) |
| २२ | नन्दीश्वरकल्पः | आराध्य श्रीजिनाधीशान् | ४८ | ( ,, २५२) |
| २३ | श्रीशारदास्तवनम् | वाग्देवते ! भक्तिमतां स्वशक्ति | १३ | ( ,, २५४) |
| २४ | श्रीजिनसिंहसूरिस्तवनम् | प्रभुः प्रदद्यान्मुनिपक्षिपङ्क्ते | १३ | ( ,, २५५) |
| २५ | पञ्चनमस्कृतिस्तवनम् | प्रतिष्ठितं तमः पारे | ३३ | ( ,, २५६) |
| २६ | चतुर्विंशतिजिनस्तवनम् | प्रणम्यादिजिनं प्राणी | २८ | ( ,, २५८) |
| २७ | श्रीपार्श्वप्रातिहार्यस्तवनम् | त्वां विनुत्य महिमश्रियामहं | १० | ,, २५९) |
| २८ | कल्याणकपञ्चकस्तवनम् | निलिम्पलोकायितभूतलं | ८ | ,, ५६०) |

| | | | | | |
|---|---|---|---|---|---|
| २९ | वीरस्तवनम् (लक्षणप्रयोगमयम्) | निस्तीणविस्तीर्णभवार्णवं ज्ञै | १७ | ,, | २६० |
| ३० | श्रीवीतरागस्तवनम् | जयन्ति पादा जिननायकस्य | १६ | ,, | २६१ |
| ३१ | श्रीचन्द्रप्रभस्तुतिः | देवैर्यस्तुष्टुवे तुष्टैः | ४ | ,, | २६२ |
| ३२ | श्रीऋषभजिनस्तवनम्(अष्टभाषामयम्) | निरवधिरुचिरज्ञानं | ४० | ,, | २६३ |
| ३३ | जीरापल्लिपार्श्वस्तवनम् | जीरिकापुरपतिं सदैव तं | १५ | ,, | २६८ |
| ३४ | फलवर्द्धिपार्श्वनाथस्तवनम् (प्राकृते) | सयलाहिवाहिजलहर | १२ | ,, | २६९ |
| ३५ | श्रीचन्द्रप्रभस्तवनं (षड्भाषामयम्) | नमो महासेननरेन्द्रतनूज !(सूनो!) | १३ | ,, | २६९ |
| ३६ | श्रीपार्श्वनाथलघुस्तवः | दोसावहारदक्खो | १० | अत्रैव. पृ. | २२८ |
| ३७ | अर्हदादिस्तवनम् | मानेनोर्वीं व्यह्रत परितो | ८ | (प्र.र.भा.४), पृ. | २२ |
| ३८ | पार्श्वस्तवनम् | श्रीपार्श्वं भावतः स्तौमि ! | ९ | ,, | २३ |
| ३९ | चतुर्विंशतिजिनस्तवनम् | जिनर्षभ ! प्रीणितभव्यसार्थ ! | ७ | ,, | २३ |
| ४० | पार्श्वजिनस्तवनम् | श्रीपार्श्वः श्रेयसे भूया | ४४ | ,, | २४ |
| ४१ | शान्तिजिनस्तवनम् | श्रीशान्तिनाथो भगवा | २० | ,, | २६ |
| ४२ | श्रीमहावीरस्तवनम् | असमशमनिवासं | २५ | ,, | २८ |
| ४३ | चतुर्विंशतिजिनस्तवनम् | आनम्रनाकिपति० | २५ | ,, | ३०२ |
| ४४ | चतुर्विंशतिजिनस्तवनम् | तत्त्वानि तत्त्वानिभृतेषु सिद्धं | २८ | ,, | ३०३ |

| | | | | |
|---|---|---|---|---|
| ४५ | श्रीवीरस्तवनम् | श्रीवर्द्धमानपरिपूरित० | १३ | प्र.र.भा.२, पृ. २५७ |
| ४६ | चतुर्विंशतिजिनस्तवनम् | यं सततमक्षमालो | ३० | अत्रैव. पृ. २१६ |
| ४७ | मुनिसुव्रतस्तुतिः | निर्माय निर्मायगुणार्द्धिं० | ,, | अमुद्रिता |
| ४८ | चतुर्विंशतिजिनस्तवनम् | ऋषभदेवमनन्तमहोदयं | ,, | ,, |
| ४९ | आज्ञास्तवनम् (प्रा.) | नयगमभंगपहाणा | ११ | अत्रैव. २२७ |
| ५० | गौतमस्तवनम् (महामन्त्रमयम् ) | ॐनमस्त्रिजगन्नेतु | ९ | ,, २३७ |
| ५१ | पद्मावतीचतुष्पदिका | जिनशासन अवधारि | ३७ | अमुद्रिता |
| ५२ | श्रीगौतमस्तोत्रम् | जम्मपवित्तिय सिरि. | २५ | अत्रैव पृ. २३५ |
| ५३ | श्रीपार्श्वजिनस्तोत्रम् | पार्श्वनाथमनघं. | ९ | अमुद्रितम् |
| ५४ | श्रीवीरजिनस्तोत्रम् | सिरिवीयराय ! देवाहिदेव ! | ३५ | ,, |
| ५५ | श्रीशारदास्तोत्रम् | वाग्देवते ! भक्तिमता | १३ | ,, |
| ५६ | श्रीशारदाष्टकम् | ॐ नमस्त्रिजगद्वन्दित | ९ | ,, |
| ५७ | श्रीवर्धमानविद्या | इय वद्धमाणविज्जा | १७ | ,, |
| ५८ | मंगलाष्टकम् | नतसुरेन्द्र ! जिनेन्द्र ! | ९ | प्रा. जै. स्तो. सं. |
| ५९ | पञ्चपरमेष्ठि महामन्त्रस्तवनम् | किंकप्पतरु रे० | १३ | ,, |

एतदतिरिक्ता अन्या अपि भविष्यन्ति कृतयः श्रीमतां परं नाऽद्यावधि तद्दर्शनेनाऽपि बभूव मे दृष्टिसाफल्यम्। जानाना अपि **तपागच्छ**मभ्युदयिनमुपदीकुर्वाणा अपि **सोमतिलक**सूरिभ्यः सबहुमानं सप्तशती-

मितानि स्तोत्राणि विरचयेयुरिमे '**तपोमतकुट्टनम्**' नाम गच्छकदाग्रहप्रकाशकं ग्रन्थमिति महच्चित्रम् ।[1]

श्री**मल्लिषेणसूरिभिः** १२१४ शाकाब्दे विरचितायां स्याद्वादमञ्जरीवृत्तौ साहाय्यकृतोऽमी, उक्तं च तत्रैव—

" श्री**जिनप्रभसूरी**णां साहाय्योद्भिन्नसौरभा ।
श्रुतावुत्तंसतु सतां वृत्तिः स्याद्वादमञ्जरी ॥ ३ ॥ "

श्री**जिनसेन**शिष्योभयभाषाकविशेखरश्री**मल्लिषेणसूरि**विरचिते **भैरवपद्मावती** कल्पेऽप्यस्यैव साहाय्यम् ।

## (३१) देवेन्द्रसूरिः ।

एतन्नामधेयधारिणो भिन्नभिन्नगच्छेष्वनेके समजायन्त सूरिपुरन्दरास्तथाप्यत्रैव पृ. ५४ मुद्रिते त्रिंशच्चतुर्विंशतिकास्तवनदशके प्रत्येकस्तवान्ते '**श्रीसङ्घतिलकश्रियम्**' इति पदावलोकनेन सम्यक्त्वसप्ततिकावृत्ति (तत्त्वकौमुदी) विरचयितु **रुद्रपल्लीय**गच्छतिलकायमानस्य **श्रीसङ्घतिलकाचार्य**स्य शिष्यपुङ्गवोऽयमिति निश्चयः ।

गुरुपर्वक्रमस्त्वस्य प्रश्नोत्तररत्नमालावृत्ति—सम्यक्त्वसप्ततिकावृत्ति—शीलोपदेशमालावृत्ति ( शीलतरङ्गिणी ) प्रशस्तिपद्यैः सम्यगवबुध्यते, स च वाचकानां सौलभ्याय दीयतेऽत्र वृक्षरूपेण—

---

१ 'तपोमतकुट्टनं **जिनप्रभस्य** कृतिरित्यर्थे नास्ति संदेहः, परं तत्र दर्शितेन स्वस्य सिद्धान्ताऽनभिज्ञत्वेन बालसुलभेन अभिनिवेशेन द्वेषपोषेण च ज्ञायते यदुतायं ग्रन्थः कर्त्रा स्वस्य प्रथमे वयसि निमर्तिः स्यात् , तपागच्छीयैः सह मैत्री च पश्चिमे वयसि ।' इति श्रीकल्याणविजयमुनिवराः ।

श्री वर्द्धमानसूरिः[1] ( सं. १०८८ विद्य. )

- जिनेश्वरसूरिः[2] ( वि. सं. १०८०–८४ विद्य. )
  - अभयदेवसूरिः[4] ( वि. सं. १०७२ तः ११४५ स्व. )
    - जिनवल्लभसूरिः[5] ( सं. ११२८ तः ११६० वि० )
      - जिनदत्तसूरिः[6] ( वि. सं. ११३२ तः १२११ विद्य. )
      - जिनशेखरसूरिः[7] ( रुद्रपल्लीयगच्छसंस्थापकः
    - प्रसन्नचन्द्रसूरिः
- बुद्धिसागरसूरिः[3] ( वि. सं. १०८४ विद्य. )

---

१ उपदेशपदटीकाविरचयिता । २ प्रमालक्ष्मादिप्रणेता । सं. १०८० वर्षे जावालिपुरे । ३ सं. १०८० वर्षे व्याकरणकर्ता । ४ नवाङ्गवृत्तिविधानवेधाः । ५ पिण्डविशुद्धयादिनिर्माता । ६ अपभ्रंशकाव्यत्रय्यादिप्रणेता ।
७ उक्तं च प्रश्नोत्तररत्नमालाप्रशस्तौ—

वि. सं. १२०४ विद्य.)

|

पद्मचन्द्रसूरिः

|

विजयचन्द्रसूरिः (विजयेन्दुसूरिः)

|

अभयदेवसूरिः (सं. १२०४) तः १२७८ विद्य.)

|

देवभद्रसूरिः

|

प्रभानन्दसूरिः

|

---

८ यस्मादासीदसीमप्रशममुखगुणैरद्वितीयो वरेण्यः

षट्तर्कग्रन्थवेत्ताऽभयपदपुरतो **देवनामा** मुनीन्द्रः ।

यस्मात् प्रालेयशैलादिव भुवनजनव्रातपावित्र्यहेतुः ।

जज्ञे गङ्गाप्रवाहः स्फुरदुरुकमलो **रुद्रपल्लीय**गच्छः ॥




श्रीमतो **हेमचन्द्राख्यः** शिष्यः

कृतयस्तु प्रश्नोत्तररत्नमालावृत्ति–त्रिंशच्चतुर्विंशतिस्तवदशकातिरिक्ता नान्या अद्यावधि नयनपथमागता मे ।

---

९ जयन्तविजयकाव्यकर्ता ( सं. १२७८ ) सम्यक्त्वसप्ततिकावृत्तिविधाता ( सं. १४२२ )। १० शीलतरङ्गिणीवृत्तिविरचयिता । ११ प्रश्नोत्तररत्नमालावृत्तिप्रणेता ।

## ( ३२ ) मेरुनन्दनोपाध्यायः

अनेनैव विरचिते श्री**जिनोदयसूरि**विवाहलाप्रान्ते—एहु सिरि **जिणउदयसूरि**नियसामिणो कहिउ मइ चरिउ अइमंदबुद्धि अम्ह सो दिक्खगुरु देउ सुपसन्नउ दंसणनामचारित्तसुद्धिं। एहु गुरुराय वीवाहलउ जे पढइ जे गुणइ जे सुणंति उभयलोगे वि, ते लहइ नणवंछियं **मेरुनंदनगणि** इम भणंति ॥" इत्यनेन पद्येन **श्रीजिनोदयसूरि**र्निरूपितः स्वयं स्वस्य दीक्षागुरुः, श्री**जिनोदयसूरे**श्च **सं. १३७५** वर्षे **रुद्रपाल**श्रेष्ठिपत्नी **धारलदेवी**कुक्षौ **प्रह्लादनपुरे** जन्म, **सं. १३८२** वर्षे श्री**जिनकुशलसूर्य**न्तिके दीक्षा, **सोमप्रभ** इति नाम। **सं. १४०६** वर्षे **जेसलमेरु**दङ्गे वाचनाचार्यपदम्, **सं. १४१५** वर्षे **स्तम्भतीर्थे तरुणप्रभसूरि**भिः प्रदत्तं सूरिपदम्, **'जिनोदयसूरि'** रित्यभिधानं च। **सं. १४३२** वर्षे समाधिना समाससाद स्वर्गिसम्पदम्। इत्यनाशङ्क्यमनेहः, **मेरुनन्दनोपाध्याय**स्याप्यस्य समान एव सत्तासमयः।

कृतयस्त्वस्य—**जिनोदय**सूरिविवाहलउ, अजितशान्तिस्तवनम्, सीमन्धरजिनस्तवनं ( अप० )

## ( ३३ ) श्रीदेवसुन्दरसूरिः।

**तपागच्छी**यैकोनपञ्चाशत्तमपट्टपूर्वाचलप्रभाकरः स्थावरजङ्गमविषापहारी मन्त्रतन्त्रविद्यामन्दिरं योगाभ्यासनिष्णातो जलानलव्यालादिभयध्वंसी त्रिकालनिमित्तवेत्ता महानरेन्द्रवन्द्यचरणारविन्दः सूरिवरोऽयं **श्रीसोमतिलकसूरि**शिष्यः।

श्रीमतो विक्रम सं. १३९६ तमेऽब्दे जन्म, सं. १४०४ तमे वर्षे दीक्षा, १४२० तमे हायनेऽ**णहिल्लपुरपत्तने** सूरिपदम् ।

तत्रभवतो विद्वच्छिरोरत्नं समजायत शिष्यरत्नपञ्चकं, तच्चैवम्—

१ **ज्ञानसागरसूरिः**—विमलनाथचरित्रादिविरचयिता

२ **कुलमण्डनसूरिः**—सिद्धान्तकलापोद्धार—विचारामृतसङ्ग्रहादिप्रणेता ।

३ **गुणरत्नसूरिः**—क्रियारत्नसमुच्चय—षट्दर्शनसमुच्चयवृत्तिविरचयिता ।

४ **सोमसुन्दरसूरिः**—योगशास्त्रोपदेशमालाद्यवचूरिप्रणेता

५ **साधुरत्नसूरिः**—यतिजीतकल्पवृत्तिकर्ता

## ( ३४ ) श्रीसोमसुन्दरसूरिः ।

प्रल्हादनपुरे **सज्जनश्रेष्ठिनो माल्हणदे**व्याः कुक्षौ विक्रमसंवत् **१४३०** वर्षेऽस्य जन्म, **सोम**स्वप्नावलोकनात् '**सोम**' इति प्रादायि नाम । सं. १४३७ वर्षे स्वभगिन्या समं कक्षीकृता दीक्षा । सं. १४५० वर्षे विंशतिवर्षदेशीयो निखिलवाङ्मयपारदृश्वा प्राप्तवान् वाचकपदम्, सं. १४५७ वर्षेऽष्टादशशतसाधुपरीवारः सूरिपदं प्रपेदे । विधायोपदेशकौशलेन विविधजिनालय—जिनबिम्बप्रतिष्ठा—मुनिपदप्रतिष्ठापन—तीर्थसङ्घयात्राद्यनेकधर्म्यकर्माणि संवत् १४९९ वर्षे दिवं जगाम । एतदर्थे विशेषजिज्ञासुभिर्विलोकनीयं पण्डितप्रकाण्डश्री**प्रतिष्ठासोम**प्रणीतं श्री**सोमसौभाग्य**काव्यम् ।

श्रीमतः **श्रीमुनिसुन्दर**सूर्याद्याः पञ्च शिष्या मुख्याः, यदुक्तमाचारप्रदीपप्रशस्तौ श्री**रत्नशेखर**सूरिणा—

" **देवसुन्दरगुरोः** पट्टे श्री**सोमसुन्दर**गणीन्द्राः ।
युगवरपदवीं प्राप्तास्तेषां शिष्याश्च पञ्चैते ॥ ७ ॥

मारीत्यवमनिराकृतिसहस्रनामस्मृतिप्रभृतिकृत्यैः ।
श्री**मुनिसुन्दर**गुरवश्चिरन्तनाचार्यमहिमभृतः ॥ ८ ॥

श्री**जयचन्द्र**गणेन्द्रा निस्तन्द्राः सङ्घगच्छकार्येषु ।
श्री**भुवनसुन्दरवरा** दूरविहारैर्गणोपकृतः ॥ ९ ॥

**विषममहाविद्या**तद्विडम्बनाब्धौ तरीव वृत्तिर्यैः ।
विदधे यज्ज्ञाननिधिं मदादिशिष्या उपाजीवन् ॥ १० ॥

एकाङ्गा अप्येकादशाङ्गिनश्च **जिनसुन्दरा**चार्याः ।
निर्ग्रन्था ग्रन्थकृतः श्रीम**ज्जिनकीर्ति**गुरवश्च ॥ ११ ॥ "

एतदतिरिक्ता अत्रभवतः शिष्यास्त्वमी—

१ **श्रीनन्दिरत्नगणिः**—उपदेशतरङ्गिणीप्रणेतुः श्री**रत्नमन्दिरगणे**र्गुरुः, यदुक्तं तत्कृत**भोज**प्रबन्धप्रशस्तौ—

जातः श्रीगुरु**सोमसुन्दर**गुरुः श्रीम**त्तपा**गच्छप-
स्तत्पादाम्बुजषट्पदो विजयते श्री**नन्दिरत्नो** गणिः।
तच्छिष्योऽस्ति च **रत्नमन्दिर**गणिर्भोजप्रबन्धो नव-
स्तेनासौ मुनिभूमिभूतशशभृत् (१५१७) संवत्सरे निर्मितः।

२ **साधुराजगणिः**—

यदाह भरटकद्वात्रिंशिकाकृत्

" तपागणाधीश्वरसोमसुन्दराऽन्तेवासिनो वाचकचक्रचक्रिणः ।
श्रीसाधुराजादधिगम्य कौतुकादलेखि शिष्येण यथाश्रुतं
मया ॥ "

३ **रत्नहंसगणिः**

जैनस्तोत्रसमुच्चये पृ. १७० मुद्रित चतुर्विंशतिजिनस्तुतिप्रान्ते तपापक्षे श्रीसोमसन्दरसूरिशिष्यपण्डितशिरोवतंस पं. श्रीरत्नहंसगणि-शिष्येण लिखिता इत्युल्लेखदर्शनात्

४ **विशालराजगणिः**—

यदुक्तमेतदीयशिष्यरत्नरचितवीतरागस्तोत्रपञ्जिकाप्रान्ते–

" चञ्चच्चन्द्रकुलं सदोदिततपापक्षाख्यबिम्बोल्लस–
न्मार्तण्डोपमसोमसुन्दरगुरोः शिष्याग्रणीः सूरिराट् ।
श्रीमानस्ति विशालराजसुगुरुर्विद्यानदीसागर–
स्तत्पादप्रणतोऽस्म्यलं अतिसुखा जैनस्तुतेः पञ्जिका ॥
सह पञ्चविंशदक्षरसपादषट्शतमिताऽजनिष्ट सुगमेयम् ।
वर्षे तिथिरविसङ्ख्ये (१५१२) शितिपक्षे तपसि गुरुपुष्ये ॥ "

श्रीप्रियङ्करनृपकथा–रूपसेनचरित्रकर्तृश्रीजिनसूरमुनिगुरुश्रीसुधा-भूषणमुनेः, काव्यमालासप्तमगुच्छकान्तर्मुद्रितश्रीजिनप्रभसूरिप्रणीतसि-द्धान्तस्तवावचूरिरचयितुश्चासौ गुरुः ।

५ श्रीकुमारपालप्रबन्धप्रभृतिप्रणेता श्रीजिनमण्डनोपाध्यायः—

उक्तं च—

प्रबन्धो योजितः श्रीमत्कुमारनृपतेरयम् ।
गद्यपद्यैर्नवैः कैश्चित् कैश्चित् प्राक्तननिर्मितैः ॥ ६ ॥

१ तपा मुनिसुन्दरसूरि शिष्यो विशालराज इत्यन्यत्र ।

श्रीसोमसुन्दरगुरोः शिष्येण यथाश्रुतानुसारेण ।
श्रीजिनमण्डनगणिना द्व्यङ्कमनु (१४९२) प्रमितवत्सरे
रुचिरः ॥ ७ ॥

६ श्रीविवेकसमुद्रगणिः—

यदुल्लेखः श्रीउपदेशमालाप्रकरणावचूरिप्रान्ते—

"उपदेशमाला प्रकरणावचूरिः समाप्ता। लिखिता श्रीतपागच्छाधिराजसोमसुन्दरसूरिशिष्यपण्डितविवेकसमुद्रगणिशिष्याणुनाऽमरचन्द्रेण गणिना स्वपरोपकाराय। सं. १५१८ वर्षे फाल्गुन ११ दिने बुधवारे कर्करामहाग्रामे। श्रीश्रमणसङ्घस्य श्रीरस्तु ॥"

सम्यक्त्वालङ्कार–पुण्यसारकथानकविरचयिता तु जिनपतिसूरिपट्टधरजिनेश्वरसूरिशिष्यत्वादितो भिन्नः। द्वयोरपि नामसाम्यत्वात् सञ्जाता स्खलना जैनग्रन्थावल्यां, समसूचि सा 'जेशलमीर भाण्डागारीयग्रन्थानां सूची' नाम्नि ग्रन्थे (पृ. ५३) "जैनग्रन्थावल्यामस्य तपागच्छीयश्रीसोमसुन्दरसूरिशिष्यता षोडशशताब्दीप्रारम्भे च सूचिता सत्ता विचारासहा प्रतिभाति" इत्यादिना पण्डितवर्यश्री लालचन्द्रेण।

७ श्री चारित्ररत्नगणिः दानप्रदीपरचयिता—

आरम्भसिद्धिवार्तिकविधातुः श्रीहेमहंसगणिनो विद्यागुरुः, लघूपदेशसप्ततिकाकर्तुः श्रीसोमधर्मगणिनश्चायं गुरुः।

८ भावसुन्दरसूरिः—

उज्जयिन्यां निरमायि श्रीमहावीर[illegible]नमनेन। विलोक्यतां 'जैनगूर्जर कविओ' प्रथमविभागस्य पृ. ३३

९ **समयरत्नः—लावण्यसमयगुरुः ।**

इतोऽपरेऽपि स्युर्नवेति न निश्चयः ।

कृतयस्त्वस्य—

चैत्यवन्दनभाष्यावचूरिः (ग्रं. १०२७), कल्पान्तर्वाच्यः ( ग्रं. १८००), चतुर्विंशतिजिनभवोत्कीर्तनस्तवनम् ( श्लो. २६ ) युगादिजिनस्तवनम् ( श्लो. २५), युष्मच्छब्दनवस्तवी, अस्मच्छब्दनवस्तवी, भाष्यत्रयचूर्णिः, कल्याणकस्तवः । यतिजीतकल्पः, रत्नकोषः, आरा-

१ यद्यपि दानप्रदीपप्रशस्तौ १५ तमे काव्ये 'विद्यानिधान**जिनसुन्दर**सूरिशिष्यः । श्री**सोमसुन्दर**गणेन्द्रनिदेशवश्यः ।' इत्युल्लेखेन श्री**जिनसुन्दरसूरि**शिष्यत्वमस्य प्रतीयते, परं स्वस्य परेषां च कृतिषु प्रायशः श्री**सोमसुन्दरसूरि**शिष्यत्वव्यपदेशदर्शनान्मयापि तथैव लिखितमिह ।

२।३ मुद्रितानि जैनस्तोत्रसमुच्चये ।

प्रकटीभूतेयं जैनस्तोत्रसङ्ग्रहस्य प्रथमे विभागे ।

६ 'श्री आवश्यक वृत्तितः कृता सङ्क्षिप्ता श्री**सोमसुन्दरसूरि**पादैः' इत्युल्लेखः प्रान्ते ।

७ श्री**मुनिसुन्दरसूरि**प्रणीतं 'जयश्रिये शाश्वतशर्महेतवे' इत्यादि स्वरूपं २४ पद्यप्रमाणं मुद्रितं जनस्तोत्रसङ्ग्रहस्य द्वितीये विभागे ( पृ. १९५–२०१ ), प्राकृतभाषायां विंशतिगाथात्मकं त्रुटितमुपलब्धमधुनाऽन्यत्, तस्यान्तिमा गाथा त्वेवम्–" सुद्धनवमी...वली निमि, आसो आसो अमावसि हूओ ।

पुण्णमासीइ नमितित्थनाहो चुओ, कुणु सुह मंगलं **सोमसूरि**द्धि थुओ ॥ २० ॥" इदमेव **सोमसुन्दर**सूरिकृतमितरद्वेति न निश्चयः ।

८ 'भूयादुज्ज्वल**सोमसुन्दर**यशाः श्रीसङ्घभद्रङ्करम्' इत्यान्तिमकाव्यचरणम् ।

धनारासः। नेमिनाथनवरसफागः, उपदेशमालाबालावबोधः (सं. १४८५), योगशास्त्रबालावबोधः, षडावश्यकबालावबोधः, आराधनापताकाबालावबोधः, नवतत्त्वबालावबोधः, षष्टिशतकबालावबोधः (सं १४९६) प्रभृतयः प्रकटयन्ति प्रतिभाप्रकर्षमद्यापि।

## (३५) चारित्ररत्नगणिः।

श्रीमानसौ स्वयं परे च ग्रन्थकृतो निवेदयन्ति सर्वत्र श्री**सोमसुन्दरसूरि** शिष्यत्वमस्य, परं—

विद्यानिधान**जिनसुन्दरसूरि**शिष्यः
श्री**सोमसुन्दर**गणेन्द्रनिदेशवश्यः।
**चारित्ररत्न**गणिरल्पमतिर्व्यधत्त
दानप्रदीपमिमात्मपरार्थसिद्धयै॥ १५॥

इत्यनेन दानप्रदीपप्रशस्तिपद्येन श्री**जिनसुन्दर**सूरय एवास्य दीक्षागुरवः, श्री**सोमसुन्दर**सूरीणां तु गच्छाधिपतित्वेन, स्वगुरोर्गुरुत्वेन च बहुमानख्यापनार्थं दर्शयन्ति शिष्यत्वम्।

सत्तासमयस्तु—"नवाङ्कवार्धिशीतांशु(१४९९)मिते विक्रमवत्सरे।
**चित्रकूट**महादुर्गे ग्रन्थोऽयं समपद्यत॥ १६॥"

इति दानप्रदीपरचनाकालमावेदयता स्वयमेव ज्ञापितो विक्रमीयपञ्चदशशताब्द्युत्तरार्धरूपः श्रीमता।

अत्रैव पृ.७० मुद्रित चतुर्विंशति जिनस्तुत्यतिरिक्ता दानप्रदीपचित्रकूट**महावीर**विहारप्रशस्तिप्रमुखा श्रीमतः कृतिर्विनोदयति मनः सुमनसाम्।

आसीदस्य '**कृष्णसरस्वतीति**' बिरुदमिति ज्ञायते—

दध्रे **कृष्णसरस्वतीति** बिरुदं यो यं च विद्वत्प्रभुं
प्राहुर्विज्ञनरा महार्णवसमस्तीर्णो भवो येन च ।
यस्मै भूपगणो नमस्यति शुभं यस्माच्च यस्योज्ज्वला
मूर्त्तिः स्फूर्तियुता परा गुणभरा यस्मिंश्च वासं दधुः ॥६१॥

**प्रतिष्ठासोम**कृतसोमसौभाग्यकाव्यदशमसर्गान्तर्गतेनानेन काव्येन ।

श्रीआरम्भसिद्धौ सुधीशृङ्गारवार्तिकविरचयितारः श्री**हेमहंसगणिनः** ' महोपाध्यायश्री**चारित्ररत्न**गणिप्रसादप्राप्तविद्यालवेन ' इति स्वविशेषणेन ख्यापयन्ति स्वविद्यादानदायकत्वमस्य ।

लघूपदेशसप्ततिकाकर्ता **सोमधर्मगणिः**
[2]**जिनमाणिक्य**गणिश्च शिष्योत्तमावस्य ।

---

१ यदाह स्वयमेव—

येषां बुद्धिरनुत्तरातिविषमग्रन्थार्थसाक्षात्कृतिं
चेतःसद्मनि दीपिकेन सृजती प्रोज्जागरा सर्वदा ।
सर्वेषामुपयोगिनी समभवद्दानप्रदीपस्तथा
ग्रन्थो यद्विहितश्छिनत्ति कृतिनामद्यापि दुष्टं तमः ॥
जयन्ति ते वाचकपुङ्गवा श्री**चारित्ररत्ना** गुरवो मदीयाः ।
यद्भाणिता वर्यविनयवाराः कुर्वन्त्यनेका उपकारकोटीः ॥

२ विलोक्यतां जैनस्तोत्रसमुच्चये ( पृ. ६ ) सरस्वतीशब्दयमकमयं श्री**युगादिजिनस्तवन**प्रान्तगत उल्लेखः—

" इतिश्री प्रतिकाव्यपादचतुष्टय**सरस्वती**शब्दयमकमयं श्रीयुगादिजिनस्तवनं कृतं महोपाध्यायाधिराजश्री**चारित्ररत्न**गणिशिष्य पं. **जिनमाणिक्यगणिना** । "

## ( ३६ ) श्रीभावदेवसूरिः ।

श्री**कालिकाचार्य**कुलतिलकः सूरिवर्योऽसौ परिचाययति स्वं **श्रीपार्श्वनाथचरित्र**प्रशस्त्या स्वयमेव, तथाहि—

आसीत् स्वामि**सुधर्म**सन्ततिभवो देवेन्द्रवन्द्यक्रमः
श्रीमान् **कालिकसूरि**रद्भुतगुणग्रामाभिरामः पुरा ।
जीयादेष तदन्वये जिनपतिप्रासादतुङ्गाचल—
भ्राजिष्णुर्मुनिरत्नगौरवनिधिः **षण्डिल्ल**गच्छाम्बुधिः ॥४॥
तस्मिंश्चा**न्द्रकुलोद्भवः** कुवलयोद्बोधैकबन्धुर्यशो—
ज्योत्स्नापूरितविष्टपो विधुरिव श्री**भावदेवो** गुरुः ।
यस्याख्यानसमानमेष बहुशो व्याचक्षमाणोऽधुना
गच्छेऽगच्छदतुच्छगूर्जरभुवि प्रष्ठां प्रतिष्ठामिमाम् ॥ ५ ॥
मनसि धनविवेकस्नेहसंसेकदीप्तो
द्युतिमतनुत यस्य ज्ञानरूपः प्रदीपः ।
असमतमतमांसि ध्वंसयन्नञ्जसासौ
न खलु मलिनिमानं किन्तु कुत्रापि चक्रे ॥ ६ ॥
श्रीमांस्ततो **विजयसिंह**गुरुर्मुनीन्द्र—
मुक्तावलीविमलनायकतां वितेने ।
ज्योतिः सदुज्ज्वलतरं विकिरन् धरित्र्यां
चित्रं न यस्तरलतां कलयाञ्चकार ॥ ७ ॥
दाक्षिण्यैकनिधिर्व्यधान्न सहजे देहेऽप्यहो वाञ्छितं
कारुण्यामृतवारिधिर्विनिदधे गुप्तौ स्वकीयं मनः ।

शान्तात्मानुचरं चिरस्य विनिजग्राहेन्द्रियाणां गणं
यो विज्ञातसमस्तवस्तुरभवत् तुल्यश्च हेमाश्मनोः ॥८॥
तदीयपदेऽजनि **वीरसूरि**र्यन्मानसे निर्मलदर्पणाभे ।
निरूपयामास **सरस्वती** सा त्रैविद्यविद्यामयमात्मरूपम् ॥९॥
सदाभ्यासावेशप्रथितपृथुमन्थानमथना-
दवाप्तं तर्काब्धेर्विबुधपतिसिद्धेशमहितम् ।
यदीयं वाग्ब्रह्मामृतमकृत दर्पज्वरभर-
प्रशान्तिं निःशेषक्षितिवलयवादीन्द्रमनसाम् ॥१०॥
तस्मादभूत् संयमराज्यनेता मुनीश्वरः श्री**जिनदेवसूरिः** ।
यो धर्ममारोप्य गुणे विशुद्धध्यानेषुणा मोहरिपुं बिभेद ॥११॥
आद्यनामक्रमेणैवं प्रसर्पति गुरुक्रमे ।
पुनः श्री**जिनदे**वाख्या बभूवुर्वरसूरयः ॥ १२ ॥
येषां पादारविन्दानरुणनखशिखारागभूयोऽभिरज्य-
लक्ष्मीलीलानिवासान् विमलगुणभृतो भेजिरे राजहंसाः ।
आकृष्टानेकलोकभ्रमरकृतनमस्कारझङ्काररम्यो
येषामद्यापि लोके स्फुरति परिमलोऽसौ यशोनामधेयः ॥१३॥
तेषां विनेयविनयी बहु **भावदेव**-
सूरिः प्रसन्न**जिनदेव**गुरुप्रसादात् ।
**श्रीपत्तनाख्य**नगरे रविविश्व ( १३१२ ) वर्षे
**पार्श्वप्रभो**श्चरितरत्नमिदं ततान ॥ १४ ॥
अतः सुस्पष्टमेवास्य चतुर्दशशताब्दीमध्यकालीनः सत्तासमयः ।
कृतयोऽस्य—
**पार्श्वनाथ**चरित्रम्, **कालिकाचार्य**कथा, यतिदिनचर्या (?) च ।

## (३७) जिनभद्रसूरिः ।

**खरतर**गच्छालङ्कारश्री**जिनराज**सूरेः पट्टधरोऽयं सूरिः । सूरिवर्यस्यास्य सं १४५० वर्षे जन्म, सं. १४६१ वर्षे दीक्षा, सं. १४७५ वर्षे सूरिपदम् सं. १५१४ (५) वर्षे च स्वर्गमनं समजनि । अनेन सम्भवजिनालयप्रतिष्ठायाः प्रागणहिल्लपाटकपुरादिषु विधिधर्मपक्ष( **खरतरग**च्छ ) श्राद्धसङ्घेन ज्ञानरत्नकोशा अकार्यन्त । **सागरचन्द्र**सूरिर्य्यन्तरदृश्यमानं **जिनराज**सूरेर्व्रतमालिन्यं विशङ्क्य पश्चात्तं समुदायात् पृथक्कृत्य तत्स्थानेऽमुं–**जिनभद्रसूरिं** सं. १४७५ वर्षे प्रतिष्ठितवान् । अनेन सूरिणा सूरिपदानन्तरं यावज्जीवं सं. १५१५ पर्यन्तं प्रतिष्ठितानि प्रभूतानि जिनबिम्बानि, लेखितानि च पुस्तकानि यत्र तत्र प्रेक्षणपथपान्थीभवन्ति ।

सं. १४७६ वर्षे **कमलसंयमे**नाऽस्य पार्श्वे दीक्षाऽग्राहि । सं. १५४४ वर्षे जेशलमेरुदुर्गे सर्वार्थसिद्धिसंज्ञकोत्तराध्ययनसूत्रवृत्तिश्च विनिर्ममे ।

सं. १४८४ वर्षे पत्तनस्थमेनं प्रति **जयसागरोपाध्यायः** सिन्धुदेशान्तर्गतमल्लिकावाहणपुरात् विद्वत्तापूर्णा विज्ञप्तित्रिवेणी प्रहितवान् । सं. १४९५ वर्षे **जयसागरोपाध्याय**विहिता सन्देहदोलावलिवृत्तिश्चैतेन व्यशोधि ।

---

१ खरतरगच्छपट्टावल्यादौ **जिनराज**सूरिपार्श्वे दीक्षा, विद्याध्ययनं तु वाचक**शीलचन्द्र**पार्श्वेऽनेन व्यधायीत्युल्लेखो दृश्यते, परमपवर्गनाममालान्ते–

श्री**जिनवल्लभजिनदत्त**सूरिसेवी **जिनप्रिय**विनेयः ।

अपवर्गनाममालामकरो**ज्जिनभद्रसूरि**रिमाम् ॥" इत्युल्लेखदर्शनादस्य गुरोः '**जिनप्रिय**' इति ध्वन्यते नाम ।

**जिनचन्द्रसूरि**रस्य पट्टधरः, सं. १५१९ वर्षे पुष्पमालावृत्ति-चरित्रपञ्चकवृत्तिविधातुः **साधुसोम**गणिनो गुरु**र्ग्यासदीनसाहि**सभायां वादिविजेता सिद्धान्तरुच्युपाध्यायः समयध्वजप्रभृतयोऽष्टादश च विद्वांसोऽस्य शिष्याः । **भावप्रभाचार्य–कीर्तिरत्ना**चार्यादींश्चासौ सूरिपदेऽस्थापयत् ।

सं. १५१८ वर्षे ऊकेशवंशीयेन केनचित् श्राद्धेन कारिताऽस्य प्रतिमा नगरग्रामे जैनमन्दिरभूमिगृहे स्थापिता वर्तते । सं. १५२४ वर्षे **कमलसंयमो**पाध्यायेन प्रतिष्ठिते अस्य पादुके च वैभारगिरौ विद्येते ।

कृतयस्त्वस्य–अपवर्गनाममाला, जिनसप्ततिकाप्रकरणं (गा. २२०) द्वादशाङ्गीपदप्रमाणकुलकं चेति ।

## ( ३८ ) महिमेरुः—

अत्रैव पृ. ३६ मुद्रित क्रियागुप्तजिनस्तुतिपञ्चाशिकापर्यन्ते–
गच्छाधिपश्री**जयकीर्तिसूरि**शिष्यो **महीमेरु**रहं स्तवं ते ।
कृत्वा क्रियागुप्तकवित्वमित्थं त्वामेव दध्यां हृदये जिनेन्द्र ! ॥

इत्यनेन पद्येन ज्ञापयति स्वयं स्वस्य श्री**जयकीर्तिसूरि**शिष्यत्वम्, श्री**जयकीर्तिसूरि**स्तु विधिपक्ष ( **अञ्चलगच्छ** ) पट्टावल्यनुसारेण समलञ्चकार अष्टपञ्चाशत्तमं पट्टम्, **श्रीमालीज्ञातीयभूपाल**-श्रेष्ठिभार्या **भरमादे** कुक्षौ सं. १४३३ वर्षे **तिमिरपुरे** जन्म, सं. १४४४ वर्षे दीक्षा, सं. १४६७ वर्षे **स्तम्भतीर्थे (खम्भातबन्दिरे)** सूरिपदम्, सं. १४९३ वर्षे पत्तने गच्छनायकत्वम्, सं. १५०० वर्षे निर्वाणमस्य अतः सुस्पष्टमेवास्यापि पञ्चदशशताब्दीरूपः सत्ताकालः ।

कृतेऽपि यथाशक्ति प्रयत्ने नेतरत् किञ्चिदैतिह्यवृत्तान्तं नापरास्य च कृतिश्चकार मे नयनसाफल्यम्।

## ( ३९ ) श्रीपार्श्वचन्द्रसूरिः।

**नागपुरीयतपागच्छात्** सं. १५७२ वर्षे **पार्श्वचन्द्रमतप्रवर्तकः साधुरत्नसूरि**वर्यशिष्योऽयमाचार्यः।

**प्राग्वाटज्ञातीयवेल्हगसिंहभार्याविमलादे**कुक्षौ सं. १५३७ वर्षे **हम्मीरपुरे**ऽस्य जन्म, सं. १५४६ वर्षे दीक्षा, सं. १५५४ वर्षे उपाध्यायम्, सं. १५६५ वर्षे सूरिपदम्, सं. १५९९ वर्षे युगप्रधानपदम्, सं. १६१२ वर्षे मार्गशीर्षशुक्लतृतीयायां **जोधपुरे ( मरुस्थले )** स्वर्गवासः।

इण्डीअन एण्टीक्वेरी ग्रन्थस्य खीस्ताब्द ( १८९४ ) स्य अङ्के मुद्रित**पायचंदगच्छ**पट्टावल्यनुसारेणाऽस्य वंशवृक्षस्त्वेवम्—

**पूर्णचन्द्रसूरिः**
|
**हेमहंससूरिः**
|
**लक्ष्मीनिवाससूरिः**
|
**पुण्यरत्नसूरिः**
|
**साधुरत्नसूरिः**
|
**पार्श्वचन्द्रसूरिः**

अस्य पट्टप्रभावकेण श्री**विनयदेवसूरिणा ( ब्रह्मर्षिणा )**

विनिर्ममे **दशाश्रुतस्कन्ध**सूत्रवृत्तिः **जम्बूद्वीपप्रज्ञप्तिवृत्तिः पाक्षिकसूत्र**वृत्तिश्च ।

श्री**समरचन्द्रसूरि**स्त्वस्य मुख्यः पट्टधरः ।

अस्य कृतिकलापः—

**आचाराङ्गसूत्र**बालवबोधः, साधुवन्दना (लघुः बृहच्च), पाक्षिक छत्रीसी ( गा. ३६ ) अतिचारचौपई गा. १५६ (सं. १६५७) चारित्रमनोरथमाळा, श्रावकमनोरथमाळा, आत्मशिक्षा, आगमछत्रीशी, **वस्तुपालतेजःपाल** रास ( सं. १५९७ ) **उत्तराध्ययन** छत्रीसी, गुरुछत्रीसी, मुहपत्तिछत्रीसी, विवेकशतक, विधिशतक, दूहाशतक, एषणाशतक, संघरंगप्रबन्ध, अमरद्वासप्ततिका, जिनप्रतिमास्थापनाविज्ञप्तिः, नियतानियतप्रश्नोत्तरदीपिका, ११ बोलसज्झाय, ब्रह्मचर्य १० समाधिस्थानकुलक, **चित्रकूट**चैत्यपरिपाटीस्तवन, सत्तरभेदीपूजागर्भित स्तवन, कायोत्सर्ग १९ दोष सज्झाय, वन्दनक ३२ दोषकुलक, उपदेशरहस्यगीत, आराधना मोटी (१५९२) माघ सुदि १३), आराधना नानी, स्कन्धकचरित्रसज्झाय, (सं. १६०० वै. शु. ८ शुक्रे ) आदीश्वरविज्ञप्तिका स्तवन, विधिविचार, निश्चय व्यवहार स्तवन, वीतरागस्तवन, गीतार्थपदावबोधकुलक, श्रुतपक्षरास, ३४ अतिशयस्तवन, वीस विहरमानजिनस्तुतिः, **शान्तिजिन**स्तवन, रूपकमाळा सं. १५८६) एकादश वचनद्वात्रिंशिका, सज्झाय, इत्यादिको रञ्जयति मनः सुमनसामद्यापि ।

## (४०) श्रीविजयप्रभसूरिः।

सुगृहीतनामधेयश्री**विजयहीरसूरि**पट्टपद्माकरप्रबोधनैकतरणिश्री-**विजयसेनसूरि**-श्री**विजयदेव**सूरि—श्री**विजयसिंह**सूरिपट्टविभूषकः सूरिवर्योऽसौ।

जैनगूर्जरकाव्यसञ्चयान्तर्मुद्रित—विमलविजयविरचितश्रीविजयप्रभसूरिनिर्वाणसज्झायाऽनुसारेण विक्रमतः सं. १६७७ वर्षे माघ शुक्ल ११ दिने कच्छदेशे मनोहरपुरे ओशवंशभूषामणिश्रेष्ठिवर्य**शिवगण**सधर्मचारिणी**भाणी**कुक्षौ श्रीमतो जन्म। नववर्षदेशीयः सं. १६८६ वर्षे श्री **विजयदेव**सूरिपार्श्वे जग्राह दीक्षाम्। **वीरविजय** इति पप्रथे नाम। सं. १७०१ वर्षे पं. पदम्। सं. १७१० वर्षे वैशाखशुक्लदशम्यां **गान्धार**नगरे सूरिपदम्, ततो '**विजयप्रभसूरि**' रिति प्रसिद्धिः।

वरिवर्त्ति सं. १७१३ वर्षे पूज्यपादप्रतिष्ठिता स्तम्भतीर्थे माणेकचोकस्थश्रीपार्श्वनाथजिनालये श्री**विजयदेवसूरेः** पादुका, यदर्थं विलोक्यतां जैनधातुप्रतिमालेखसङ्ग्रहस्य द्वितीयविभागे १७० तमे पृष्ठे मुद्रितो ४८ सङ्ख्याङ्को लेखः।

इहैव पृ. ३५ मुद्रितश्रीदेवपत्तननिवासिजिनस्तवनातिरिक्ता

---

१ श्रीमद्विजयानन्दसूरिविनिर्मिते जैनतत्वादर्शग्रन्थे—

सं. १६७५ वर्षे जन्म, सं. १६८९ वर्षे दीक्षा सं. १७०१ वर्षे पंडितपदम्, सं. १७१० वर्षे उपाध्यायपदम्, सं. १७१३ भट्टारकपदम्। सं. १७४९ वर्षे स्वर्गमनं दर्शितमस्ति। 'जैनगूर्जरकविओ' द्वितीयविभागे पट्टावल्यन्तरानुसारेण '**कच्छदेशे वराही** ग्रामे जन्म, सं. १७४९ वर्षे ज्येष्ठ सुदि १२ **ऊना** ग्रामे स्वर्गवासश्च प्रादर्शि।

नेतरा श्रीमतः कृतिः प्रयाति दृष्टिगोचरम्, तथापि **न्या. न्या.** श्रीमद् **यशोविजयमहोपाध्याययेन** विनिर्मितः षट्दर्शनमान्यतागर्भितः स्वाध्यायः प्रथयति श्रीमतः प्रतिभाप्रकर्षं प्रतिष्ठां च । स चैवम्—

## श्रीविजयप्रभसूरिस्वाध्यायः ।

### ( कडखो )

**श्रीविजयदेव**सूरीशपट्टाम्बरे जयति **विजयप्रभः** सूरिरर्कः ।
जैनवैशिष्ट्यसिद्धिसङ्गादिना
निजगृहे योगसमयाय तर्कः ॥ श्रीविजय० १ ॥
ज्ञानमेकं भवेद् विश्वकृतकेवलं दृष्टबाधा तु कर्तरि समाना ।
इति कर्तृलोकोत्तरे सङ्गते सङ्गता यस्य धीः सावधाना ॥
॥ श्रीविजय० २ ॥
ये किलोपोहशक्तिं सुगतसूनवो जातिशक्तिं च मीमांसका ये ।
सङ्गिरन्ते गिरं ते यदीयं नयद्वैतपूतां प्रसह्य सहन्ते ॥ श्रीविजय० ३ ॥
कारणं प्रकृतिरङ्गीकृतं कापिलैः कापि नैवात्मनः कापि शक्तिः ।
बन्धमोक्षव्यवस्था तदा दुर्घटेत्यत्र जागर्ति यत्प्रौढशक्तिः ॥
॥ श्रीविजय० ४ ॥
शाब्दिकाः स्फोटसंसाधने तत्परा ब्रह्मसिद्धौ च वेदान्तनिष्ठाः ।
**सम्मति**प्रोक्तसंग्रहरहस्यान्तरे यस्य वाचा जितास्ते निविष्टाः ॥
॥ श्रीविजय० ५ ॥
ध्रौव्यमुत्पत्तिविध्वंसकिर्मीरितं द्रव्य–पर्याय–परिणतिविशुद्धम् ।
विस्रसायोगसङ्घातभेदाहितं स्वसमयस्थापितं येन बुद्धम् ।
॥ श्रीविजय० ६ ॥

इति नुतः **विजयप्रभो** भक्तितस्तर्कयुक्त्या मया गच्छनेता ।
श्री**यशोविजय**सम्पत्करः कृतधियामस्तु विघ्नापहः शत्रुजेता ॥
॥ श्रीविजय० ७ ॥

## ( ४१ ) शुभसुन्दरगणिः ।

मन्त्रतन्त्रभेषजादिविविधविद्याविशारदोऽसौ मुनिप्रवरः कदा कं महीमण्डलं मण्डयामासेति जिज्ञासायां पर्यालोचने प्रवृत्ते अत्रैव पृ. ३५३ मुद्रित **देलउलामण्डन**युगादिजिनस्तवान्ते—

इत्थं भेषजयन्त्रतन्त्रकलितैः सन्मन्त्ररत्नैश्चितां
कृत्वा श्री**मुनिसुन्दर**स्तुत ! नुतिं **देलुलने**तस्तव ।
**लक्ष्मीसागर**नामधेय ! करुणाम्भोधे ! युगादिप्रभो !
दुःस्थोऽहं **शुभसुन्दरां**ह्रियुगलीसेवासुखं प्रार्थये ॥ २ ॥

इत्येतस्मिन् पद्ये **मुनिसुन्दर**[1]**सूरि—लक्ष्मीसागर**[2]सूरिनामधेयावलोकनात् सं. १४३६ तः सं. १४१७ पर्यन्तः तत्समानकालीन एवास्य सत्तासमयः ।

कृतिसन्दर्भ—शिष्यादिपरिचितिं प्रदातुकामोऽपि व्यनज्मि साधनाभावात् स्वकीयामशक्तिमिह ।

---

१ श्याम**सरस्वती**तिबिरुदभृतः सूरिवर्यस्यास्य विक्रम संवत् १३३६ वर्षे जन्म, संवत् १४४३ वर्षे व्रतम् , सं. १४६६ वर्षे वाचकपदम् , सं. १४७८ वर्षे सूरिपदम्, सं. १५०२वर्षे स्वर्गगमनम् ।

२ संवत् १४६४ वर्षे जन्म, सं. १४७० वर्षे दीक्षा, सं. १४९६ वर्षे पन्यासपदम्, सं. १५०२ वर्षे वाचकपदम् , सं. १५०८ वर्षे सूरिपदम्, सं. १५१७ वर्षे गच्छनायकत्वमस्य ।

( ४२ )

न्यायविशारद–न्यायाचार्य–महोपाध्याय–

**श्रीयशोविजयः ।**

महात्मनोऽस्य जन्मसमय–पितृ–मातृ–कुल–जन्मस्थलादिविषये प्रयतताममपि विदुषामनेकेषामद्यावधि न कोऽपि समजायत निर्णयः ।

**आनन्दघनपद्यरत्नावल्या** उपोद्घाते चतुर्थ गूर्जरसाहित्यपरिषन्निबन्धरूप ' **न्यायविशारदजीवने** ' अन्यत्रापि च विक्रमसंवत् १६७०–८० मध्ये जन्मसमयः कल्पितः, तां चा कल्पनामपाकरोति **श्रीलोकनालिका**बालबोधप्रान्तस्थनिम्नलिखितपुष्पिकावलोकनात् प्रतिमाशतकप्रस्तावनायां पं. **श्रीप्रतापविजयो** गणिः–

'स्वार्थाय लोकनाले**जशविजया**ह्वः प्रतनुधिषणः॥४॥ इति लोकनालिबालावबोध संवत् १७०७ वर्षे कार्तिक वदि १ भौमे........ नक्षत्रे लिखाइतम् । १६६५ वर्षे ज्येष्ठ सुदि १३ सोमे अनुराधा नक्षत्रे कृतः । ''

निकृन्तति चैनामपि **मोहनलाल दलीचंद देसाई** अधुनैव समुपलब्धरासकानुसारेण निरूप्य वैक्रमीय १६८८ तमे वर्षे दीक्षां वणिक्कुलं च, जन्मतः सप्तमेऽष्टमे वा हायने कक्षीकृता श्रीमता दीक्षेति निर्विवादमेव ।

लोकनालिकाबालावबोधशब्दरचनां विलोक्यानुमीयते कैश्चित् श्रीमतो गूर्जर ( सौराष्ट्र ) भूर्जन्मस्थलमिति, किन्तूक्तरासके तु **कनोड्डू** ( **कन्होड्डू** ) ग्रामे जन्म, **पत्तना**सन्नवर्ति**कुणगिरि**ग्रामतः

समेतानां श्री**नयविजयगुरु**वर्याणां बभूव परिचय इति स्पष्टतर उल्लेखः।

(१) प्रतिदिनं **भक्तामर**स्तवश्रवणमन्तरेण भोजनं न ग्राह्य-मिति प्रतिपन्नस्तत्रभवतो मात्रा गुरुसकाशे नियमः। गते च काले कियत्यपि प्रवर्षितुं लग्नो मुशलधारयाविश्रान्तं वारिदः, नाशक्नोदुपाश्रयं गत्वोपगुरु भक्तामरस्तवं श्रोतुम्, न च पचति किमपि सा। पृष्टं कारणं क्षुधार्तेन श्रीमता। यथास्थितं प्रोक्तवती सा। प्रत्यहं मात्रा समं गच्छतोपाश्रयं श्रावं श्रावमवधारितः श्रीभक्तामरस्तवोऽस्खलितं श्रावितः पूज्यपादेन। ततः पूर्णे प्रत्याख्याने प्रहृष्टा माता, विहिता भुक्ता च रसवती।

(२) निवसता काश्यां द्वादश वत्सरान् समधीतान्यशेषाणि न्यायशास्त्राणि, स्थितश्चैकः सप्तसहस्रश्लोकप्रमाणो ग्रन्थः, तं तु प्रार्थितोऽपि नाध्यापयति स्वमहत्वक्षतिभीत्या गुरुः, लब्धः प्रसन्नीकृत्य गुरुं विलोकनाय। एकस्यामेव निशायां कण्ठीकृत्य चतुः सहस्रीं श्लोकानां श्रीमता, त्रिसहस्री **विनयविजयो**पाध्यायैश्च प्रातः प्रत्यर्पितो गुरवे ग्रन्थः।

इत्येताभ्यां प्रघोषाभ्यां ध्वन्यतेऽत्रभवतोऽसाधारणावधारणशक्तिः।

---

१ द्वादशाब्दीं यावदध्युवास श्री**विनयविजयोपाध्यायेन** समं विद्याध्ययनाय वाणारसीं श्रीमानिति श्रूयते प्रघोषः किन्तु निम्नलिखितग्रन्थ-रचनादिकालावलोकनात् न क्वापि द्वादशाब्द्या अन्तरः समवतरति दृष्टिपथम्। तथाहि—

सं. १६८७ श्री**विनयविजयेन** स्वयं लिखिता यन्त्रराजप्रतिः।

ऐन्द्रस्तुति—महावीरस्तुति—समाचारीप्रकरण—द्वात्रिंशद्द्वात्रिंशिका—तर्कभाषा—जम्बूस्वामिरास—३५० गाथा स्तवनाद्यन्तर्गतैस्तत्रभवत एव पद्यैः श्री**मानविजय**विरचितधर्मसंग्रहप्रशस्तिपद्यैश्च समासाद्यते

---

| | | | |
|---|---|---|---|
| सं. १६८९ | श्री**भावविजय**कृता उत्तराध्ययनवृत्तिः समशोधि | | श्री**विनयविजयेन** । |
| सं. १६९० | स्वगुरुश्री**कीर्तिविजय**कृतो विचाररत्नाकरोऽलेखि | | ,, |
| सं. १६९४ | विज्ञप्तिपत्रम् | ,, | ,, |
| सं. १६९६ | कल्पसूत्रे सुबोधिका वृत्तिर्विरचिता | | ,, |
| सं. १७१०(?) | इन्दुदूतकाव्यम् | व्यरचि | ,, |
| सं. १७१०(?) | नयकर्णिका | ,, | ,, |
| सं. १७१०(?) | हेमलघुप्रक्रियाव्याकरणम् | ,, | ,, |
| सं. १७१२ | विज्ञप्तिपत्रम् | अलेखि | ,, |
| सं. १७१६ | श्रीधर्मनाथस्तवनम् (सुरतद्रङ्गे) | व्यरचि | ,, |
| सं. १७१८ | महोपा० श्री**यशोविजयस्य** उपाध्यायपदप्रतिष्ठा । | | |
| सं. १७२६ | धर्मपरीक्षा (समशोधि विनयवि०) | व्यरचि | **यशोविजयेन** । |
| सं. १७२९ | पुण्यप्रकाशस्तवनम् (रांदेरपुरे) | ,, | **विनयविजयेन** |
| सं. १७३१ | जिनसहस्रनामस्तोत्रम् | ,, | ,, |
| सं. १७३१ | श्री**मानविजय**कृतो धर्मसंग्रहः | समशोधि | श्रीयशोविजयेन |
| सं. १७३२ | पञ्चसमवायस्तवनम् | व्यरचि | श्रीविनयविजयेन |
| सं. १७३२ | पञ्चकल्याणकस्तवनम् | ,, | यशोविजयेन |
| सं. १७३२ | मौनैकादशीगणनास्तवनम् | ,, | ,, |
| सं. १७३३ | १५० गाथास्तवनम् | ,, | ,, |
| सं. १७३४ | निश्चयव्यवहारस्तवनम् | ,, | ,, |
| सं. १७३८ | श्रीपालरासपूर्तिः (विनयवि० स्वर्गमनम्) | कृता | ,, |
| सं. १७३९ | जम्बूस्वामिरासः | व्यरचि | ,, |
| सं. १७४४ | एकादशाङ्गस्वाध्यायः | ,, | ,, |

श्रीमतो विद्याध्ययनार्थं **काशी** (**वाराणसी** गमनोल्लेखः । तत्र च विलोक्याप्रतिमप्रतिभाप्राग्भारमस्य प्रमुदितचेतस्का विबुधावतंसास्तत्रत्या विभूषयाञ्चक्रुः श्रीमन्तं '**न्यायविशारदं**' पदेन पूर्वं, ग्रन्थशतीविरचनानन्तरं च **न्यायाचार्य**पदेन । यदाह स्वयमेव—

'पूर्वं **न्यायविशारद**त्वबिरुदं **काश्यां** प्रदत्तं बुधै-
**न्यायाचार्य**पदं ततः कृतशतग्रन्थस्य यस्यार्पितम् ।

—तर्कभाषाप्रशस्तौ ।

---

सं. १७४४ प्रतिक्रमणगर्भहेतुः ,, ,,
सं. १७४५ श्रीयशोविजयोपाध्यायस्य स्वर्गवासः ।
सं. शान्तसुधारसभावना विनयवि०
सं. लोकप्रकाशः विनयवि०

अतः श्री**विनयविजयेन** समं काशीगमनं प्रतिभात्यघटमेव, किन्त्वेनमध्यापयितुं काश्यामवसन् सद्गुरव एवास्य श्री**नयविजय**विज्ञः । यदुक्तं श्रीमतैव द्वात्रिंशद् द्वात्रिंशिकायाम्—

प्रकाशार्थं पृथ्व्यास्तरणिरुदयाद्रेरिह यथा
यथा वा पाथोभृत् सकलजगदर्थे जलनिधेः ।
तथा **वाराणस्यां** सविधमभजन् ये मम कृते
सतीर्थ्यास्ते तेषां **नयविजय**विज्ञा विजयिनः ॥

१ अत्र किंवदन्ती त्वेवम् —

समीयाय कश्चिदितरदेशीयः पण्डितप्रकाण्डो विजेतुं वाराणसीयान् विदुषः, पराजितेषु सर्वेषु समासाद्य स्वकीयविद्यागुरुवरादेशं विशदं स्याद्वादपद्धत्या निरलोठयत् तं श्रीमान्, वव्रे च जयपताकां ततः प्रमोदभरमेदुरा व्यश्राणयन् विपश्चितोऽस्मै बिरुदमेतत् ।

तत्र वसतोपगङ्गमैङ्कारमन्त्रं समाराध्य यथाविधि गुरूपदिष्टं तुतोष **सरस्वतीं** देवीं, प्रायच्छच्च साऽस्मै वरमिति तु सर्वथाऽवितथमेव, उक्तं च श्रीमतैव—

मा तूठी मुज उपरे जपत जाप उपगंग.

— **जंबू स्वामी** रास.

ऐङ्कारजापवरमाप्य कवित्वविस्व-
वाञ्छासुरद्रुमुपगङ्गमभङ्गरङ्गम् ।

— श्रीमहावीरस्तुतौ ।

ऐन्द्रपदाङ्किता, यशःश्र्यङ्का, रहस्यपदाङ्किता च ग्रन्थसंहतिः पूज्यपादस्य । तत्रोपलब्धाः संस्कृतप्राकृतभाषानिबद्धा ग्रन्थास्त्विमे—

| ग्रन्थनाम | ग्रन्थाग्रम् | टीका | प्रकाशनम् |
| --- | --- | --- | --- |
| १ अध्यात्ममतपरीक्षा (गा. १८४) | ४००० | स्वोपज्ञा | दे. लॉ.[1] |
| २ अध्यात्मसारः | १३०० | पं. गंभीरवि०जै. | ध.[2] |
| ३ अध्यात्मोपनिषद् | २३१ | | |
| ४ अनेकान्तमतव्यवस्था | ३३५७ | | |
| ५ अविदितनामा ग्रन्थः | | | |
| ६ अस्पृशद्गतिवादः | | | आत्मा.[3] |
| ७ आदिजिनस्तवनम् | | | आ. स.[4] |

१ श्रेष्ठी देवचन्द्र लालभाई जैन पुस्तकोद्धार फण्ड (सूरत)
२ जैनधर्मप्रसारक सभा (भावनगर)
३ आत्मानन्दजैनसभा ,,
४ आगमोदयसमितिः

| | | | | |
|---|---|---|---|---|
| ८ आध्यात्मिकमतखण्डनम् | | | स्वोपज्ञा | जै. ध. |
| ९ आराधकविराधकचतुर्भङ्गी | | | | |
| १० उपदेशरहस्यम् (प्रा.) | | २००० | स्वोपज्ञा | म. भै. |
| ११ ऐन्द्रस्तुतयः | | | स्वोपज्ञा | आत्मा. |
| ,, | | | अवचूरिश्च । | आ. स. |
| १२ गुरुतत्त्वविनिश्चयः (प्रा. ९०५) | | | स्वोपज्ञा | आत्मा. |
| १३ जैनतर्कपरिभाषा | ८०० | | | जै. ध. |
| १४ ज्ञानबिन्दुः | | १२५० | | |
| १५ ज्ञानसारः | | | स्वोपज्ञा | |
| ,, | ज्ञानमञ्जरी टीका | | देवचन्द्रकृता | आत्मा. |
| १६ ज्ञानार्णवः | | | | |
| १७ तत्त्वविवेकः | | | स्वोपज्ञा | |
| १८ तिङन्वयोक्तिः | | | | |
| १९ देवधर्मपरीक्षा | ४२५ | | | जै. ध. |
| २० द्वात्रिंशद् द्वात्रिंशिका | ५५०० (ससूत्रम्) | | स्वोपज्ञा | ,, |
| २१ धर्मपरीक्षा (प्रा.) | ५५०० सं. १७२६ | | स्वोपज्ञा | हे.[२] ग्र. |
| २२ नयप्रदीपः | | | | जै. ध. |
| २३ नयरहस्यम् | | | | ,, |
| २४ नयोपदेशः | (नयामृततरङ्गिणीनाम) स्वोपज्ञा । | | | ,, |
| | भावप्रभसूरिकृतपर्यायसमेता | | | आत्मा० |

१ श्रेष्ठि मनसुखभाई भगुभाई ( अमदावाद )

२ श्रीहेमचन्द्राचार्यग्रन्थमाला ।

२५ निशाभक्तविचारः

२६ न्यायखण्डनखण्डखाद्यम् ५५०० म. भ.[1]

( महावीरस्तवनम् )

२७ न्यायालोकः १२००

२८ पञ्चनिर्ग्रन्थीप्रकरणम्

२९ परमज्योतिः पञ्चविंशतिका २५ श्रीमन्मुक्ति०

३० परमात्मपञ्चविंशतिका २५ ,,

३१ प्रतिमाशतकम् स्वोपज्ञा ,,

,, भावप्रभसूरिकृता लघुवृत्तिः आत्मा.

३२ प्रतिमास्थापनन्यायः अपूर्णः श्रीमन्मुक्ति.

३३ फलाफलविषयकप्रश्नोत्तरम् जै. सा.[2]

३४ भाषारहस्यम्[3] स्वोपज्ञा म. भ.

३५ मार्गपरिशुद्धिः ( पूर्वार्द्धः ) मूलमात्रा श्रीमन्मुक्ति.

३६ मुक्तिशुक्तिः

३७ यतिदिनचर्याप्रकरणम्

३८ यतिलक्षणसमुच्चयः (प्रा.) २६२ जै. ध.

३९ वैराग्यकल्पलता ( मूलमात्रम् ) ६०५० भी. मा.[4]

---

१ श्रीमन्मुक्तिकमलजैनमोहनमाळा २ जैन साहित्यसंशोधक (त्रिमासिकम्) ३ एतद्ग्रन्थप्रारम्भ एव. 'भाषाविशुद्धयर्थं रहस्यपदाङ्किततया चिकीर्षिताष्टोत्तरशतग्रन्थान्तर्गतप्रमारहस्य-स्याद्वादरहस्यादिसजातीयं प्रकरणमिदं प्रारभ्यते' इत्युल्लेखदर्शनादनुमीयते यदनेन प्राणायि रहस्यपदाङ्किताऽष्टोत्तरा ग्रन्थशतीति । ४ श्रावक भीमसींह माणेक.

| | | | |
|---|---|---|---|
| ४० | श्रीगोडीपार्श्वस्तोत्रम्(श्लो.१०८) | | अत्रैव. |
| ४१ | श्रीविजयप्रभसूरिस्वाध्यायः | ७ | आ. स. |
| ४२ | श्रीशङ्खेश्वरपार्श्वस्तोत्रम् | ११२ | अत्रैव. |
| ४३ | समीकपार्श्वस्तोत्रम् | ९ | ,, |
| ४४ | समाचारीप्रकरणम् | स्वोपज्ञा | आत्मा. |
| *४५ | स्तोत्रावलिः | | |

पूर्वाचार्यकृतग्रन्थानां **न्यायाचार्य**विहिता :

समुपलभ्यमानाष्टीकाः ।

| | | | |
|---|---|---|---|
| १ | अष्टसहस्रीविवरणम् | ८(५१)००० | |
| २ | कम्मपयडी (कर्मप्रकृति) टीका | १३०० | ( स्वहस्त–दे. ला. लिखिता) |
| ३ | कम्मपयडीलघुवृत्तिः | यत्किञ्चित् | आत्मा. |
| ४ | तत्वार्थवृत्तिः | अपूर्णा | म. भ. |
| *५ | द्वादशारनयचक्रोद्धारबिवरणम् | १८००० | |
| ६ | धर्मसंग्रहोपरि टिप्पनम् | | दे. ला. |
| ७ | पातञ्जलयोगसूत्रवृत्तिः | | आ. स. |
| ८ | योगविंशिकाविवरणम् | | ,, |
| ९ | शास्त्रवार्तासमुच्चयटीका (स्याद्वाद–कल्पलता) | १३००० | दे. ला. |
| १० | षोडशकवृत्तिः (योगदीपिका) | १२०० | ,, |
| ११ | स्तवपरिज्ञापद्धतिः | | श्रीमन्मुक्ति० |

## अनुपलब्धा ग्रन्थाष्टीकाश्च

| | |
|---|---|
| १ अध्यात्मबिन्दुः | १५ वादमाळा |
| २ अध्यात्मोपदेशः | १६ वादरहस्यम् |
| ३ अलङ्कारचूडामणिटीका | १७ विचारबिन्दुः |
| ४ आकरः | १८ विधिवादः |
| ५ आत्मख्यातिः (ज्योतिः) | १९ वीरस्तवटीका |
| ६ काव्यप्रकाशटीका | २० वेदान्तनिर्णयः |
| ७ छन्दश्चूडामणिटीका | २१ वेदान्तविवेकसर्वस्वम् |
| ८ ज्ञानसारचूर्णिः | २२ वैराग्यरतिः |
| ९ तत्त्वालोकविवरणम् | २३ शठप्रकरणम् |
| १० त्रिसूत्र्यालोकविधिः | २४ सिद्धान्ततर्कपरिष्कारः |
| ११ द्रव्यालोकः | २५ सिद्धान्तमञ्जरीटीका |
| १२ प्रमारहस्यम् | २६ स्याद्वादमंजूषा ( स्याद्वादमञ्जरीटीका ) |
| १३ मङ्गलवादः | |
| १४ लताद्वयम् | २७ स्याद्वादरहस्यम् |

## गूर्जरभाषानिबद्धा ग्रंथाः ।

| | |
|---|---|
| १ अध्यात्ममतपरीक्षा (टबो) | मुद्रित |
| २ आनन्दघनरूपा अष्टपदी | ” |
| ३ उपदेशमाला | ” |
| ४ जम्बूस्वामिरास ( सं. १७३९ ) | ” |
| ५ जशविलास | ” |
| ६ जेशलमेरुनो पत्र | ” |
| ७ ज्ञानसार टबो | |

८ तत्वार्थसूत्र टबो
९ द्रव्यगुणपर्यायनो रास मुद्रित
१० दिग्पट ८४ बोल (काश्यां आगच्छता रचितः) „
११ पञ्चपरमेष्ठिगीता „
१२ ब्रह्मगीता „
१३ लोकनालि (बत्रीसी) बालबोध (?) रचना सं. १६३५
१४ विचारबिन्दु
१५ विचारबिन्दु (टबो)
१६ शठ प्रकरण बालावबोध
१७ श्रीपालरास उत्तरभागः (सं. १७३४) मुद्रितः
१८ समाधिशतकम् (तन्त्र) „
१९ समताशतकम् „
२० सम्यक् शास्त्रसार पत्रम „
२१ समुद्रवाहनसंवादः „
२२ सम्यक्त्वचोपाइ

## स्तवनानि।

१ आवश्यकस्तवनम्
२ कुमतिखण्डनस्तवनम्
३ चतुर्विंशतिकात्रयम् मुद्रित.
४ दशमत स्तवनम् „
५ नवपदपूजा „
६ नयगर्भित शान्तिजिन-स्तवनम् „
७ निश्चयव्यवहारगर्भितं-(सं. १७३४) „
सीमंधरस्वामिस्तवनम्
८ पार्श्वनाथ (धमाल)-स्तवनम् „
९ पार्श्वनाथ (दातण) स्तवनम् „

१० महावीरस्तवनम् ,, (ढूंढकमत निराकरणम् ) सं. १७३३

११ मौनैकादशी १५०–कल्याणकस्तवनम् मुद्रित ( सं. १७३२ )

१२ विहरमान जिन-विंशतिका ,,

१३ श्रीवीरस्तुति हुंडीरूप १५० गाथा स्तवनम् ,,

१४ श्रीसीमन्धर चैत्यवन्दनम्

१५ श्रीसीमन्धर विनतिरूप १२५ गाथास्तवनम् ,,

१६ श्रीसीमन्धरस्वामि स्तुति–रूप ३५० गाथास्तवनम्

## स्वाध्यायग्रन्थाः ।

१ अढारपाप स्थानक–सज्झाय (मु.)

२ अमृतवेली ,,

३ अग्यार अङ्ग (११ ढाळ) ,,

४ अग्यार अङ्ग उपाङ्ग ,, ( सं. १७४४ )

५ आत्मप्रबोध ,,

६ आठ दृष्टि ,,

७ उपशमश्रेणि ,,

८ चडता पडतानी ,,

९ चार आहार ,,

१० ज्ञानक्रिया ,,

११ पांच महाव्रतभावना ,,

१२ पांच कुगुरु सज्झाय मुद्रित

१३ प्रतिक्रमणगर्भहेतु ( सं. १७४४ ) ,,

१४ प्रतिमास्थापन ,,

१५ यतिधर्मबत्रीशी ,,

१६ स्थापनाकल्प ,,

१७ सुगुरु ,,

१८ संयमश्रेणी ,,

१९ सम्यक्त्व ६७ बोल ,,

२० हरियाली ,,

२१ हितशिक्षा ,,

एतदर्थे विशेषजिज्ञासुभिर्विलोकनीया श्रीआगमोदयसमिति-द्वारा प्रसिद्धायाः श्री**शोभन**मुनिविरचितायाष्टीकाचतुष्कसमलङ्कृतायाः स्तुतिचतुर्विंशतिकायाः प्रो. ही. र. कापडीया संदृब्धा संस्कृतभाषायां सुविस्तृता भूमिका ।

अपरेऽप्यनेके सम्भवेयुः श्रीमता प्रणीता ग्रन्थास्तांश्च सूचयिष्यन्ति ये केचिद्विपश्चितो मां तेषां मंस्येऽहमनल्पतरमुपकारम् ।

समशोधि सं. १७३१ वर्षे श्री**मानविजय**विरचितो धर्मसंग्रहाभिधो ग्रन्थः पूज्यपादेन ।

अष्टादशावधानकरणेन चमच्चकार **गूर्जराधिपतिं** श्री**महबतखान**मिति कथने तु नास्ति कथमपि कथङ्कथिकताया अवकाशः, यत आसन् पुरा सहस्रावधानिनः श्री**मुनिसुन्दरसूरयः**, अष्टोत्तरशतावधानिनः श्री**सिद्धिचन्द्रगणयः** श्री**शान्तिचन्द्रोपाध्यायाश्च** । दरीदृश्यन्तेऽधुनाप्यनेके शेमुषीशालिनोऽनेकावधानकारिणः ।

ओळीतपविधानानन्तरं श्री**विजयप्रभ**सूरिवरैरेतस्मै व्यतारि १७१८ तमे वैक्रमाब्दे वाचकपदमिति '**सुजशवेलीभास**' नामक-गूर्जरकाव्यगतनिम्नलिखितपद्यावलोकनेन प्रतीयते—

ओळी तप आराध्युं विधि थकी तस फल करतलि कीध ।
वाचकपदवी सतर अढारमांजी श्री**विजयप्रभ**सूरि दीध ॥

श्री**मदानंदघन**महर्षिणा **ज्ञानविमलसूरि**णा श्री**देवचंद्र**मुनिना च समं श्रीमतो गाढतरः परिचय इत्यष्टपद्या नवपदपूजया चानुमीयते ।

अविश्रान्तं जैनसाहित्यसेवनया श्री**सिद्धसेनदिवाकर**—श्री**हरिभद्रसूरि** श्री**हेमचन्द्राचार्या**दिसंस्मरणकारिणः श्रीमतः १७४५ तमे वैक्रमेवत्सरे माघसुदि वसन्तपञ्चम्यां **दर्भावती (डभोई)** नगरे समपद्यत स्वर्गवासः ।

श्रीमतो गुरुपरम्परा शिष्यसन्ततिस्त्वेवम्—


श्रीहीरविजयसूरिः
उपाध्यायकल्याणविजयः
लाभविजयगणिः
जीतविजयः
पद्मविजयगणिः
नयविजयोपाध्यायः
उ. श्रीयशोविजयः
पं. गुणविजयगणिः
पं. केशरविजयगणिः
पं. विनीतविजयगणिः
श्रीदेवविजयगणिः
श्रीविजयसेनसूरिः
श्रीविजयदेवसूरिः
विजयसिंहसूरिः
विजयप्रभसूरिः
क्रियोद्धारकः सत्यविजयपंन्यासः
श्रीकीर्तिविजयोपाध्यायः
मानविजयः
विनयविज-
योपाध्यायः

समसादितासौ शिष्यनामावलिर्वाचकवर्यविरचितयोग (अष्ट) दृष्टिस्वाध्याय (सज्झाय) नामकसस्तबकपुस्तकान्ते। तथाहि मूल-गाथान्ते—

"इति योगदृष्टिस्वाध्यायः सम्पूर्णः संवत् १७९७ वर्षे आषाढ वदि ११ दिने रात्रौ प्रथमे यामे लि० गणि **देवविजय**–श्री**घनौ-घबंदिरे** श्रीनवखण्डपार्श्वप्रासादात् इति। श्रेयः श्रेणयः।

स्तबकान्ते तु—" लिखितं सकलतार्किकचक्रचूडामणि–महो-पाध्याय श्री १९ श्री**यशोविजयगणि**–तत्शिष्य सकलपण्डितोत्तम-पण्डित श्री**गुणविजय**गणि तत्शिष्य पं. श्री ५ **केशरविजय**गणि-तत्शिष्य पं. श्री ५ **विनीतविजय**गणिशिष्य**देवविजय**लिपीकृतं श्री**घनौघबन्दिरे** श्रीनवखण्डपार्श्वपासादात्। श्रीरस्तु॥"

यथासाधनं व्यावर्णितानि सङ्क्षेपेण चरितान्यमूनि महात्मना-ममीषां विधूनयन्तु निबिडतरमनेकभवनिबद्धं तमःसमूहम्, नयन्तु मानसं विशुद्धतरादर्शानुकारिणीं विशुद्धिम्, रचयन्तु भव्यजनमनोऽभि-लषणीयमपवर्गमार्गमपविघ्नं मे।

विभागेऽत्र प्रथमे प्रतिप्रदानादिना सहाय्यकारिणः—

१ पूज्यपादप्रवर्तकश्री**कांतिविजय**मुनिप्रवराः।

२ प्रातःस्मरणीया दक्षिणविहारिणः सद्गुरवः श्री**मदनविजय**-मुनीश्वराः।

३ श्रीविजयधर्मलक्ष्मीज्ञानमन्दिरव्यवस्थायां क्रियमाणायां उप-लब्ध न्या. न्या. महोपाध्यायश्री**यशोविजय**प्रणीतस्तोत्रत्रयस्य

प्रेसकोपीप्रेषकः श्रीजयंतविजयमुनिशिष्यः श्रीविशालविजयो मुनिः। अनेकान्ती मुनिः श्रीहिमांशुविजयश्च।

४ झवेरी **अम्बालाल नानाभाई** ( **वडोदरा** ) भाण्डागारगतद्वात्रिंशिकादिप्रतिप्रेषकः गान्धीत्युपाह्वः पण्डितावतंसो **भगवानदासा**त्मजो **लालचंद्रः**।

५ मुनिश्री**जयविजय**पुस्तकसंहस्थप्रतिप्रदाता श्रेष्ठि**नेमचंद्र**तनुजन्मा श्रेष्ठी **फकीरचंद्रः** ( डभोई )

६ श्रीजैनानंदपुस्तकालय ( सुरत ) स्थ ( त्रस्टीओ )

७ प्रवर्तकश्री**कांतिविजय**मुनिपुङ्गवानां प्रशिष्याः श्रीपुण्यविजयमुनिवराः।

८ श्रीभक्तिविजयशिष्यवर्याः श्री**जशविजयाः**।

९ श्रीआणन्दजी कल्याणजीनी पेढी लींबडी—काठियावाड.

१० लुहारनी पोळ उपाश्रयान्तर्गताभाण्डागारकार्यवाहको शाह भोगीलाल भूधरभाई ( अमदावाद )

## संशोधनादिकर्मणि सहायिनः—

१ आगमोद्धारकारिणः श्री**सागरानंदसूरयः**।

२ साहित्यसेवारसिकान्तकरणाः श्री**कल्याणविजय**मुनिप्रवराः।

३ प्रो. **अभयङ्करः**।

एतेषां सर्वेषां मन्येऽन्तःकरणतः सहर्षमुपकारं महान्तम्। प्रयच्छामि च प्रमोदभरमेदुरः कोटिशस्तेभ्यः साधुवादान्।

यथामति कृते कारितेऽपि संशोधने प्रत्यन्तराभावात् प्रमाद-दोषेण च समुद्भूता लोचनगोचरीभवेयुर्मनुष्यस्वभावसुलभाः यत्र कुत्रचित् स्खलनाः ता विशदीकुर्वन्तु सुहृदयाः सहृदयाः, विमलीकुर्वन्तु चेतः स्वकीयं स्तुतिस्तोत्रादीनाममीषां पठनपाठनेन, शकलीकुर्वन्तु नैकभवोपचितं विमलकेवलालोकावरोधकारकं दुष्कर्ममहीधरं प्रवर्द्धमाननिर्मलभावनानिशितकुलिशेन भव्यात्मनः, सफलीकुर्वन्तु परिश्रममिमं मामकीनमिति प्रार्थयति निबद्धाञ्जलिर्विदुषामनुचरः

दक्षिणविहारिश्रीमदमरविजयमुनिचरणारविन्दमधुकरः—

शिनोर
ता. ३-११-३२ } चतुरविजयो मुनिः ।



[ २ ]

## द्वादशारनयचक्रम् ।

को नाम नो वेत्ति साहित्यदत्तदृष्टिः श्रीमल्लवादिसूरिवर्याणां नाम ?। एभिरेव महानुभावैः प्रणीतं जैनसाहित्यचूडामणिनिभं नयगमभङ्गसङ्गमातिदुर्गमं ग्रन्थरत्नमिदं श्रीसिंहगणिक्षमाश्रमणप्रणीतविवरणोपेतं विपश्चितामममन्दानन्दसन्दोहदायकं प्रयत्नपूर्वकं संशोध्य प्रकटीचिकीर्षामो वयं विभागचतुष्टये ।

भविष्यति प्रतिविभागस्य वेतनं रूप्यकाणां सप्तकम् ।

अद्यैव ग्राहकीभूय लेखनीयानि स्वनामानि जिघृक्षुभिः ।

---

[ ३ ]

## अनेकार्थ साहित्यसङ्ग्रहः ।

ग्रन्थेऽत्र गूर्जरेश्वरकुमारपालप्रतिबोधककलिकालसर्वज्ञश्रीहेमचन्द्राचार्यशिष्यश्रीवर्द्धमानगणेः, कुमारपालप्रतिबोधादिप्रणेतुः श्रीसोमप्रभाचार्यस्य, विद्वद्वर्गचूडामणेरुदयधर्मगणिनः श्रीहीरविजयसूरिपरीक्षितबुद्धेः श्रीमानसागरस्य च मूर्तिमान् प्रतिभाकलाप इव विपश्चिच्चित्ताल्हादजनकं विविधबोधविधायि वैदुग्ध्यबन्धुरं शतार्थकाव्यचतुष्टयं विवरणोपेतं सङ्ग्रहीतमस्ति। किमत्र विशेषभणितेन ? यः किलाकरिष्यत् नयनप्राप्तिसाफल्यमेतन्निरीक्षणेन स एवाज्ञास्यद् रसास्वादमस्य । अस्माभिर्विहितास्ति मुद्रणार्हा पुस्तिकास्य । यथासाधनं नेष्यामः प्राकट्यम् ॥

# श्रीप्रमाणनयतत्त्वालोकः ( सटीकः )

प्रकाण्डवादिजेतृ श्रीवादिदेवसूरिविरचितः सूत्रबद्धो जैनदर्शन-प्रतिपादको सरलपद्धतिकोऽयंग्रन्थो दर्शनशास्त्रेऽध्येतृणामतितरामुपयुज्यते । **बालबोधिनी**त्याख्यया नूतनया टिप्पण्या संभूषितः प्रस्तुतो ग्रन्थः प्रथमत एवाऽस्माभिः प्रकाशितोऽस्ति ।

बहुषु कलकत्तादि **महाविद्यालयेषु** ( University ) पाठ्य-ग्रन्थत्वेन नियुक्तोऽयंग्रन्थो न्यायसाहित्य तीर्थोपाधिभूषितमुनिराज **श्रीहिमांशुविजयैः** संशोध्य प्रस्तावनापाठान्तरसूत्रविषयानुक्रमणिकादिभिरलङ्कृत्य टिप्पणीसमेतः सम्पादितोऽस्ति ।

मूल्यम्—रूप्यकमेकम्

प्राप्तिस्थानम्—

**मेसर्स ए. एम. एन्ड कम्पनी.**

पालीताणा ( काठियावाड )

## જૈન મન્ત્ર શાસ્ત્રનો મહાન ગ્રન્થ !

## તૈયાર થાય છે ! . . ? . . તૈયાર થાય છે !

# श्री भैरव-पद्मावती कल्पः ।

શ્રી **મલ્લિષેણ**વિરચિત **બિન્દુષેણ**ની ટીકાયુક્ત શ્રી **ભૈરવ-પદ્માવતી કલ્પ** કે જેની હસ્તલિખિત પ્રત પણ જવલ્લેજ અને મહામુશીબતે મળે છે તે અમારા તરફથી પાટણ, વડોદરા, લીંબડી, અમદાવાદ, સુરત વિગેરે સ્થળોમાં આવેલા ભંડારોની પ્રતો મેળવી તે છપાવવો શરૂ કર્યો છે. આ ગ્રંથમાં દશ અધ્યાય છે અને તેમાં મંત્ર-સાધનાને લગતાં દરેક અંગોનું સ્પષ્ટિકરણ છે. વધુમાં વશીકરણ, આકર્ષણ, મારણ, મોહન વિગેરે બાર યંત્રોના બ્લોક બનાવી આર્ટપેપર ઉપર છાપીને મૂકવાના છે. પરિ-શિષ્ટમાં છ અધ્યાયની વ્યાખ્યાવાળો બીજો શ્રી **પદ્માવતી** કલ્પ આપવાનો છે. શ્રી **પદ્માવતી** દેવીના દરેક જૂદા જૂદા મંત્રો, તેની વિધિ, તેનું ફળ, તેના લગભગ ત્રીસેક યંત્રો, તેની સાધનાની સમજ તથા **જવાલામાલિ**ની સાધના વિગેરે જાણવા માટે મંત્રસાહિત્યમાં આ ઉત્તમોત્તમ ગ્રંથ છે. બ્લોકો અને સાધન મેળવવા પાછળ બહોળો ખર્ચ થાય છે, છતાં મંત્રના જિજ્ઞાસુઓ લાભ લઈ શકે તે માટે—

**અગાઉથી ગ્રાહક થનાર માટે કિંમત** રૂા. ૧૦-૦-૦

**પાછળથી કિંમત** . . . . . . . . ૧૫-૦-૦

રાખેલ છે. માત્ર ગ્રાહકો પૂરતીજ પ્રતો છપાશે અને પછી મ્હોટી કિંમતે પણ કદાચ નહિ મળે માટે આજેજ અડધી કિંમત મનીઓર્ડરથી મોકલાવી ગ્રાહક બનો !

લખો:—**નવાબ બ્રધર્સ**, ઠા. ડોસીવાડાની પોળના નાકે : **અમદાવાદ**

અથવા

**નવાબ સારાભાઇ મણીલાલ** ઠા. નાગજીભુધરની પોળ—**અમદાવાદ**

## SOME VALUABLE BOOKS IN ARDHA-MAGADHI.

**Edited by Prof. K. V. Abhyankar, M. A.**

**Gujrat College, Ahmedabad.**

1 कूर्मापुत्र चरित With notes and translation in English and introduction in Sanskrit and English. (Prescribed as a text for the f. y. Arts Examination by the University of Bombay ). 1–4–0

2 दशवैकालिकसूत्र with निर्युक्ति by भद्रबाहु. Edited with notes translation and introduction in English ( Text-book for the Intamediate Arts Examination ). 2–0–0

3 विंशतिविंशिका by हरिभद्रसूरि with Sanskrit rendering and notes in English. ( text book for the B. A. Examination ). 2–0–0

4 आचाराङ्गसूत्र with निर्युक्ति by भद्रबाहु. with notes in English. ( in the Press).

Can be had of the Editor as also of the Samchalaka Prachina ( Jaina ) Sahityodhara Granthavali. Ahmedabad.

# जैनस्तोत्रसंदोह-समालोचना ।

जैनस्तोत्रसन्दोहं ग्रन्थं दृष्ट्वाऽतितरां मोदते मे मानसम् । अत्र ग्रन्थे प्रसिद्धपाण्डित्यानां श्रीहेमचन्द्र-रामचन्द्रा-मरचन्द्र-हरिभद्र-जिनभद्र-भद्रबाहु-धर्मघोष-धनपाल-श्रीपालप्रमुखाणां तपाखरतरादिगच्छीयानां कवीनामद्यावधि-अमुद्रितान्यश्रुतदृष्टनामानि स्तोत्रादीनि संगृहीतानि दरीदृश्यन्ते ।

अर्हन्नामसहस्र-अष्टोत्तशतनामसरस्वतीप्रमुखस्तोत्राणि कोषेतिहासदृष्ट्या, त्रिंशच्चतुर्विंशतिकास्तव-द्वादशाङ्गीपदप्रमाणकुलकादीनि धर्मसाहित्येतिहासदृष्ट्या, वीरस्तवाऽऽदिस्तवप्रभृतीनि द्विभाषासंकरदृष्टया, रामचन्द्रविरचितापह्नुत्यर्थान्तरन्यासव्यतिरेकदृष्टान्तयलङ्कारालङ्कृतानि-काव्यालङ्कारदृष्ट्या, महावीरकलशादीनि अपभ्रंशभाषादृष्ट्या, स्वपरिशिष्टस्थितवर्द्धमानषट्त्रिंशिका छन्दआनन्ददृष्ट्या, ग-घपरिशिष्टगतपञ्चावत्यष्टक-उवसग्गहरस्तोत्रवृत्तिद्वयंदेउलवाडामण्डनयुगादिदेवस्तवनंच मन्त्रप्रभावविधिदृष्ट्या नानासाहित्यविषयरुचीनां कवीनां सच्चेतसां चेतांसि कुमुदबन्धुद्युतय इव कुमुदानि; आनन्दयिष्यन्तीति मामकी मतिः।

अत्र ग्रन्थे क्वचित् पदलालित्यं, कुत्रचित् छन्दोनन्दनम्, कुत्रचिद् रचनारामणीयकम्, क्वाऽपि गुणालङ्कारविजृम्भणं, क्वचन रसविकासः, कुत्रचन चित्रकाव्योल्लासः, कुहचन भक्तिव्यक्तिः, कुत्राऽपि च कविताप्रकाश उल्लसतितरामिति कः खलु कोविद एनं ग्रन्थं समीक्ष्य सानन्दहृदयो न भविष्यति ? ।

एतादृशानां कीटातिथीभूतप्रायाणामुपयुक्ततरस्तोत्राणां संपादने संशोधने च साहित्यसौहित्यवद्भिर्मुनिप्रवरश्री**चतुरविजयै**र्महोदयैः प्रयत्नः कृतस्तदर्थं ते शतशो धन्यवादानर्हन्ति जगताम् । तल्लिखिता प्रयाससाध्या महती प्रस्तावनाऽपि स्तोत्रकर्तॄणां संक्षिप्तचरित्राणि परिचाययति । पश्चाद्भागेऽद्यावधिसर्वत्रमुद्रितानां ज्ञातानां जैनस्तोत्राणां सूचीप्रदानेन संशोधकानां कृते सौकर्यं कृतमस्ति । स्तोत्राणां विषमस्थले टिप्पणी दत्ताऽभविष्यत्तदा वरमभविष्यत् । एतादृशप्राचीनसङ्ग्रहग्रन्थो यदि राजकीयमहाविद्यालयेषु ( University ) पाठ्यग्रन्थत्वेन नियुक्तो भवेत्तदा छात्राणां महानुपकारो भवेत् एतादृशस्य सुन्दर ग्रन्थस्यप्रकाशने कृताऽविरतयतनः **श्रीयुत साराभाई** नवाबेतिनामा साहित्यप्रेमी श्रावकवर्यः शतशो धन्यवादानां पात्रमिति मन्ये ।

श्रीगौतमस्वामि—पद्मावतीदेव्योस्त्रिरङ्गचित्राभ्यां अष्टभिर्यन्त्रैश्च समलङ्कृतस्यास्य पण्यं रुप्यक पंचकं नाधिकम् । ।

| | |
|---|---|
| सं० १९८८<br>दीपालिकायाम्<br>**उज्जयिन्याम्** | विदुषां वशम्वदः<br>मुनिहिमांशुविजयः<br>( ‘ अनेकान्ती ’ ) |

॥ ॐ अर्हम् नमः ॥

अनेकजैनपूर्वाचार्यविरचितः

# ॥ श्रीजैनस्तोत्रसन्दोहः ॥

[ १ ]

श्रीहेमचन्द्राचार्यविरचितः

## श्रीअर्हन्नामसहस्रसमुच्चयः ।

'अर्ह' नामापि कर्णाभ्यां शृण्वन् वाचा समुच्चरन् ।
जीवः पीवरपुण्यश्रीर्लभते फलमुत्तमम् ॥ १ ॥

अत एव प्रतिप्रातः समुत्थाय मनीषिभिः ।
भक्त्याऽष्टाग्रसहस्राहन्नामोच्चारो विधीयते ॥ २ ॥

श्रीमानर्हन् जिनः स्वामी स्वयम्भूः शम्भूरात्मभूः ।
स्वयंप्रभुः प्रभुर्भोक्ता विश्वभूरपुनर्भवः ॥ ३ ॥

विश्वात्मा विश्वलोकेशो विश्वतश्चक्षुरक्षरः ।
विश्वविद् विश्वविद्येशो विश्वयोनिरनीश्वरः ॥ ४ ॥

विश्वदृश्वा विभुर्धाता विश्वेशो विश्वलोचनः ।
विश्वव्यापी विधुर्वेधाः शाश्वतो विश्वतोमुखः ॥ ५ ॥

विश्वपो विश्वतःपादो विश्वशीर्षः शुचिश्रवाः ।
विश्वदृग् विश्वभूतेशो विश्वज्योतिरनश्वरः ॥ ६ ॥

विश्वसृट् विश्वसूर्विश्वेट् विश्वभुक् विश्वनायकः ।
विश्वाशी विश्वभूतात्मा विश्वजिद् विश्वपालकः ॥ ७ ॥

विश्वकर्मा जगद्विश्वो विश्वमूर्त्तिर्जिनेश्वरः ।
भूतभाविभवद्भर्ता विश्ववैद्यो यतीश्वरः ॥ ८ ॥

सर्वादिः सर्वदृक् सार्वः सर्वज्ञः सर्वदर्शनः ।
सर्वात्मा सर्वलोकेशः सर्ववित् सर्वलोकजित् ॥ ९ ॥

सर्वगः सुश्रुतः सुश्रूः सुवाक् सूरिर्बहुश्रुतः ।
सहस्रशीर्षः क्षेत्रज्ञः सहस्राक्षः सहस्रपात् ॥ १० ॥

युगादिपुरुषो ब्रह्मा पञ्चब्रह्ममयः शिवः ।
ब्रह्मविद् ब्रह्मतत्त्वज्ञो ब्रह्मयोनिरयोनिजः ॥ ११ ॥

ब्रह्मनिष्ठः परब्रह्मः ब्रह्मात्मा ब्रह्मसम्भवः ।
ब्रह्मेड् ब्रह्मपतिर्ब्रह्मचारी ब्रह्मपदेश्वरः ॥ १२ ॥

विष्णुर्जिष्णुर्जयी जेता जिनेन्द्रो जिनपुङ्गवः ।
परः परतरः सूक्ष्मः परमेष्ठी सनातनः ॥ १३ ॥

इति श्रीअर्हन्नामसहस्रसमुच्चये प्रथमशतप्रकाशः ॥ १ ॥

---

जिननाथो जगन्नाथो जगत्स्वामी जगत्प्रभुः ।
जगत्पूज्यो जगद्वन्द्यो जगदीशो जगत्पतिः ॥ १ ॥
जगन्नेता जगज्जेता जगन्मान्यो जगद्विभुः ।
जगज्ज्येष्ठो जगच्छ्रेष्ठो जगद्ध्येयो जगद्धितः ॥ २ ॥
जगदर्च्यो जगद्बन्धुर्जगच्छास्ता जगत्पिता ।
जगन्नेत्रो जगन्मैत्रो जगद्दीपो जगद्गुरुः ॥ ३ ॥
स्वयंज्योतिरजोऽजन्मा परं तेजः परं महः ।
परमात्मा शमी शान्तः परंज्योतिस्तमोऽपहः ॥ ४ ॥
प्रशान्तारिरनन्तात्मा योगी योगीश्वरो गुरुः ।
अनन्तजिदनन्तात्मा भव्यबन्धुरबन्धनः ॥ ५ ॥
शुद्धबुद्धिः प्रबुद्धात्मा सिद्धार्थः सिद्धशासनः ।
सिद्धः सिद्धान्तविद् ध्येयः सिद्धः साध्यः सुधीः सुगीः ॥६॥
सहिष्णुरच्युतोऽनन्तः प्रभविष्णुर्भवोद्भवः ।
स्वयंभूष्णुरसम्भूष्णुः प्रभूष्णुरभयोऽव्ययः ॥ ७ ॥
दिव्यभाषापतिर्दिव्यः पूतवाक् पूतशासनः ।
पूतात्मा परमज्योतिर्धर्माध्यक्षो दमीश्वरः ॥ ८ ॥
निर्मोहो निर्मदो निःस्वो निर्दम्भो निरुपद्रवः ।
निराधारो निराहारो निर्लोभो निश्चलोऽचलः ॥ ९ ॥
निष्कामी निर्ममो निष्वक् निष्कलङ्को निरञ्जनः ।
निर्गुणो नीरसो निर्भी निर्व्यापारो निरामयः ॥ १० ॥
निर्निमेषो निराबाधो निर्द्वन्द्वो निष्क्रियोऽनघः ।
निःशङ्कश्च निरातङ्को निष्फलो निर्मलोऽमलः ॥ ११ ॥
॥ इति श्रीअर्हन्नामसहस्रसमुच्चये द्वितीयशतप्रकाशः ॥२॥

तीर्थकृत् तीर्थसृट् तीर्थङ्करस्तीर्थकरः सुदृक् ।
तीर्थकर्ता तीर्थभर्त्ता तीर्थेशः तीर्थनायकः ॥ १ ॥

सुतीर्थोऽधिपतिस्तीर्थसेव्यस्तीर्थिकनायकः ।
धर्मतीर्थकरस्तीर्थप्रणेता तीर्थकारकः ॥ २ ॥

तीर्थाधीशो महातीर्थः तीर्थस्तीर्थविधायकः ।
सत्यतीर्थकरस्तीर्थसेव्यस्तीर्थिकतायकः ॥ ३ ॥

तीर्थनाथस्तीर्थराजस्तीर्थेट् तीर्थप्रकाशकः ।
तीर्थवन्द्यस्तीर्थमुख्यस्तीर्थाराध्यः सुतीर्थिकः ॥ ४ ॥

स्थविष्टः स्थविरो ज्येष्ठः प्रेष्टः प्रष्ठो वरिष्ठधीः ।
स्थेष्ठो गरिष्ठो बंहिष्टो श्रेष्ठोऽणिष्ठो गरिष्ठधीः ॥ ५ ॥

विभवो विभयो वीरो विशोको विजरो जरन् ।
विरागो विमदोऽव्यक्तो विवक्तो वीतमत्सरः ॥ ६ ॥

वीतरागो गतद्वेषो वीतमोहो विमन्मथः ।
वियोगो योगविद् विद्वान् विधाता विनयी नयी ॥ ७ ॥

क्षान्तिमान् पृथिवीमूर्त्तिः शान्तिभाक् सलिलात्मकः ।
वायुमूर्त्तिरसङ्गात्मा वह्निमूर्त्तिरधर्मधुक् ॥ ८ ॥

सुयज्वा यजमानात्मा सूत्रामस्तोमपूजितः ।
ऋत्विग् यज्ञपतिर्याज्यो यज्ञाङ्गममृतं हविः ॥ ९ ॥

सोममूर्त्तिः सुसौम्यात्मा सूर्यमूर्त्तिर्महाप्रभः ।
व्योममूर्त्तिरमूर्त्तात्मा नीरजा वीरजाः शुचिः ॥ १० ॥

मन्त्रविन् मन्त्रकृन् मन्त्री मन्त्रमूर्त्तिरनन्तरः ।
स्वतन्त्रः सूत्रकृत् स्वत्रः कृतान्तश्च कृतान्तकृत् ॥ ११ ॥

॥ इति श्रीअर्हन्नामसहस्रसमुच्चये तृतीयशतप्रकाशः ॥ ३ ॥

कृती कृतार्थः संस्कृत्यः कृतकृत्यः कृतक्रतुः ।
नित्यो मृत्युञ्जयोऽमृत्युरमृतात्माऽमृतोद्भवः ॥ १ ॥
हिरण्यगर्भः श्रीगर्भः प्रभूतविभवोऽभवः ।
स्वयम्प्रभः प्रभूतात्मा भवो भावो भवान्तकः ।।२ ॥
महाऽशोकध्वजोऽशोकः कः स्रष्टा पद्मविष्टरः ।
पद्मेशः पद्मसम्भूतिः पद्मनाभिरनुत्तरः ॥ ३ ॥
पद्मयोनिर्जगद्योनिरित्यः स्तुत्यः स्तुतीश्वरः ।
स्तवनार्हो हृषीकेशोऽजितो जेयः कृतक्रियः ॥ ४ ॥
विशालो विपुलोद्योतिरतुलोऽचिन्त्यवैभवः ।
सुसंवृत्तः सुगुप्तात्मा शुभंयुः शुभकर्मकृत् ॥ ५ ।
एकविद्यो महावैद्यो मुनिः परिवृढो दृढः ॥
पतिर्विद्यानिधिः साक्षी विनेता विहतान्तकः ॥ ६ ॥
पिता पितामहः पाता पवित्रः पावनो गतिः ।
त्राता भिषग्वरो वर्यो वरदः पारदः पुमान् ॥ ७ ॥
कविः पुराणपुरुषो वर्षीयान् ऋषभः पुरः ।
प्रतिष्ठाप्रसवो हेतुर्भुवनैकपितामहः ॥ ८ ॥
श्रीवत्सलक्षणः श्लक्ष्णो लक्षण्यः शुभलक्षणः ।
निरक्षः पुण्डरीकाक्षः पुष्कलः पुष्कलेक्षणः ॥ ९ ॥
सिद्धिदः सिद्धसङ्कल्पः सिद्धात्मा सिद्धशासनः ।
बुद्धबोद्धयो महाबुद्धिर्वर्द्धमानो महर्द्धिकः ॥ १० ॥
वेदाङ्गो वेदविद् वेद्यो जातरूपो विदांवरः ।
वेदवैद्यः स्वसंवेद्यो विवेदो वदतांवरः ॥ ११ ॥

॥ इति श्रीअर्हन्नामसहस्रसमुच्चये चतुर्थशतप्रकाशः ॥ ४ ॥

सुधर्मा धर्मधीर्धर्मा धर्मात्मा धर्मदेशकः ।
धर्मचक्री दयाधर्मः शुद्धधर्मा वृषध्वजः ॥ १ ॥
वृषकेतुर्वृषाधीशो वृषाङ्कश्च वृषोद्भवः ।
हिरण्यनाभिर्भूतात्मा भूतभृद् भूतभावनः ॥ २ ॥
प्रभवो विभवो भास्वान् मुक्तः शक्तोऽक्षयोऽक्षतः ।
कूटस्थः स्थाणुरक्षोभ्यः शास्ता नेताऽचलस्थितिः ॥ ३ ॥
अग्रणीर्ग्रामणीर्ग्रण्यो गण्यगण्यो गणाग्रणीः ।
गणाधिपो गणाधीशो गणज्येष्ठो गणार्चितः ॥ ४ ॥
गुणाकरो गुणाम्भोधिर्गुणज्ञो गुणवान् गुणी ।
गुणादरो गुणोच्छेदी सुगुणोऽगुणवर्जितः ॥ ५ ॥
शरण्यः पुण्यवाक् पूतो वरेण्यः पुण्यगीर्गुणः ।
अगण्यपुण्यधीः पुण्यः पुण्यकृत् पुण्यशासनः ॥ ६ ॥
अतीन्द्रोऽतीन्द्रियोऽधीन्द्रो महेन्द्रोऽतीन्द्रियार्थदृक् ।
अतीन्द्रियो महेन्द्रार्च्यो महेन्द्रमहितो महान् ॥ ७ ॥
उद्भवः कारणं कर्ता पारगो भवतारकः ।
अग्राह्यो गहनं गुह्यः परार्द्धः परमेश्वरः ॥ ८ ॥
अनन्तर्द्धिरमेयार्द्धिरचिन्त्यार्द्धिः समग्रधीः ।
प्राग्र्यः प्राग्रहरोऽत्यग्रः प्रत्यग्रोऽग्रोऽग्रिमोऽग्रजः ॥ ९ ॥
प्राणकः प्रणवः प्राणः प्राणदः प्राणितेश्वरः ।
प्रधानमात्मा प्रकृतिः परमः परमोदयः ॥ १० ॥

॥ इति श्रीअर्हन्नामसहस्रसमुच्चये पञ्चमशतप्रकाशः ॥ ५ ॥

महाजिनो महाबुद्धो महाब्रह्मा महाशिवः ।
महाविष्णुर्महाजिष्णुर्महानाथो महेश्वरः ॥ १ ॥
महादेवो महास्वामी महाराजो महाप्रभुः ।
महाचन्द्रो महादित्यो महाशूरो महागुरुः ॥ २ ॥
महातपा महातेजा महोदर्को महोमयः ।
महायशो महाधाम महासत्त्वो महाबलः ॥ ३ ॥
महाधैर्यो महावीर्यो महाकान्तिर्महाद्युतिः ।
महाशक्तिर्महाज्योतिर्महाभूतिर्महाधृतिः ॥ ४ ॥
महामतिर्महानीतिर्महाक्षान्तिर्महाकृतिः ।
महाकीर्त्तिर्महास्फूर्त्तिर्महाप्रज्ञो महोदयः ॥ ५ ॥
महाभागो महाभोगो महारूपो महावपुः ।
महादानो महाज्ञानो महाशास्ता महामहाः ॥ ६ ॥
महामुनिर्महामौनी महाध्यानो महादमः ॥
महाक्षमो महाशीलो महायोगो महालयः ॥ ७ ॥
महाव्रतो महायज्ञो महाश्रेष्ठो महाकविः ।
महामन्त्रो महातन्त्रो महोपायो महानयः ॥ ८ ॥
महाकारुणिको मन्ता महानादो महायतिः ।
महामोदो महाघोषो महेज्यो महसां पतिः ॥ ९ ॥
महावीरो महाधीरो महाधुर्यो महेष्टवाक् ।
महात्मा महसां धाम महर्षिर्महितोदयः ॥ १० ॥
महामुक्तिर्महागुप्तिर्महासत्यो महार्जवः ।
महाबुद्धिर्महासिद्धिर्महाशौचो महावशी ॥ ११ ॥

महाधर्मो महाशर्मा महात्मज्ञो महाशयः ।
महामोक्षो महासौख्यो महानन्दो महोदयः ॥ १२ ॥

महाभवाब्धिसन्तारी महामोहारिसूदनः ।
महायोगीश्वराराध्यो महामुक्तिपदेश्वरः ॥ १३ ॥

इति श्रीअर्हन्नामसहस्रसमुच्चये षष्ठशतप्रकाशः ॥ ६ ॥

---

आनन्दो नन्दनो नन्दो वन्द्यो नन्द्योऽभिन्दनः ।
कामहा कामदः काम्यः कामधेनुररिञ्जयः ॥ १ ॥

मनः क्लेशापहः साधुरुत्तमोऽघहरो हरः ।
असङ्ख्येयः प्रमेयात्मा शमात्मा प्रशमाकरः ॥ २ ॥

सर्वयोगीश्वरो[1]ऽचिन्त्यः श्रुतात्मा विष्टरश्रवाः ।
दान्तात्मा दमतीर्थेशो योगात्मा योगसाधकः ॥ ३ ॥

प्रमाणपरधिर्दक्षो दक्षिणोऽध्वर्युरध्वरः ।
प्रक्षीणबन्धः [2]कर्मारिः क्षेमकृत् क्षेमशासनः ॥ ४ ॥

क्षेमी क्षेमङ्करः [3]क्षेप्यः क्षेमधर्मा क्षमापतिः ।
अग्राह्यो ज्ञानिविज्ञेयो ज्ञानिगम्यो जिनोत्तमः ॥ ५ ॥

जिनेन्दुर्जनितानन्दो मुनीन्दुर्दुन्दुभिस्वनः ।
मुनीन्द्रवन्द्यो योगीन्द्रो यतीन्द्रो यतिनायकः ॥ ६ ॥

असंस्कृतः सुसंस्कारः प्राकृतो वै कृतान्तवित् ।
अन्तकृत् कान्तगुः कान्तश्चिन्तामणिरभीष्टदः ॥ ७ ॥

---

१. सर्वयोगीश्वराश्चिन्त्यः । २ कामारिः । ३ क्षय्य ।

अजितो जितकामारिरमितोऽमतिशासनः ।
जितक्रोधो जितामित्रो जितक्लेशो जितान्तकः ॥ ८ ॥
सत्यात्मा सत्यविज्ञानः सत्यवाक् सत्यशासनः ।
सत्याशीः सत्यसन्धानः सत्यः सत्यपरायणः ॥ ९ ॥
सदायोगः सदाभोगः सदातृप्तः सदाशिवः ।
सदागतिः सदासौख्यः सदाविद्यः सदोदयः ॥ १० ॥
सुघोषः सुमुखः सौम्यः सुखदः सुहितः सुहृत् ।
सुगुप्तो गुप्तिभृद् गोप्ता गुप्ताक्षो गुप्तमानसः ॥ ११ ॥

इति श्रीअर्हन्नामसहस्रसमुच्चये सप्तमशतप्रकाशः ॥ ७ ॥

---

बृहद् बृहस्पतिर्वाग्मी वाचस्पतिरुदारधीः ।
मनीषी धिषणो धीमान् शेमुषीशो गिरांपतिः ॥ १ ॥
नैकरूपो नयोत्तुङ्गो नैकात्मा नैकधर्मकृत् ।
अविज्ञेयः प्रतर्क्यात्मा कृतज्ञः कृतलक्षणः ॥ २ ॥
ज्ञानगर्भो दयागर्भो रत्नगर्भः प्रभास्वरः ।
पद्मगर्भो जगद्गर्भो हेमगर्भः सुदर्शनः ॥ ३ ॥
लक्ष्मीशः सदयोऽध्यक्षो दृढयोनिर्नयीशिता ।
मनोहरो मनोज्ञोऽर्हो धीरो गम्भीरशासनः ॥ ४ ॥
धर्मयूपो दयायोगो धर्मनेमिर्मुनीश्वरः ।
धर्मचक्रायुधो देवः कर्महा धर्मघोषणः ॥ ५ ॥
स्थेयान् स्थवीयान् नेदीयान् दवीयान् दूरदर्शनः ।
सुस्थितः स्वास्थ्यभाक् सुस्थो नीरजस्को गतस्पृहः ॥ ६ ॥

वश्येन्द्रियो विमुक्तात्मा निःसपत्नो जितेन्द्रियः ।
श्रीनिवासश्चतुर्वक्त्रश्चतुरास्यश्चतुर्मुखः ॥ ७ ॥
अध्यात्मगम्योऽगम्यात्मा योगात्मा योगिवन्दितः ।
सर्वत्रगः सदाभावी त्रिकालविषयार्थदृक् ॥ ८ ॥
शङ्करः सुखदो दान्तो दमी क्षान्तिपरायणः ।
स्वानन्दः परमानन्दः सूक्ष्मवर्चाः परापरः ॥ ९ ॥
अमोघोऽमोघवाक् स्वाज्ञो दिव्यदृष्टिरगोचरः ।
सुरूपः सुभगस्त्यागी मूर्त्तोऽमूर्त्तः समाहितः ॥ १० ॥
एकोऽनेको निरालम्बोऽनीदृग्नाथो निरन्तरः ।
प्रार्थ्योऽभ्यर्थ्यः समभ्यर्च्यस्त्रिजगन्मङ्गलोदयः ॥ ११ ॥

॥ इति श्रीअर्हन्नामसहस्रसमुच्चये अष्टमशतप्रकाशः ॥ ८ ॥

---

ईशोऽधीशोऽधिपोऽधीन्द्रो ध्येयोऽमेयो दयामयः ।
शिवः शूरः शुभः सारः शिष्टः स्पष्टः स्फुटोऽस्फुटः ॥ १ ॥
इष्टः पुष्टः क्षमोऽक्षामोऽकायोऽमायोऽस्मयोऽमयः ।
दृशा दृश्योऽणुरस्थूलो जीर्णो नव्यो गुरुर्लघुः ॥ २ ॥
स्वभूः स्वात्मा स्वयम्बुद्धः स्वेशः स्वैरीश्वरः स्वरः ।
आद्योऽलक्ष्योऽपरोऽरूपोऽस्पर्शोऽशिष्टोऽरिहाऽरुहः ॥ ३ ॥
दीप्तोऽलेश्योऽरसोऽगन्धोऽच्छेद्योऽभेद्योऽजरोऽमरः ।
प्राज्ञो धन्यो यतिः पूज्यो मह्योऽर्च्यः प्रशमी यमी ॥ ४ ॥

---

१ दृष्टिर्दिवमगोचरः । २ ऽशाष्टो.

श्रीशः श्रीन्द्रः शुभः सुश्रीरुत्तमश्रीः श्रियः पतिः ।
श्रीपतिः श्रीपरः श्रीपः सच्छ्रीः श्रीयुक् श्रिया श्रितः ॥ ५ ॥
ज्ञानी तपस्वी तेजस्वी यशस्वी बलवान् बली ।
दानी ध्यानी मुनिर्मौनी लयी लक्ष्यः क्षयी क्षमी ॥ ६ ॥
लक्ष्मीवान् भगवान् श्रेयान् सुगतः सुतनुर्बुधः ।
बुद्धो वृद्धः स्वयंसिद्धः प्रोच्चः प्रांशुः प्रभामयः ॥ ७ ॥

॥ इति श्रीअर्हन्नामसहस्रसमुच्चये नवमशतप्रकाशः ॥ ९ ॥

---

आदिदेवो देवदेवः पुरदेवोऽधिदेवता ।
युगादीशो युगाधीशो युगमुख्यो युगोत्तमः ॥ १ ॥
दीप्तः प्रदीप्तः सूर्याभोऽरिघ्नोऽविघ्नोऽघनो घनः ।
शत्रुघ्नः प्रतिघस्तुङ्गोऽसङ्गः स्वङ्गोऽग्रगः सुगः ॥ २ ॥
स्याद्वादी दिव्यगीर्दिव्यध्वनिरुद्दामगीः प्रगीः ।
पुण्यवागर्ह्यवागर्द्धमागधीयोक्तिरिद्धगीः ॥ ३ ॥
पुराणपुरुषोऽपूर्वोऽपूर्वश्रीः पूर्वदेशकः ।
जिनदेवो जिनाधीशो जिननाथो जिनाग्रणीः ॥ ४ ॥
शान्तिनिष्ठो मुनिज्येष्ठः शिवतातिः शिवप्रदः ।
शान्तिकृत् शान्तिदः शान्तिः कान्तिमान् कामितप्रदः ॥ ५ ॥
श्रियां निधिरधिष्ठानमप्रतिष्ठः प्रतिष्ठितः ।
सुस्थिरः स्थावरः स्थाणुः पृथीयान् प्रथितः पृथुः ॥ ६ ॥

१ गर्ध्यवाग.

पुण्यराशिः श्रियोराशिस्तेजोराशिरसंशयी ।
ज्ञानोदधिरनन्तौजा ज्योतिर्मूर्तिरनन्तधीः ॥ ७ ॥
विज्ञानोऽप्रतिमो भिक्षुर्मुमुक्षुर्मुनिपुङ्गवः ।
अनिद्रालुरतन्द्रालुर्जागरूकः प्रमामयः ॥ ८ ॥
कर्मण्यः कर्मठोऽकुण्ठो रुद्रो भद्रोऽभयङ्करः ।
लोकोत्तरो लोकपतिर्लोकेशो लोकवत्सलः ॥ ९ ॥
त्रिलोकीशस्त्रिकालज्ञस्त्रिनेत्रस्त्रिपुरान्तकः ।
त्र्यम्बकः केवलालोकः केवली केवलेक्षणः ॥ १० ॥
समन्तभद्रः शान्तादिर्धर्माचार्यो दयानिधिः ।
सूक्ष्मदर्शी सुमार्गज्ञः कृपालुर्मार्गदर्शकः ॥ ११ ॥
प्रातिहार्योज्ज्वलस्फीतातिशयो विमलाशयः ।
सिद्धानन्तचतुष्कश्रीर्जीयाच्छ्रीजिनपुङ्गवः ॥ १२ ॥

**उपसंहारः—**

एतदष्टोत्तरं नामसहस्रं श्रीमदर्हतः ।
भव्याः पठन्तु सानन्दं महानन्दैककारणम् ॥ १३ ॥
इत्येतज्जिनदेवस्य जिननामसहस्रकम् ।
सर्वापराधशमनं परं भक्तिविवर्द्धनम् ॥ १४ ॥
अक्षयं त्रिषु लोकेषु सर्वस्वर्गैकसाधनम् ।
स्वर्गलोकैकसोपानं सर्वदुःखैकनाशनम् ॥ १५ ॥
समस्तदुःखहं सद्यः परं निर्वाणदायकम् ।
कामक्रोधादिनिःशेषमनोमलविशोधनम् ॥ १६ ॥
शान्तिदं पावनं नृणां महापातकनाशनम् ।

सर्वेषां प्राणिनामाशु सर्वाभिष्टफलप्रदम् ॥ १७ ॥
जगज्जाड्यप्रशमनं सर्वविद्याप्रवर्त्तकम् ।
राज्यदं राज्यभ्रष्टानां रोगिणां सर्वरोगहृत् ॥ १८ ॥
वन्ध्यानां सुतदं चाशु क्षीणानां जीवितप्रदम् ।
भूतग्रहविषध्वंसि श्रवणात् पठनाज्जपात् ॥ १९ ॥

इति श्रीअर्हन्नामसहस्रसमुच्चये दशमशतप्रकाशः ॥ १० ॥
इति श्रीहेमचन्द्राचार्यविरचितः श्रीअर्हन्नामसहस्रसमुच्चयः ॥

[ २ ]

तपाश्रीधर्मघोषसूरिविरचितः

## श्रीजिनस्तवन ।

( संस्कृतप्राकृतभाषाभिन्नपूर्वार्द्धोत्तरार्द्धः । )

विश्वत्रयैकदर्शन ! सहस्रदर्शननतक्रम ! जिनेन्द्र ! ।
सवणंतपत्तदंसण ! अणंतदंसण ! चिरं जयसु ॥ १ ॥
पूर्वाकृतसुकृतानां पूर्वाशीलितविशुद्धशीलानाम् ।
अविहिततवाण पुव्विं न होइ तुह दंसणं देव ! ॥ २ ॥
भवशतकृतमपि पापं त्वद्दर्शनतो विलीयते नाथ ! ।
पिंडीभूयं पि घयं दुअं जहा जलिरजलणाओ ॥ ३ ॥
समयोऽयमेव शस्यः सलक्षणोऽसौ तदहरप्यनघम् ।
पक्खो वि सो सपक्खो जगबंधव ! दीससे जत्थ ॥ ४ ॥
द्रष्टुरदृष्टे वाञ्छा दृष्टे त्वयि नाथ ! विरहजं दुःखम् ।
इअ जइ दुहावि न सुहं तहावि तुह दंसणं होउ ॥ ५ ॥

पूर्वार्जितसुकृतकृतं भाविशुभनिबन्धनं हरति चैनः ।
इअ कालयत्तयसुहयं जियाण तुह दंसणं दुलहं ॥ ६ ॥
स्वामिन् ! स्वदर्शनं कुरु तथा यथा स्यात् पुनर्न तदभावः ।
जच्चंधवेयणाओ चक्खुक्खयवेयणा दुसहा ॥ ७ ॥
नामापि नाथ ! यस्ते वरमन्त्रसधर्मकीर्त्तयति तस्य ।
मिच्छादंसणदोसो लहु नासइ किं परं भणिमो ? ॥ ८ ॥
य इति जिन ! त्वामन्यूनदर्शनाऽन्यूनदर्शनं नौति ।
सुविशुद्धदर्शनः स श्रयति सत्वरं सर्वदर्शित्वम् ॥ ९ ॥

[ ३ ]

## श्रीसोमप्रभसूरिप्रणीतं
## श्रीसाधारणस्तोत्रम् ।

श्रीवीतराग ! विगतस्मर ! कोपमानं
ये त्वां समग्रजगतां जनकोपमानम् ।
सूर्योदये नयनगोचरमानयन्ति
ते दुर्गतिं स्फुरदघोपरमा न यन्ति ॥ १ ॥
पश्यन्ति शीतरुचिमण्डलसोदरं ये
वक्त्रं प्रगे तव जिनेन्द्र ! विनिद्रनेत्राः ।
तेषामशेषभुवनाधिपतित्वभाजां
लोकाः क्रमाब्जमवलोकितुमुत्सहन्ते ॥ २ ॥
यः प्रातरेव नमतां भवदङ्घ्रियुग्मं
सञ्जायते क्षितिरजस्तिलको ललाटे ।

पुंसां स एव सपदि त्रिदिवापवर्ग-
लक्ष्मीवशीकरणकौशलमाबिभर्ति ॥ ३ ॥

आसादयत्युदयमम्बुजबन्धुबिम्बे
सर्वज्ञ ! ये परिहृतापरशेषकृत्याः ।
आलोकयन्ति विकसन्नयनास्तदास्यं
दास्यं सुरासुरनराः प्रथयन्ति तेषाम् ॥ ४ ॥

यस्तावकं विकचपङ्करुहाभिराम-
मालोकते वदनमीश ! निशाविरामे ।
आलोकते स्वसमवाप्तसमीहितार्थः
कस्याप्यसौ न मुखमर्थितयाऽपरस्य ॥ ५ ॥

यः पादपद्ममुदयाचलचुम्बिबिम्बे
चण्डद्युतौ जिन ! नमस्यति तावकीनम् ।
तस्यान्तिकं भजति कामदुघा करेऽस्य
चिन्तामणिर्वसति सद्मनि कल्पवृक्षः ॥ ६ ॥

त्वत्पादपङ्कजनखांशुपयःप्रवाहे
मज्जन्ति ये त्रिभुवनैकविभो ! विभाते ।
निःशेषपातकमलोपगमोज्ज्वलास्ते
मुक्त्यङ्गनाहृदयवल्लभतां व्रजन्ति ॥ ७ ॥

सुप्तोत्थितः प्रथममेव जिन ! त्वदीय-
मुद्वीक्षते वदनदर्पणमुज्ज्वलं यः ।
तस्यान्वहं निखिलमङ्गलभाजनस्य
स्याच्चिन्तितार्थघटना सुलभा जनस्य ॥ ८ ॥

सोमप्रभाचार्यमभा वयन्न
पुसां तमः पङ्कमपाकरोति ।
विलोक्यमाने तदपि प्रभाते
तवानने नश्यति वीतराग ! ॥ ९ ॥

[ ४ ]

श्रीहरिभद्रसूरिविरचितं

## साधारणजिनस्तोत्रम् ।

त्वत्सेवानिरतांस्त्वदर्पितदृशस्त्वत्सङ्कथासु स्थितान्
त्वद्भक्तांस्त्वदनन्यसक्तमनसस्त्वत्तो न चान्यार्थिनः ।
देवास्मांश्च रुजादिभिः परिगतानालोक्य नोपेक्षितुं
युक्तं ते पशवो यतो जिनपते ! सर्वेऽनुकम्प्यास्तव ॥ १ ॥
त्वद्रूपैकनिरूपणप्रणयिताबन्धो दृशि त्वद्गुण-
ग्रामाकर्णनरागिता करयुगे त्वत्कीर्तनं वाऽपि नः ।
त्वत्पादार्चनचातुरी करयुगे त्वत्कीर्त्तनं वाऽपि नः
कुत्रापि त्वदुपासनव्यसनिता मा नाथ ! विश्राम्यतु ॥ २ ॥
सर्वज्ञोऽसि विमर्शकोऽसि विदिताशेषाशयोऽसि प्रभुः
सर्वस्यापि दयान्वितोऽसि भगवंस्तेनेह पूत्कुर्महे ।
अस्मान्नाथ ! हठात् त्वदेकमनसो भक्ताननाथानिव
प्रोन्मथ्नन्त्यधिकाधिकं मुनिपते ! पश्याऽऽधयो व्याधयः॥ ३ ॥
स्वामिन् ! न प्रणतोऽसि न स्तुतिपथं नीतोऽसि नासि स्मृतो
न ध्यातोऽसि भवत्वनेन भगवन् ! स्वप्नेऽपि नाभ्यर्थितः ।

एकस्मिन्नपि नाथ ! तेषु विहिते कुत्रापि जन्मान्तरे
प्रोन्मथ्नन्ति कदाचिदेव नियतं नैवंविधा व्याधयः ॥ ४ ॥
एतानि नाथ ! चटुलानि दुराशयानि
लुब्धानि रम्यविषयोपनिबन्धनानि ।
दुर्दान्तवाजिसदृशान्यविधेयभावाद्
वश्यानि मे कुरु सदैव षडिन्द्रियाणि ॥ ५ ॥
मूढो विवेकविकलो विधृतोर्ध्वबाहु-
र्न त्वं शृणोषि यदहं जिन ! रारटीमि ।
मां तत्र कर्मणि नियोजय येन देव !
संसारचक्रगहनं न पुनर्विशामि ॥ ६ ॥
सर्वापदां निलयमध्रुवमस्वतन्त्र-
मासन्नपातमविवेकमसारमङ्गम् ।
यावच्छरीरकमिदं न विपद्यते मे
तावन्नियोजय विभो ! कुशलक्रियासु ॥ ७ ॥
अज्ञस्य मे हृतविवेकमहाधनस्य
चौरैः प्रभो ! बलिभिरिन्द्रियनामधेयैः ।
संसारकूपकुहरे विनिपातितस्य
देवेश ! देहि कृपणस्य करावलम्बम् ॥ ८ ॥
दीने भोजनतत्परेऽथ कृपणे निद्राभिभूतेऽलसे
व्याधिव्याकुलिते कुभूषणरते धृष्टे च दुष्टे शठे ।
मिथ्यावादिनि कामकोपसहिते क्रूरे कुरूपे जडे
कारुण्यं मयि नाथ ! नाऽथ कुरुषे भावैकयुक्ते सदा ॥९॥

जाने निरञ्जनमहं तव तत् स्वरूप—
माडम्बरं परमसौ रचना स्तवाय ।
भूमेः स्वभारभरभङ्गुरतां विचिन्त्य
नाकुञ्चितकैचरणं किमु लावकोऽपि ? ॥ १० ॥

निर्वाणामृतमग्न ! भग्नमदन ! व्यालग्नबोधावधे !
चिन्तामात्रफलोपलेन समतां ब्रूतेऽत्र धन्यो जनः ।
केनाऽप्यत्र समं न नाथ ! यदियं मुग्धा मतिर्मन्यते
तन्मे वीतकषाय ! सारनिकष ! क्षन्तव्यमेतत् त्वया ॥ ११ ॥

मया मार्गे मार्गे निभृतनिभृतं सम्भृतदृशा
शरण्यो नैवान्यस्त्वमिव जिन ! दृष्टः क्वचिदपि ।
तदन्येषां मार्गं सकलमपि हित्वा हतधियां
तवाङ्घ्रौ संलग्नो जिगमिषुरहं निर्वृतिपुरीम् ॥ १२ ॥

हे लोचने ! पश्यतमस्तनिद्रे !
आश्चर्यभूतां महिमां जिनस्य ।
न ज्ञायते ध्वंसिनि जीवलोके
किं जीवतामेष्यति वा न वेति ? ॥ १३ ॥

अर्हन् ! जिनेन्द्र ! जितमन्मथ ! तीर्थनाथ !
विध्वस्तदोष ! विषयान्तक ! वीतराग ! ।
स्वामिन् ! समुद्धृतभवोदधिमग्न विश्व !
विश्वज्ञ ! निर्वृतिरमारमणीय ! जीयाः ॥ १४ ॥

कामं कामकरालितं स्फुरदुरुक्रोधाग्निकीलेन्धनं
मायाकल्पवितुद्यमानमनसं मानाहिनाऽभ्याहतम् ।

ग्रस्तं ग्रस्तसमस्तविग्रहाधिया लोभेन भीमेन मां
त्रायस्वोत्तमपादनं (?) जिनपते ? पादद्वयं ते श्रितम् ॥१५॥

प्रशान्तानामीश ! प्रथममविधेयेषु करुणां
वितन्वानेनाहं नियतमवधूतोऽस्मि भवता ।
इदानीं त्वापन्नं जननमरणादिव्यतिकरैः
प्रसीद स्वामिन् ! मां निजपदविधेयं कुरु चिरात् ॥१६॥

त्वदीयायां स्वामिन् ! जिनवृषभ ! वाचि स्थिररुचे-
र्जनस्य व्यामोहो न खलु भवति क्वापि विषये ।
मयि त्वेकान्तेन स्थगितहृदये मोहतमसा
महामायाजालैर्निबिडमिव नद्धो विजयते ॥ १७ ॥

प्रसीद कुरु कारुण्यमनुकम्पां विधेहि नः ।
येन शाम्यन्ति दुर्वाराः सद्य एव महारुजः ॥ १८ ॥

ये दारिद्र्योपहतवपुषो ये च दौर्भाग्यदग्धा
ये वा शत्रुव्यसनविकला ये च दौःस्थ्योपतप्ताः ।
ये वा केचिज्जिनवर ! भृशं पीडिता दुःखभारै-
स्तेषामेकस्त्वमसि शरणं तर्षितानामिवाम्भः ॥ १९ ॥

नान्यं स्तौमि न चार्चयामि न मनस्यारोपयाम्यर्थये
न स्वप्नेऽपि जिन ! त्वदङ्घ्रिकमलद्वन्द्वादृतेऽन्येमि वा ।
नाथैतन्मम कुर्वतः प्रतिदिनं यत् किञ्चिदप्यस्ति तद्
यन्नास्त्येव हि नास्ति तत्तदपि च त्यक्ष्यामि नैतद् व्रतम् ॥२०॥

---

[ ९ ]

श्रीनरचन्द्रसूरिप्रणीतः

# सर्वजिनसाधारणस्तवः।



सरति सरति चेतः स्तोतुमेतन्मदीयं
महित महितवृन्दैरप्यदस्त्वच्चरित्रम्।
परम ! परमबुद्धिस्फूर्तयो मादृशाः किं
विदुरविदुरधुर्यास्तात ? तत्ते स्वरूपम् ॥१॥
तदपि तदपिधायाज्ञानमुज्जागरूका
मततमततमासौ भक्तिरेतां गिरं मे।
खरशिखरिशिखाङ्के भूभृतः पादपाली
जलदजलदरिद्रे नैति नेतः ! प्ररोहम् ॥ २ ॥
हृदयहृदयमित्वा लोक्यते नाम कामं
विशदविशदतापक्लान्तचित्तैस्तथापि।
तनुमतनुमहिम्नीं तावकां किन्तु हित्वा
विधुरविधुरभावं नैव नेतस्तनोति ॥ ३ ॥
भवविभवविलासास्ते जगन्नाथ ! न त्वा
मनवमनव जाग्रत्त्यागमुत्तापयन्ति।
वनभवनमदम्भोवाहसंवाहितश्री-
महिममहिमभानोर्भानवः किं दहन्ति ? ॥४॥
सहम ! सहपरस्त्रीनेत्रपीयूषसत्रं
समव समवगाढः कोऽस्ति धन्यस्त्वदन्यः।

सरसि सरसिजौघः सारसौरभ्यगेहं
　　मलिनमलिनमुच्चैर्वञ्चयेत् किं कदाचित्? ॥५॥
यमनियमनिकेते किं त्वयि स्फूर्जमाने
　　मनसि मनसिजस्य स्फूर्त्तिरुत्कीर्तनीया ।
पतति पतति सर्पद्दर्पसर्पान्तकाले
　　विषमविषमहिम्नां कः प्रकाशो जिनेश ! ॥ ६ ॥
हरसि हरसिताभिः सूत्रितज्ञानलक्ष्म्या
　　नयन ! नयनभाभिस्त्रातरज्ञानपङ्कम् ।
तमसि तमसितिम्ना लोकमाक्रान्तमिन्दुः
　　करनिकरनिपातैः किं न शुभ्रीकरोति ? ॥७॥
नवरनवरवासौकस्यदोषान्धकारे
　　दनवदनवलक्षा देशनोर्वी मुदे स्यात् ।
विधुतविधुतनुत्वा शारदी पौर्णमासी
　　वनपवनपरीता मोदयत्येव देव ! ॥ ८ ॥
नयविनयविवेका (या) स्त्वद्वचःपावितानां
　　न मदनमदमोहैर्म्लानिमायान्ति नेतः ! ।
तिरयति रयमुच्चैर्लोचनालोकलक्ष्म्या
　　रविकरविकलानामन्धकारप्रचारः ॥ ९ ॥
भवति भवतितीर्षुर्नाथ ! नाभव्यजन्तु–
　　र्बत ततततवाचाऽप्यत्र कस्तेऽपराधः ? ।
धुरि मधुरिमभाजां नूत्नचूताङ्कुरास्ते
　　कमपि कमपि वाणीसौरभं लम्भयन्ति ॥ १० ॥

समममसममहोभिस्त्वद्गुणैः सिद्धिवध्वा
सनरस 'नरचन्द्रः' कास्ति वाचां विलासः ।
दिशमदिशमरुद्धश्रद्धया किञ्चिदेना-
मल ममलमतिभ्यस्तर्कयित्वा तथापि ॥ ११ ॥

[ ६ ]

## सर्वजिनस्तवः ।



कला[1] भवन्तं सकला भवन्तं कला भवन्तं सुतपः कृपाद्याः ।
कला भवन्तं हितवृद्धयेवि कला भवन्तं जिन ! जेतुमीडे ॥१॥
नागारमायासमयं विमुच्या- ऽनागा रमाया मय नाम पद्रौ (?) ।
नागारमाया पत्रने मुने ! त्वां ऽनागारमायाति कृती शरण्यम् ॥२॥
मन्दारमालासुरभीद्धदेहे मन्दारमालाभदृशो न भावाः ।
........................ मन्दारमालानभुजो भजंस्त्वाम् ॥३॥
समा नपापा भविनोऽश्महेम समान पापाय विपक्षलोपिन् ! ।
समान पापा चरणान् विवेका समान पापा सुमतः पुनर्नो ॥४॥
भावारमानन्त्यमितं हरन्तं भावारमानन्दकरं धरन्तम् ।
भावा रमानङ्गमयाः शुभा नुः भावारमानन्दुरधीश ! न त्वाम् ॥५॥
पद्मा नवा तामसभेत्र्यभिख्या- पद्मानवा तापकरं धरन्तम् ।
पद्मा नवाताम्रपदौ च दीता पद्मानवाता व्यथपथ्यधस्ते ॥६॥
शमो दया तामस शान्तसर्वा शमोदया तार मनङ्गनाशे ।
शमो दया दारपरं समेते शमोदया तापदसम्पदा माम् ॥७॥

---

[1] अवचूर्याद्यभावात् सन्दिग्धः पदच्छेद : ।

सदा भवारातिभिदे नतेन्द्र ! सदाभवारागवशी कृतीस्त्वाम् ।
सदा भवाराङ्ग न पापिनः स्वः सदाभवाराद्भुतहारयामे ॥८॥
सदाऽगमं ते व्रितसंविदुछ- सदागमं तेज इवाऽत्र मूर्त्तम् ।
सदा गमन्तं शरणं वरेण्य- सदा गमं तेन सुखी भवेयम् ॥९॥
महायमानं जन भाव भास्व- न्महायमानं गतिदे नमस्ते ।
महायमानं हरतेऽत्र भावा- महायमानन्दपदाय कुर्वे ॥१०॥

एवमीश ! मयका बहुभावा—
देव सुन्दरगुणाम्बुसमुद्र ! ।
संस्तुतो जिन ! पदाम्बुजसेवा—
मेव मे वितनु विश्वनमस्य ! ॥११॥

---

[ ७ ]

## साधारणजिनस्तवनम् ।

प्रातिहार्यकलितासनशोभं
त्वां स्तुवे जिनपते ! जितलोभम् ।
वीतराग ! विगतान्तररोगं
सूपदिष्टशिवकारणयोगम् ॥१॥
योजनक्षितिषु विस्तृतशाखो
भात्यशोकतरुरेष तवेश ! ।
उल्लसत्परिमलः परितोऽयं
पञ्चवर्णकुसुमप्रकरश्च ॥२॥

सर्वजन्तुसुगमा जिन ! पञ्च-
त्रिंशदद्भुतगुणा तव वाणी ।
इन्दुकुन्दविमला चमराली
शोभते तव शुभोभयतश्च ॥३॥
विष्टपत्रयगरिष्ठ ! वरिष्ठं
सिंहविष्टरमधिष्ठितवांस्त्वम् ।
द्वादशार्कतुलितामलभासं
भाति मण्डलमिदं तव पृष्ठे ॥४॥
दुन्दुभिर्दिवि परस्तव दिव्यो
दंध्वनीति मधुरोद्धुरघोषः ।
आतपत्रविततात्रितयं तु
शोभते शिरसि ते जगदीश ! ॥५॥
इत्यभिष्टुतगुणः शमसिन्धो !
वीतराग ! भुवनत्रयबन्धो ! ।
वासवार्चित ! वशीकृतमुक्ति
देहि मे निजपदाव्ययभक्तिम् ॥६॥

---

[ ८ ]

### श्रीकनकप्रभसूरिसन्दृब्धः

## (८) साधारणजिनस्तवः ।



जयति जङ्गमकल्पमहीरुहो जयति दुःखमहार्णवतारकः ।
जयति विश्वसनातनदीपको जयति भूतलशीतरुचिर्जिनः ॥१॥

जयति कोपदवानलनीरदो जयति मानमहीरुहकुञ्जरः ।
जयति कूटकुडङ्गहिमागमो जयति लोभमहोदधिमन्दरः ॥२॥

विजयते जगदेकविलोचनो विजयते निरुपाधिकबान्धवः ।
विजयते भवरोगचिकित्सको विजयते शिवपत्तनपण्डितः ॥३॥

जयति मारविकारनिशाकर- प्रसरसंवरणैकदिवाकरः ।
जयति संसृतिकाननसम्भ्रम- भ्रमणखिन्नजनैकसुधासरः ॥४॥

भविकमानसहंसविलासभू- र्नयनचापलरोधमहौषधम् ।
सुभगतासुभगं करुणाक्षरं विजयते भुवनाधिपतेर्वपुः ॥५॥

अमरदानवमानवनायक- भ्रमरराजिविराजिपदाम्बुजः ।
जयति रत्नगणैरिव सागरः परिगतो विविधातिशयैः प्रभुः ॥६॥

विषयपङ्किलमोहजलोल्लसद्- बहुलरागतरङ्गभराकुले ।
विजयते विपुले भवपल्वले कमलमेकमहो जिनपुङ्गवः ॥७॥

शमनिधेः कट लोचनचारुता जिनपतेर्वपुरे मुखचन्द्रमाः ।
अहह धैर्यगुरोर्हृदयस्थली- भुवनभर्तुरहो भुजवैभवम् ॥८॥

देवोऽष्टादशदोषवर्जितवपुः सत्प्रातिहार्यश्रियं
बिभ्राणोऽष्टविधान् वहन्नतिशयांस्तांस्तांश्चतुस्त्रिंशतम् ।
पञ्चत्रिंशदुदारवागतिशयो नीलाब्जमुक्ता जया-
कालिन्दी कनकप्रभो विजयते विश्वाधिपः सर्ववित् ॥९॥

॥ सं० १४८१ वर्षे महा सुदि १५ शुक्रेऽलेखि ॥

[ ९ ]

# सर्वजिनस्तवः ।



जिनपते ! द्रुतमिन्द्रियविप्लवं दमवतामवतामवतारणम् ।
वितनुषे भववारिधितोऽन्वहं सकलया कलया कलयाकया ॥१॥
तव सनातनसिद्धिसमागमं विनयतो नयतो न यतो जनम् ।
जिनपते ! सविवेकमुदित्वराधिकमला कमला कमलासयेत् ॥२॥
भवविवृद्धिकृते कमलागमो जिनमतो नमतो न मतो मम ।
न रतिदाऽमरभूरुहकामधुक् सुरमणीरमणीरमणीयता ॥३॥
किल यशःशशिनि प्रसृते शसी नरकतारकतारकतामितः ।
व्रजति शोषमतोऽपि महानहो विभवतो भवतो भवतोयधिः ॥४॥
न मनसो मम येन जिनेश ! ते रसमयः समयः समयत्यसौ ।
जगदभेदि विभाव्य ततः क्षणादुपरता परता परतापकृत् ॥५॥
त्वयि बभूव जिनेश्वर ! भास्वती शममता ममता मम तादृशी ।
यतिपते ! तदपि क्रियते न किं शुभवता भवता भवतारणम् ॥६॥
भवति यो जिननाथ ! मनः शमाञ्चित ! नुते तनुते तनुतेजसि ।
किमिव नो भविनस्तमतां सुखप्रसविता सविता सवितारयेत् ॥७॥
परमया रमया रमयात् तवाङ्घ्रिकमलं कमलं कमलम्भयम् ।
न नतमानत मानतमां नमन् वरविभारविभारविभासुर ! ॥८॥
अमरसामरसामरनिर्मिता जिन ! नुतिर्ननु तिग्मरुचेर्यथा ।
रुचिरसौ चिरसौख्यपदप्रदा निहतमोहतमोरपुवीर ! मे ॥९॥

[ १० ]

## श्रीभावदेवसूरिसन्दृब्धः

### केवलाक्षरमय

# श्रीजिनस्तवः ।

अनवरतममरनरवरशतनतपदकमलयमल ! मलदलन ! ।
अनपशदचरणचयमय ! ततरभरधरणधवल ! जय ॥१॥

जय सरसवचनवशजन ! समघन ! सदवयवसरलकरचरण ! ।
जलजदलनयन ! गतमल ! शशधरवरवदन ! गजगमन ! ॥२॥

जय सदय ! सनय ! भवदवकवलन [शमन] नवजलदसमयसम ! ।
अचलबल ! सकलभयहर ! शमदमलयभवन ! जगदवन ! ॥३॥

अदमतमकरणगजगणखरतरखरनखरनखरभवधरण ! ।
अवतमसमसममघमयमपहर मम समयतपनपद ! ॥४॥

हतसततभवजगमचर मत कर लसदभय दहन कमनग ! ।
अपनय मम भवरसमरमशरणजनशरण ! गतमरण ! ॥५॥

असदयवशभवदवकरगतरसदलपटलहरणखरपवन ! ।
मम वचनमनसमहमहरवतर कनकनगवदतरल ! ॥६॥

जनमथनमदनवनमदफणधरगरलदरदमनपतगवर ! ।
हतशकलमव मम जननजलगतलवणकणवदमलय ॥७॥

नमदमलनयनकजवनदशशतकरबहलगहनभवदहन ! ।
अकरणगमपरबलरणजयभट ! जय परमपदसदन ! ॥८॥

इति भक्तिरचितकेवल—
विमलाक्षरमालया जिनाधीश !
शुभ 'भावदेव' सूरि—
स्तुत ! केवलमक्षरं देहि ॥ ९ ॥

[ ११ ]

## श्रीसोमप्रभाचार्यविनिर्मितम्

# श्रीजिनस्तवनम् ।

व्यधित साधितसाधुतपाः कृपां शमघनामघनाशकरीं च यः
तमविरामविराद्धमनोभवं जिनममानममानगुणं स्तुवे ॥ १ ॥
विभवदं भवदङ्घ्रिसरोरुहं नमति यो मतियोगपरः प्रभो ! ।
स हतमोहतमो गतमत्सरः समतया मतया परिरभ्यते ॥ २ ॥
जिन ! तवाऽऽनतवासवसंहते ! भुवनपावन ! पादपयोरुहे ।
कलितयालितया समवाप्यते शमधुरा मधुरा मधुवर्जनैः ॥ ३ ॥
शुभवतो भवतो वचसि श्रुते शमदमे भदमेघसमीरणे ।
अवमतां वमतां भविनां विभो ! परमते रमते न मनाग् मनः ॥४॥
दममता ममतामयभावनावनघनाघन ! नाथ ! तवागमात् ।
मम भवामभवा सपदि क्षयं विपदवाप दवानलसोदरा ॥ ५ ॥
विमलकोमलकोकनदारुणक्रमतलो मतलोभहतिर्जिनः ।
रुचिततातिततारदः सतामवमभावमभाग्यपदं हतात् ॥ ६ ॥
भवशतावशतार्तसुरासुरव्रजनतो जनतोषकरः प्रभुः ।
स्मरविकारविकाशविबन्धकः सममना मम ना जयतादघम् ॥७॥
घनतपा नतपाकरिपुर्जिनो विधुरसिन्धुरसिंहसहोदरः ।
विषमदोषमदोत्खननक्षमः शममयो मम योगमतिं क्रियात् ॥ ८ ॥
शुभवचा भवचारकमोचनः समदयो मदयोधजयी जिनः ।
मदनसूदनसूचितविक्रमः प्रवरसंवरसन्ततये स्तुवे ॥ ९ ॥

सोमप्रभाचार्यमभावनाथ
यदृच्छया सञ्चरते न यत्र ।
तत्रापि लब्धप्रसरं लभन्ते
ज्ञानं भवन्तं भविनः स्तुवन्तः ॥ १० ॥

[ १२ ]

## शान्तावेषापराभिधानं

# साधारणजिनस्तवनम् ।

शान्तो वेषः शमसुखफलाः श्रोतृगम्या गिरस्ते
कान्तं रूपं व्यसनिषु दया साधुषु प्रेम शुभ्रम् ।
इत्थम्भूते हितकृतपतेस्त्वय्यसज्ञा विबोधे
प्रेमस्थाने किमिति कृपणा द्वेषमुत्पादयन्ति ॥१॥

अतिशयवती सर्वा चेष्टा वचो हृदयङ्गमं
शमसुखफलः प्राप्तौ धर्मः स्फुटः शुभसंश्रयः ।
मनसि करुणा स्फीता रूपं परं नयनामृतं
किमिति सुमते ! त्वय्यन्यः स्यात् प्रसादकरं सताम् ॥२॥

निरस्तदोषेऽपि तरीव वत्सले कृपात्मनि त्रातरि सौम्यदर्शने ।
हितोन्मुखे त्वय्यपि ये पराङ्मुखाः पराङ्मुखास्ते ननु सर्वसम्पदाम् ॥३॥

सर्वसत्त्वहितकारिणि नाथे न प्रसीदति मनस्त्वयि यस्य ।
मानुषाकृतितिरस्कृतमूर्तेरन्तरं किमिह तस्य पशोर्वा ? ॥४॥

त्वयि कारुणिके न यस्य भक्तिर्जगदभ्युद्धरणोद्यतस्वभावे ।
नहि तेन समोऽधमः पृथिव्यामथवा नाथ ! न भाजनं गुणानाम् ॥५॥

एवंविधे शास्तारि वीतदोषे महाकृपालौ परमार्थवैद्ये ।
मध्यस्थभावोऽपि हि शोच्य एव प्रद्वेषदग्धेषु क एष वादः ? ॥६॥
न तानि चक्षूंषि न यैर्निरीक्ष्यसे न तानि चेतांसि न यैर्विचिन्त्यसे ।
न ता गिरो या न वदन्ति ते गुणान्न ते गुणा ये न भवन्तमाश्रिताः ॥७॥

तच्चक्षुर्दृश्यसे येन तन्मनो येन चिन्त्यसे ।
सज्जनानन्दजननी सा वाणी स्तूयसे यया ॥८॥

न तव यान्ति जिनेन्द्र ! गुणा मितिं
मम तु शक्तिरुपैति परिक्षयम् ।
निगदितैर्बहुभिः किमिहापरै—
रपरिमाणगुणोऽसि नमोऽस्तु ते ॥ ९ ॥

[ १३ ]

वायटगच्छीयश्रीअमरचन्द्रसूरिसूत्रितम्

पञ्चवर्गपरिहारमयं

## साधारणजिनस्तवनम् ।



( पद्मानन्दमहाकाव्यमध्यगतम् )

अनुष्टुब्वृत्तम् ।

संसारसारं शैवश्रीसरसीसरसीरुहम् ।
ऋषीश्वरं वृषावासं श्रेयसां संश्रयं श्रये ॥ १ ॥

सुरावासश्रिया स्वैरं स सर्वंसहया सह ।
आशा यशःशशी यस्य सहासाः सहसाश्रयत् ॥२॥

युग्मम् ।

वृषेशं रोषविषयवैरिशोषरसैर्वरम् ।
उषाहःसायवेलासु सेवेयाऽहं लवे लवे ॥ ३ ॥
श्रेयःश्रीवल्लिवलयशाल ! शीलालयाशय ! ।
उर्वीशेखरसेव्योऽसि रसावासववासवैः ॥ ४ ॥
रसाशीर्विषविश्वस्वर्विहायस्सु शिवाश्रय !
अवार्यवीर्यसूर्योऽसि वसुराशिविलाससूः ॥ ५ ॥
संसारवैरिवैरस्यावसायहर ! संहर !
अहोऽरिवारं विश्वस्य श्रेयःश्रीशर्वरीश्वरः ॥ ६ ॥
अशरीरारिसंहारहर्षसंहर्षसाहस ! ।
विश्वविश्वेश ! विश्वीयसर्वांहो विरसं हर ॥ ७ ॥

पञ्चवर्गरहितामिमां स्तुतिं
पिष्टपञ्चविषयाः पठन्ति ये ।
पञ्च पञ्चिन्महाव्रता ध्रुवं
पञ्चमीं गतिमवाप्नुवन्ति ते ॥ ८ ॥

---

[ १४ ]

## परमात्मषट्त्रिंशिका ।



सत्वेषु मैत्रीं गुणिषु प्रमोदं क्लिष्टेषु जीवेषु कृपापरत्वम् ।
मध्यस्थभावं विपरीतवृत्तौ सदा ममात्मा विदधातु देव ! ॥१॥
शरीरतः कर्तुमनन्तशक्तिं विभिन्नमात्मानमपास्तदोषम् ।
जिनेन्द्र ! कोषादिव खड्गयष्टिं तव प्रसादेन ममास्तु शक्तिः ॥२॥

दुःखे सुखे वैरिणि बन्धुवर्गे योगे वियोगे भवने वने वा ।
निराकृताशेषममत्वबुद्धेः समं मनो मेऽस्तु सदापि नाथ ! ॥३॥
मुनीश ! लीनाविव कीलिताविव स्थिरैर्निखाताविव बिम्बिताविव ।
पादौ त्वदीयौ मम तिष्ठतां सदा तमो धुनानौ हृदि दीपकाविव ॥४॥
एकेन्द्रियाद्या यदि देव ! देहिनः प्रमादिना सञ्चरता यतस्ततः ।
क्षता विभिन्ना मलिता निपीडिता ममास्तु मिथ्या दुरनुष्ठितं तदा ॥५॥
मुक्तिमार्गप्रतिकूलवर्तिना मया कषायाक्षवशेन दुर्धिया ।
चारित्र्यशुद्धेर्यदकारि लोपनं तदस्तु मिथ्या मम दुष्कृतं प्रभो ! ॥६॥
विनिन्दनालोचनगर्हणैरहं मनोवचःकायकषायनिर्मितम् ।
निहन्मि पापं भवदुःखकारणं भिषग् विषं मन्त्रगुणैरिवाखिलम् ॥७॥
अतिक्रमं यं यमपि व्यतिक्रमं जिनातिचारं स्वचरित्रकर्मणः ।
व्यधामनाचारमपि प्रमादतः प्रतिक्रमं तस्य करोमि शुद्धये ॥८॥
क्षितिं मनःशुद्धिविधेरतिक्रमं व्यतिक्रमं शीलवृतेर्विलङ्घनम् ।
प्रभोऽतिचारं विषयेषु वर्तनं वदन्त्यनाचारमिहातिशक्तिताम् ॥९॥
यदर्थमात्रापदवाक्यहीनं मया प्रमादादिह किञ्चनोक्तम् ।
तन्मे क्षमित्वा विदधातु देवी सरस्वती केवलबोधलब्धिम् ॥१०॥
बोधिः समाधिः परिणामशुद्धिः स्वात्मोपलब्धिः शिवसौख्यसिद्धिः ।
चिन्तामणिं चिन्तितवस्तुदाने त्वां वन्दमानस्य ममाऽस्तु देव ! ॥११॥
यः स्मर्यते सर्वमुनीन्द्रवृन्दैर्यः स्तूयते सर्वनरामरेन्द्रैः ।
यो गीयते वेदपुराणशास्त्रैः स देवदेवो हृदये ममास्ताम् ॥१२॥
यो दर्शनज्ञानसुखस्वभावः समस्तसंसारविकारबाह्यः ।
समाधिगम्यः परमात्मसञ्ज्ञः स देवदेवो हृदये ममास्ताम् ॥१३॥

निषूदते यो भवदुःखजालं निरीक्षते यो जगदन्तरालम् ।
अन्तर्गतो योगि निरीक्षणीयः स देवदेवो हृदये ममास्ताम् ॥१४॥

विमुक्तिमार्गप्रतिपादको यो यो जन्ममृत्युव्यसनव्यतीतः ।
त्रिलोकलोकीविकलोऽकलङ्कः स देवदेवो हृदये ममास्ताम् ॥ १५ ॥

क्रोडीकृताशेषशरीरिवर्गा रागादयो यस्य न सन्ति दोषाः ।
निरिन्द्रियो ज्ञानमयोऽनपायः स देवदेवो हृदये ममास्ताम् ॥ १६ ॥

यो व्यापको विश्वजनीनवृत्तिः सिद्धो विबुद्धो धुतकर्मबन्धः ।
ध्यातो धुनीते सकलं विकारं स देवदेवो हृदये ममास्ताम् ॥ १७ ॥

न स्पृश्यते कर्मकलङ्कदोषैर्यो ध्वान्तसङ्घैरिव तिग्मरश्मिः ।
निरञ्जनं नित्यमनन्तमेकं तं देवमाप्तं शरणं प्रपद्ये ॥ १८ ॥

विभासते यत्र मरीचिमाली न विद्यमाने भुवनाधिभासी ।
स्वात्मस्थितं बोधमयप्रकाशं तं देवमाप्तं शरणं प्रपद्ये ॥ १९ ॥

विलोक्यमाने सति यत्र विश्वं विलोक्यते स्पष्टमिदं विविक्तम् ।
शुद्धं शिवं शान्तमनाद्यनन्तं तं देवमाप्तं शरणं प्रपद्ये ॥ २० ॥

येन क्षता मन्मथ–मान–मूर्च्छा–विषाद–निद्रा–भय–शोक–चिन्ताः ।
क्षयानलेनेव[2] तरुप्रपञ्चस्तं देवदेवं शरणं प्रपद्ये ॥ २१ ॥

न संस्तरोऽश्मा न तृणं न मेदिनी विधानतो नो फलकं विनिर्मितम् ।
यतेर्निरस्ताक्षकषायविद्विषः सुधीभिरात्मैव सुनिर्मलो मतः ॥ २२ ॥

न संस्तरो भद्रसमाधिसाधनं न लोकपूजा न च सङ्घमीलनम् ।
यतस्ततो ध्यानरतो भवानिशं विमुच्य सर्वामपि बाह्यवासनाम् ॥२३॥

न सन्ति बाह्या मम केचनाऽर्था भवामि तेषां न कदाचनाहम् ।
इत्थं विनिश्चित्य विमुच्य बाह्यं स्वस्थः सदा त्वं भव भद्र! मुक्तौ ॥२४॥

---

१ परमात्मस्वरूपे । २ प्रलयकालाग्निना इव ।

आत्मानमात्मन्यवलोकमानस्त्वं दर्शनज्ञानमयं विशुद्धः ।
एकाग्रचित्तः खलु यत्र तत्र स्थितोऽपि साधो ! लभसे समाधिम्॥२५॥
एकः सदा शाश्वतिको ममात्मा विनिर्मलेक्षाधिगमस्वभावः ।
बहिर्भवाः सन्ति परे समस्ता न शाश्वताः कर्मभवाः स्वकीयाः ॥२६॥
यस्यास्ति नैक्यं वपुषाऽपि सार्द्धं तस्यास्ति किं पुत्रकलत्रमित्रैः ।
पृथक्कृते चर्मणि रोमकूपाः कुतो हि तिष्ठन्ति शरीरमध्ये? ॥२७॥
संयोगतो दुःखमनेकभेदं यतोऽश्नुते जन्मवने शरीरी ।
ततस्त्रिधाऽसौ परिवर्जनीयो यियासुना निर्वृतिमात्मनीनताम् ॥२८॥
सर्वं निराकृत्य विकल्पजालं संसारकान्तारनिपातहेतुम् ।
विविक्तमात्मानमवेक्षमाणो निलीयसे त्वं परमात्मतत्त्वे ॥ २९ ॥
स्वयं कृतं कर्म यदात्मना पुरा फलं तदीयं लभते शुभाशुभम् ।
परेण दत्तं यदि लभ्यते स्फुटं स्वयं कृतं कर्म निरर्थकं तदा ॥३०॥
निजार्जितं कर्म विहाय देहिनो न कोऽपि कस्यापि ददाति किञ्चन ।
विचारयन्नेवमनन्यमानसः परो ददातीति विमुञ्च शेमुषीम् ॥ ३१ ॥

इति द्वात्रिंशता वृत्तैः परमात्मानमीक्षते ।
अनन्यगतचेतस्को यात्यसौ पदमव्ययम् ॥ ३२ ॥

यैः परमात्माऽमितगतिविद्यः सर्वविविक्तो भृशमनवद्यः ।
शश्वदधीतो मनसि लभन्ते मुक्तिनिकेतं विभवजरं ते ॥ ३३ ॥

---

१ ज्ञान० । २ संयोगः । ३ स्वहितकारिणीम् । ४ पश्यन्

[ १५ ]

श्रीविजयप्रभसूरीयम्

## श्रीदेवपत्तननिवासि-जिनस्तवनम् ।

नतनाकिनिकायनरप्रमदं प्रमदप्रकरप्रसरन्महिमम् ।
महिमण्डलमण्डनमात्महितं महितं जगता महताऽसुमता ॥ १ ॥
सुमतिप्रदमुत्कटमोहमहातमहानिकृते तरणेः किरणम् ।
किरणं जनवञ्छितदेवमणेर्मनसा श्रमणैर्विहितस्मरणम् ॥ २ ॥
स्मरणप्रवणं स्मरशूलभृतोऽभृत विश्वमसङ्ख्ययशःप्रसरैः ।
प्रसरत्कलिकालसुकल्पतरुं तरुणीजनगीतगुणं भविनाम् ॥ ३ ॥
भवनाशकरं करुणानिलयं लयलीनमनोभवकायरुचम् ।
रुचिराननतर्जितचन्द्रमसमसमञ्जसजन्ममनोज्ञकरम् ॥ ४ ॥
करणद्विपमारणहस्तिरिपुं रिपुमित्रसमेक्षणमिष्टपरम् ।
परमार्हतपूजितपत्कमलं मलवर्जितकीर्त्तितरङ्गभरम् ॥ ५ ॥
भरणीपतिनिर्भयशर्मददं मददन्तिविभेदनकेशरिणम् ।
रणमुक्तममुं नुत पारगतं गतमत्सरमात्मनि भव्यजनाः ! ॥ ६ ॥

इत्थं श्रीविजयप्रभ-
सूरीश्वरसिद्धिदो जिनो जीयात् ।
देवकपत्तनवासी
स्तुतो मया सुधनवृद्धिकरः ॥ ७ ॥

[ १६ ]

श्रीमहीमेरुमुनिप्रणीता

# जिनस्तुतिपञ्चाशिका।

( क्रियागुप्ता )

सकलसुरेश्वरमुख्या विबुधाः सुविशुद्धबुद्धिनिधयोऽपि ।
स्तवनं तीर्थाधिपते ! [1]जिनेश ! ते नैव कर्तुमिह ॥ १ ॥
इति जानन्नपि नित्यं तथाप्यहं मुग्धमानसः पवितुम् ।
[2]विनयी हे जिनराज ! स्तवनमिषात्ते निजां जिह्वाम् ॥ २ ॥
मन्ये न सर्वशास्त्रे तव वृत्तं विबुधवर्ण्यमानमिह ।
पुण्यप्रभूतगुरुतरमहिमां[3]ऽतिक्रान्तसकलसुरम् ॥ ३ ॥
स्तुतिवादीक्षे[4]ऽमकरध्वजं जिन ! त्वां सुरेशसंसेव्यम् ।
समवसृतिमध्यभाजं संसृतिहरणं कदा मोदात् ॥ ४ ॥
तत्त्वतरुजलदधारासासितभूवलय ! भव्यजनवाराः ।
अतिशयसमूहशाली [5]नाथ ! भवांश्चरणगुणपाली ॥ ५ ॥
सकल ! ससार[6] ! सलक्षण ! संसारासारतां समधिगत्य ।
सर्वज्ञ ! सर्वसङ्गे भगवन्न भवानभावाय ॥ ६ ॥
संसारवारिराशिं विषमतरं दुस्तरं च जिनराज ! ।
विदभासिततारं[7]सुखं लब्ध्वा वैराग्यमत्र भवान् ॥ ७ ॥

---

१ हे जिन ! ईशते । २ विनयो ईहे । ३ गुरुतरमाहि मांत । ४ ईक्षे । ५ नाथ-पालय । ६ ससार । ७ ततार-तीर्णवान्, सुखं क्रियाविशेषणम् ।

भाषितशुचिसत्यागम[1] उदितोदितधाम ! सद्गुणग्राम ! ।
कृत्वा कर्मनिरासं दूरीकृतदुःखभववासम् ॥ ८ ॥
निर्जितमनोज[2] ! हारोज्ज्वलगुणमण्डल ! विशालतमभाल ! ।
कृपया भावारिभयं भविनां भूमौ भवानेव ॥ ९ ॥
अष्टविधकर्मरोगापनोदविशदागद[3]: सदा विमदः ।
त्वमविपदं जन्तूनां हितेच्छया शुद्धसिद्धान्तम् ॥ १० ॥
शशिशोभमानसाधितं यशोऽतिधवलीकृतावनीवलयः ।
निःशेषजन्तुकरुणां निष्कारणवत्सलोऽत्र भवान् ॥ ११ ॥
कनकविराजितमोचे[4] सुरनरतिर्यग्[5]विजातसङ्कोचे ।
भवतेश ! समवसरणे द्वेधा धर्मा धराभरणे ! ॥ १२ ॥
न कदा करुणाम्बुनिधे रजनीश[6] ! परोपकारिता भवतः ।
विद्रुतेह यथा तपनात् प्रकाशिता विश्वविश्वहिता ॥ १३ ॥
उज्झितसंमृतदोषे पापिन्यपि जनितपुण्यमतिपोषे ।
मैत्र्याऽपरत्र रोषे निरीक्षिते भवति[7] कृततोषे ॥ १४ ॥
ननु [8]निर्ममे त्वदीये हृदये जिन ! वेद्मि मुदितया वासः ।
मित्रामित्रेषु यतस्त्वमेकरूपः सदा विदितः ॥ १५ ॥
शिवपदसाधनविहितादरस्य भवतस्तपः समाचरतः ।
हृदये सत्क्षान्तिमये स्थानं न कदापि[9] रोषेण ॥ १६ ॥

---

१ अगमः। २ जहार उज्ज्वल०। ३ अगदः—अचीकथः ४ अधित—अदधात्। ५ ऊचे—अवादि। ६ करुणाम्बुधे: हे ईश ! अजनि। ७ स्यादौ सप्तमी त्यादौ वर्तमाना। ८ निर्ममे—ममत्वरहिते, क्रियापदपक्षे निर्ममे—निर्मितवान्। ९ अये इति क्रियापदम्।

दुःसहसुरनरतिर्यक्कृतोपसर्गावली त्वया त्रेधा ।
विश्वे क्षमीश[1] ! सम्यक् सिद्धिसुखास्वादरसिकेण ॥ १७ ॥
दुर्जनजनेन लपितं दुर्वचनं श्रवणशूलसदृशमपि ।
भवता सुरपतिविहितस्तुतितुल्यममा[2]निमुनिमुख्य ! ॥ १८ ॥
भव्यजननयनकैरववने विकाशं सदा ददानेन ।
चन्द्रोपमितिर्भवता[3]सितेन युक्तं जगन्नाथः ॥ १९ ॥
विषयमतिविषमरजनीविनाशमनिशं वितन्वता भवता ।
रवितोऽधिकेन लोके भावि[4] ख्यातिप्रतापेन ॥ २० ॥
भव्यविभारोचिष्णुर्निराकरिष्णुर्भवं भयोपेतम् ।
एकस्त्वमेव संवरमिन्द्रियजयसम्भवं सत्यम् ॥ २१ ॥
चित्रं विशदद्यास्थः क्षमावतां मुख्यतां सदैव दधत् ।
सकलं भावारिकुलं नाथ ! त्वं त्रिभुवने विदितः ॥ २२ ॥
अमृतरसादपि समधिकरसं विशेषादशेषशान्तरसम् ।
नक्तं दिवापि चित्रं त्वं न सदा सा[5]वधान जिन ! ॥ २३ ॥
ननु नव्यरम्यरञ्जितसुरनम्यपद ! प्रभावतो भवतः ।
आजन्मजातवैराश्चित्रं तिर्यग्गणेना[6]पि ॥ २४ ॥
विदितचरित्रेषु रहो मुख्यां के के न विषयजं सौख्यम् ।
जिनवर ! भवता तु जने तत् त्यक्तं विषमिवाऽवेत्य ॥ २५ ॥

---

१ अक्षमि हे ईश ! । २ अमानि । ३ तेन–भवता चन्द्रोपमितिः, युक्तं जगन्नाथः असि । ४ अभावि इति क्रियापदम् । ५ असौ त्वं सदा न न अधाः–अदधः । ६ आपि क्रियापदम् ।

दोषैरष्टादशभिर्नाथ ! मनस्ते मलीमलं न जने ।
समतोनितरां क्षालितकर्म[1]मलत्वात् कदाचिदपि ॥ २६ ॥
इह ते विश[2]दाचाराचरणपरस्य प्रभो ! मनो न मनाक् ।
संवेगसावधानं कदापि पञ्चप्रमादेषु २७ ॥
हरिहरमुख्या देवा जिन ! विख्याता जगत्त्रये सन्तु
त्वय्येव परं प्रकटं दृश्यते[3]या वीतरागत्वम् ॥ २८ ॥
परिनम्रनृपे देदीप्यमानचरणे सुभक्तिरिह भ[4]वति ।
येन जिनेश्वर सत्या दुःप्रापा मुक्तिरपि तेन ॥ २९ ॥
प्रकटितसुख ! कलिकाले लयालयं शमरसं जने योऽत्र ।
स तव प्रसादविशदः परमां पुष्टिं जगामै[5]वम् ॥
ये परमायु[6]रमायं तव शासनयानपात्रमतिनिविडम् ।
ते तेरु[7]रतारतरं भवजलधिं लीलया लोके ॥ ३१ ॥
ये दुर्गतिभयभीता नैव विकारेषु मानसं स्वीयम् ।
लब्ध्वा ते जिन ! वचनं ते धन्याः शिवपुरं प्राप्ताः ॥ ३२ ॥
या भवमतयो[8] धुर्या मोहबले मुख्यतां क्षमाधीश ! ।
तास्तत्त्वज्ञस्तरसा तवाज्ञया वर्जिताः सततम् ॥३३॥
कामाग्नि जलद ! दु[9]र्[10]बलदुःखक्षेप्येषु ये कषायेषु ।
चित्तप्रसरं न जनास्ते वसुधायां तवादेश्याः ॥३४॥

---

१ न भकृत । २ अविशत्–प्रविष्टम् । ३ आ–समन्तात् दृश्यते । ४ भवति । ५ जगाम । ६ अयुः–जग्मुः ७ तेरुः–तीर्णवन्तः । ८ अदुः- दत्तवन्तः । ९ अधुः । १० ददुः–दत्तवन्तः ।

यः परमविभाव ! सदानन्दमये तव मते ह्यकम्पमतिः ।
तस्य जिनेश्वर ! विश्वे न दुर्लभा शिवपदावाप्तिः ॥३५॥
यः किल निर्मलमनसाऽस्मरदेवममाय ! निर्ममाधीश ! ।
तव नाम महामन्त्रं समीहितं करगतं तस्य ॥३६॥
यः श्रीजिनेन्द्र ! मिथ्यामतिमुदितो मानसे नवक्रोधात् ।
शुभवाति भवति द्वेषं नहि भवति स भव्यताशाली ॥३७॥
सङ्ख्याव्यतीतनवनवभवसम्भूतानि पापकर्माणि ।
तव शिवकर ! सद्ध्यानाज्जिनातिभक्तिप्रसक्तात्मा ॥३८॥
तापं पापं च जने समन्ततः सन्ततं निरस्यन्ती ।
तव वागविबुद्धेर्गङ्गावोदीन्द्रवर्ण्यतम ! ॥३९॥
तादृक्षसमवसरणं भवभयहरणं जगत्त्रयीशरणम् ।
न तव पुरा के भव्या दृष्ट्वा पुरतः परानन्दम् ? ॥४०॥
भक्त्या धाम मनोरमसुरनिर्मितसमवसरण ऋद्धिवरम् ।
हृदये भवन्तमीशं न वयं मिथ्यात्वमतिमूढाः ॥४१॥
सुरतरुरिह तव चरितं निशम्य मन्ये विदूरतरदेशम् ।
चिन्तातिगफलदातुर्बहुधाम विराजमानस्य ॥४२॥
अकृतकलाविलासादिलातलाभासिकेवलालोकात् ।
भवतोऽधिगत्य सुकृतं संसारं मूलतः सुजनः ॥४३॥

---

१ अस्मरत्–स्मृतवान् । २ मानसे न वक्रः अधात् । ३ जिनाति–जीर्णीकरोति । ४ अवादि । ५ आपुः--प्राप्तवन्तः अतः । ६ अधाम–अस्थापयाम । ७ आम–भक्तिं चकार । ८ असात्–अन्तमकृत ।

विज्ञप्तेः पापपारावदलितनरकालिमोहनृपकारा ।
कांस्कान्न ते जिनाज्ञा सुपालिता साधुजनमान्या ॥४४॥
आज्ञा यदि त्वदीया लब्धा भवकोटिदुर्लभेह मया ।
तत्तां कामगवीमपि नाहं तु सं[1]मीहया युक्तः ॥४५॥
संसारे कान्तारे[2]ऽनन्तभवान्नाथ ! जन्तुनाऽनेन ।
दुःखं वचनातीतं विना तवाज्ञां जिनाधीश ! ॥४६॥
त्रिभुवनविदितोद्द्योते[2] त्वयि दृष्टे यद्यहं न जगदीश ! ।
मोहान्धकारभिदुरे सकोऽपि दोषो ममैव तदा ॥४७॥
नित्यं प्रीणितहृदये[3] भाषितनिःशेषजन्तुजातदये ।
विहितान्तरारिविजये त्वयीक्षिते मोदमहमभये ॥४८॥
सितकरसौम्यतरास्ये योगिजनैस्तत्त्वतस्तु समुपास्ये ।
मोहेनाहं दास्ये कथं त्वयीशे श्रितेऽहास्ये ॥४९॥
अहमिह हरिहरमुख्याऽनेकसुराणां चरित्रमाकर्ण्य ।
त्वामेव देवदेवं निष्कारणवत्सलं लोके[4] ॥५०॥
भव्यजनेशाधीश्वर[5] ! पवित्रचारित्रराधनं सुमतिम् ।
सततं समीहमानं माममलज्ञाननीरनिधिः ॥५१॥
पदनतनिर्जरराजे[6] भवत्यहं सेवकोऽपि गाढतरम् ।
तेन त्वदीयसेवा भवे भवे मे भृशं भूयात् ॥ ५२ ॥

---

१ आ—समन्तात् समीहे । २ उद्द्योते हे कान्त !—स्वामिन्! आरे-प्रापि । ३ प्रीणितहृत्-अये-गच्छामि । ४ लोके-अवलोकयामि । ५ भव्यजनं शाधि-शिक्षां देहि हे ईश्वर ! । ६ हे पदनतनिर्जर ! राजे-शोभेऽहम् ।

गच्छाधिपश्रीजयकीर्त्तिसूरि-
शिष्यो महीमेरुरहं स्तवं ते ।
कृत्वा क्रियागुप्तकवित्वमित्थं
त्वामेव दध्यां हृदये जिनेन्द्र ! ॥५३॥

[ १७ ]

श्रीचन्द्रप्रभसूरिप्रणीतं

## साधारणजिनस्तवनम् ।

( प्रभातकुलकापराख्यम् )

प्रातरेव समुत्थाय तीर्थनाथ ! मुखं तव ।
ये पश्यन्ति प्रणश्यन्ति तेषां नियतमापदः ॥१॥
जिनेन्द्र ! त्वन्मुखाम्भोजं प्रातः पश्यन्ति ये नराः ।
सार्द्धं सर्वज्ञकल्याणैर्नित्यं त्यजति तान्न राः ॥२॥
भावतो भवतो दृष्टं मुखं दिनमुखे न यैः ।
मर्त्यजन्मफलं नाथ ! नाशितं नाशितं हि तैः ॥३॥
प्रभो ! प्रभोदयेऽवश्यं पश्यन्नास्यं तवान्वहम् ।
नरो न रोगदारिद्र्योपद्रवैर्देव ! दूयते ॥४॥
नेदं पुण्यमपुण्यानां प्रभो ! प्रातः प्रयाति ते ।
मुखं मुखमभीष्टानां सुदृष्टेर्दृष्टिगोचरम् ॥५॥
दृष्ट्वा ते वीतरागास्यं कान्तोपान्तं मनोहरम् ।
कथमभ्येति भव्यानां कान्तोपान्तं[1] मनो हरम् ? ॥६॥

१ कान्ता उपान्ते यस्य

यस्ते सुप्तोत्थितः पश्येत् पादपद्मं सुदारुणम् ।
न पुनर्लभते नाथ ! भवे दुःखं स दारुणम् ॥७॥
निःशेषमङ्गलागारे प्रगेऽङ्घ्री यो न नाथ ! ते ।
वीक्षते स कथं मूढो मोक्षसौख्यस्य नाथते ? ॥८॥
प्रभा ते पादयोः स्पृष्टा प्रभाते शिरसा प्रभो ! ।
विभवं वितनोत्याशु विभवं च पदं नृणाम् ॥९॥
प्रभो ! त्वत्पादयोर्नित्यमरुणामरुणोदये ।
स्पृशन्न स्पृश्यते नाथ ! पातकैर्भवपातकैः ॥१०॥
त्वत्पादनखचन्द्राणां ज्योत्स्नया स्नपिता विभो ! ।
प्रणन्तारः प्रगे भान्ति मूर्त्तपुण्योज्ज्वला इव ॥११॥
किं गुणैः किं कुलेनापि किं रूपेण किमाज्ञया ? ।
किं विभो ! विभवेनापि न चेन्नित्यं त्वमीक्ष्यसे ॥१२॥

एतत्प्रभातकुलकं पुलकं दधानो
यस्ते निशान्तमुपगम्य निशान्त एव ।
स्वामिन् ! पठेत् त्रिदिववासमुपास्य पश्चा-
च्चन्द्रप्रभामलमुपैति पदं स मुक्तेः ॥१३॥

[ १८ ]

श्रीसोमप्रभसूरिविरचितं

## साधारणजिनस्तवनम् ।

श्रीमन् ! धर्म श्रय मम मनः सन्मतेऽम्ब ! प्रसीद
श्रद्धे ! श्रेयोजलभरनदि ! प्रोल्लस त्वं प्रकामम् ।

रोमाङ्कुरांस्तनु तनु ! भज त्वं च मां भाव ! बन्धो !
मातस्त्वं गौः ! प्रसर च यथा संस्तुवे श्रीजिनेन्द्रम् ॥१॥
त्वं नाथस्त्वां स्तुवे नाथं सनाथोऽहं त्वया नमः ।
तुभ्यं त्वन्मे शुभं ज्ञानं तवाऽनन्तगुणास्त्वयि ॥ २ ॥

अवचूरिः ।

हे श्रीमन् ! हे धर्म ! मम मनः त्वं श्रय । श्रय इति क्रियापदम् । कः कर्ता ? त्वम् । किं कर्मतापन्नम् ? मनः । कस्य ? मम । श्रीरस्यास्तीति श्रीमान् तस्य सम्बोधने हे श्रीमन् ! । हे सन्मते ! अम्ब ! मां त्वं प्रसीद । प्रसीद इति क्रियापदम् । कः कर्ता ? त्वम् । कं कर्मतापन्नम् ? माम् । सुष्ठु–शोभना मतिर्यस्य स सन्मतिः। तस्य सम्बोधने हे सन्मते! । ह श्रयोजलभरनदि ! हे श्रद्धे ! त्वं प्रोल्लस । प्रोल्लस इति क्रियापदम् । का कर्त्री ? त्वम् । कथम् ? प्रकामम् । हे तनु ! रोमाङ्कुरान् तनु। तनु इति क्रियापदम्। कान् कर्मतापन्नान् ? रोमाङ्कुरान् । किं कर्तृ ? त्वम् । हे भाव! ह बन्धो ! मां त्वं भज । भज इात क्रियापदम् । कः कर्ता ? त्वम् । कं कर्मतापन्नम् ? माम् । च–पुनः । हे मातः ! हे गौः ! प्रसर । प्रसर इति क्रियापदम् । का कर्त्री ? त्वम् । कथम् ? यथा श्रीजिनेन्द्रं अहं संस्तुव । संस्तुवे इति क्रियापदम् । कः कर्ता ? अहम् । कं कर्मतापन्नम् ? श्रीजिनेन्द्रम् । कथम् ? यथा ॥ १ ॥

त्वं नाथोऽसि । असीति क्रियापदम् । कः कर्ता ? त्वम् । किम्भूतः ? नाथः । त्वां नाथं अहं स्तुवे । स्तुवे इति क्रियापदम् । कः कर्ता ? अहम् । कं कमतापन्नम् ? त्वाम् । त्वां किंविशिष्टम् ? नाथम् । त्वयाऽहं सनाथोऽस्मि । अस्मीति क्रियापदम् । कः कर्ता ? अहम् । अहं कथम्भूतः ? सनाथः । केन ? त्वया । तुभ्यं नमोऽस्तु । अस्तु इति क्रियापदम् । किम् ? नमः । कस्मै ? तुभ्यम् । त्वन्मे शुभम् । त्वत्तः मे–मम शुभं वर्त्तते । वर्त्तते इति क्रियां पदमध्याहार्यम् । किम् ? शुभम् । कस्य ? मम । कस्मात् ? त्वत्–त्वत्तः । तव ज्ञानं वर्त्तते । वर्त्तत इति मृक्रियापदम् । कि ? ज्ञानम् ? । कस्य ? तव । त्वयि अनन्तगुणाः

युवां जिनं पश्यतमक्षिणी ! हे नैर्मल्यमग्र्यं[1] श्रयते[2] यथा वाम्[3] ।
प्राप्तं फलं स्वस्ति गतं युवाभ्यां पापं च पुण्यं युवयोश्च तेजः ॥३॥

यूयं नश्यत रे कषायरिपवः ! युष्मान् जिनः प्रेक्षते
युष्माभिर्मथितं जगन्मुनिपतिः क्रुद्धोऽस्ति युष्मभ्यमाः ।
भाग्यं युष्मदपासरन्ननु बलं युष्माकमद्य क्षितं
किं युष्मासु न चेतनाऽस्ति यदियत्यद्यापि वो धृष्टता? ॥४॥

अवचूरिः ।

सन्ति। सन्तीति क्रियापदम् । के कर्तारः ? अनन्तगुणाः । कस्मिन् ? त्वयि ॥ २ ॥

'युवाम्' हे अक्षिणी ! युवां जिनं पश्यतम् । पश्यतं इति क्रियापदम् । के कर्तृणी ? युवाम् । कं कर्मतापन्नम् ? जिनम् । यथा वां अग्र्यं नैर्मल्यं श्रयते । श्रयते इति क्रियापदम् । किं कर्म ? नैर्मल्यम् । किम्भूतम् ? अग्र्यम् । के ? युवाम् । कथम् ? यथा युष्मदो द्वितीया द्विवचनेन सह वाम् इत्यादेशः । निर्मलस्य भावो नैर्मल्यम्। भावे ये, वृद्धौ सिद्धिः । युवाभ्यां फलं प्राप्तम् । युवाभ्यां स्वस्ति गतं अस्तु । च-पुनः युवाभ्यां पापं गतम् । तृतीया-चतुर्थी-

---

१ अग्र्यम्—प्रधानम् । २ 'श्रिग् सेवायाम्' फलवत्कर्तरि 'इगितः' ( सिद्ध० ३—३—९५ ) आत्मनेपदम् । ३ 'द्वित्वे वां नौ' ( सिद्ध० २—१—२२ ) इति वाम् आदेशः । ४ युवाभ्यां-सम्प्रदानभूताभ्याम् । युवयोः सम्बन्धि पुण्यं युवयोर्विषयभूतयोस्तेजश्च । समस्तीति क्रियापदं स्वयमेवाध्याहार्यम् । 'यत्राऽन्यत् क्रियापदं न श्रूयते तत्राऽस्तीति भवति परः प्रयुज्यते' इति न्यायबलात्॥

इति युष्मदः सप्तविभक्त्येकविंशतिवचनप्रयोगरूपोदाहरणानि ॥

अहं वीरः प्राप्ताः शरणमबला मां त्रिभुवनं
मया जिग्ये मह्यं स्पृहयति मही मद् भुवि सुखम् ।
ममाग्र्यं साम्राज्यं मयि बलमलं तावदिति हि
स्मयं दध्रे यावन्न जिन ! मदनोऽव्याधि भवता ॥५॥

अवचूरिः ।

पञ्चमीद्विवचनोदाहरणम् । युवयोः पुण्यं वर्त्तते । कथम् । च-पुनः ? युवयोः तेजो वर्त्तते ॥ ३ ॥

'यूयम०' रे कषायरिपवः ! यूयं नश्यत । नश्यत इति क्रियापदम् । कषाया एव रिपवः कषायरिपवः तेषां सम्बोधनं हे कषायरिपवः । ' नशौच् अदर्शने ' इत्यस्य 'दिवादेः श्यः' ( सिद्ध० ३—४—७२ ) इति श्यप्रत्यये पञ्चमी ते सति सिद्धम् । युष्मान् जिनः प्रेक्षते । युष्माभिर्जगत् मथितम् । आः इति खेदे । युष्मभ्यं मुनिपतिः क्रुद्धोऽस्ति । युष्मद् भाग्यं अपासरत् । ' सृ गतौ ' अपपूर्वः । ननु इत्यामन्त्रणे । युष्माकं बलं क्षितम् । कथम् ? अद्य । युष्मासु किं चेतना नास्ति ? यत् अद्यापि वः इयती धृष्टता वर्त्तते । केषाम् ? वः । किम्भूता ? इयती । कथम् ? यत् । कथम् ? अपि । युष्मदो बहुवचने आमि'पदाद्युग् विभक्त्यैकवाक्ये वस्नसौ बहुत्वे' (सिद्ध० २-१-२१) इत्यामा सह वसादेशे चेति सिद्धम् ॥ ४ ॥

' अहं० ' अहं वीरोऽस्मि । किंलक्षणः ? वीरः । मां अबलाः शरणं प्राप्ताः । प्राप्ता इति क्रियापदम् । के कर्तारः ? अबलाः । किं कर्मतापन्नम् ? शरणम् । कं कर्मतापन्नम् ? माम् । द्विकर्मको धातुः । मया त्रिभुवनं जिग्ये । मह्यं मही स्पृहयति । भुवि सुखं वर्त्तते । कस्मात् ? मत् । अस्मत्पञ्चम्येकवचनम् । मम अग्र्यं-प्रधानं साम्राज्यं वर्त्तते । सम्राजो भावः साम्राज्यम् । किंलक्षणम् ? अग्र्यम् । कस्य ? मम । अस्मदो ङसा सह ' तव मम ङसा ' ( सिद्ध० २-१-१५ )

आवां याव इतो निहन्ति न जिनो नौ मित्र ! यत्र स्थिता-
वावाभ्यामभवत् स्मरस्य सखितो क्रुधश्च कामान्तकः ।
पुण्यं चाऽद्य परिच्युतं बत बलं क्षीणं न धीश्चावयोः
सञ्चिन्त्येति विभो । प्रणेशतुररं त्वद्द्वेषरागाविमौ ॥६॥

इति मम आदेशः । मयि बलं अलं–अत्यर्थ वर्त्तते । वर्त्तते इति क्रियापदम् । किं कर्तृ ? बलम् । कस्मिन् ? मयि । हि–निश्चितम् । तावत् इति मदनः–कामः–स्मयं–गर्वं दध्रे । दध्रे इति क्रियापदम् । कः कर्त्ता ? मदनः । कं कर्मतापन्नम् ? । स्मयम् । कथम् ? तावत् कथम् ? हि । हे जिन ! यावत् मदनः भवता न अव्याधि–न ताडितः । अव्याधि इति क्रियापदम् । केन कर्त्रा ? भवता । कः कर्मतापन्नः ? मदनः । कथम् ? यावत् । कथम् ? न । ‘ व्यधंच् ताडने ’ ‘भावकर्मणोः’ ( सिद्ध० ३–४–६८ ) इति ञिचि ‘ अद्यतना ’ (सिद्ध० ५–२–४) न लुकि । ‘ ञ्णिति ’ ( सिद्ध० ४–३–५० ) वृद्धौ पूर्वं ‘ अड् धातोरादिर्ह्यस्तन्यां चामाङा ’ ( सिद्ध० ४–४–२९ ) इति अटि अव्याधि इति सिद्धम् ॥ ५ ॥

‘ आवां० ’ इतः आवां यावः । ‘ यावः ’ इति क्रियापदम् । कौ कर्तारौ ? आवाम् । कुतः ? इतः । हे मित्र ! यत्र स्थितौ नौ—आवां जिनो न निहन्ति । निहन्ति इति क्रियापदम् । कः कर्त्ता ? जिनः । कौ कर्मतापन्नौ ? नौ—आवाम् । कथम् ? न । नौ किं-

---

१ आवाभ्यां स्मरस्य सहाय्योऽभवत् । आवाभ्यां सम्प्रदान–भूताभ्याम् । कामान्तकः क्रुद्धोऽस्ति । ‘ क्रुद्द्रुहेर्ष्यासूयाऽर्थैर्यं प्रति कोपः ’ ( सिद्ध० २–२–२७ ) इति चतुर्थी । कामान्तकः—जिनः । अनेन विशेषणेन स्मरसहाय्ययो रागद्वेषयोः क्रोधहेतुत्वं व्यनक्ति । आवयोः सम्बन्धि बलं क्षीणम् । आवयोर्विशेष्यभूतयोः धीः नास्ति ।

मग्ना नाथ ! भवार्णवे वयमितस्तत् तारयास्मान् शुभै-
दृष्टोऽस्माभिरसि त्वमीश ! वितरास्मभ्यं मनोवाञ्छितम् ।
अस्मन्नाशय पातकं मुनिपते ! ऽस्माकं त्वमेवोशिता-
ऽस्मासु ज्ञानमुदीरय त्वदपरः को न स्मृतेर्गोचरः ? ॥७॥

**अवचूरिः**

लक्षणौ ? स्थितौ । कुत्र ? यत्र । आवाभ्यां स्मरस्य सखिता अभवत् । अभवत् इति क्रियापदम् । का कर्त्री ? सखिता । कस्य ? स्मरस्य । काभ्याम् ? आवाभ्याम् । अस्मदस्तृतीयाद्विवचने भ्यामि आवादेशे दस्याऽऽत्वे सिद्धम् । च-पुनः । आवाभ्यां कामान्तकः क्रुद्धोऽस्ति । अस्तीति क्रियापदम् । कः कर्त्ता ? कामान्तकः । किंलक्षणः ? क्रुद्धः । काभ्याम ? आवाभ्याम् । कामस्य अन्तकः कामान्तकः । च-पुनः । आवाभ्यां । अद्य पुण्यं परिच्युतम् । परिच्युतामति क्रियापदम् । किं कर्तृ ? पुण्यम् । काभ्याम् ? आवाभ्याम् । कदा ? अद्य । तृतीया—चतुर्थी—पञ्चमी द्विवचने समानं रूपम् । सर्वत्राऽऽवाभ्याम् इति ज्ञेयम् । बत इति खेदे । आवयोः बलं क्षीणम् । क्षीणम् इति क्रियापदम् । आवयोः न धीरस्ति । अस्तीति क्रियापदम् । का कर्त्री ? धीः । कथम् ? न । हे विभो ! इति सञ्चिन्त्य इमौ रागद्वेषौ त्वत्तः अरम् अत्यथम । प्रणेशतुः—नष्टौ । प्रणेशतुः इति क्रियापदम् । कौ कर्तारौ ? रागद्वेषौ । किंलक्षणौ ? इमौ । सिद्धिः पूर्ववत् । कथम् ? अरम् । किं कृत्वा ? सञ्चिन्त्य । कथम् ? इति ।

'मग्ना नाथ०' हे नाथ ! वयं भवार्णवे मग्नाः। मग्ना इति क्रियापदम्। क कर्तारः ? वयम् । कस्मिन् ? भवार्णवे। भव एव अर्णवः भवार्णवः 'अमा त्वामा' ( सिद्ध० २-१-२४ ) इति त्वादेशः पदात् परः। अत्रापि 'अमा त्वा मा' ( सि० २-१-२४ ) इति माऽऽदेशः।

एवं पवितमां स्तुवेऽनवरतं त्वाऽहं नतत्वं प्रभो !
रक्ताऽहं त्वमपीश ! पाहि भवतो मा संस्तुत ! त्वां जवात् ।
भद्रं ते स्मृतमह्यमुद्धृतभव ! त्रैलोक्यनीलोत्पल !
श्रीसोमप्रभसूरिसंस्तुतगुण ! श्रेयःश्रियं देहि मे ॥८॥

[ १९ ]

## नमस्कारस्तवनम् ।

अरिहंताण नमो पूअं अरहंताणं रहस्सरहियाणं
पयओ परमिट्ठीणं अरुहंताणं धुअरयाणं ॥१॥
निद्दड्ढअट्ठकम्मिंधणाण वरनाणदंसणधराणं ।
मुत्ताण नमो सिद्धाणं परमं परमिट्ठिभूयाणं ॥२॥

---

तस्मिन् भवार्णवे । तत्-तस्मात् कारणात् । इतः भवार्णवात् त्वं अस्मान् तारय । तारय इति क्रियापदम् । कः कर्ता ? त्वम् । कान् कर्मतापन्नान् ? अस्मान् । ' पूर्वं युष्मान् अव अस्मान् ' इति सिद्धम् । कथम् ? तत् । कुतः ? इतः भवार्णवात् । हे ईश ! शुभैः त्वं दृष्टोऽसि । अस्मभ्यं त्वं मनोवाञ्छित वितर । हे मुनिपते ! अस्मत् पातकं त्वं नाशय । हे मुनिपते ! अस्माकं त्वमेव ईशिता वर्त्तसे । अस्मासु ज्ञानमुदीरय । उदीरय इति क्रियापदम् । कः कर्ता ? त्वम् । किं कर्मतापन्नम ? ज्ञानम् । केषु ? अस्मासु । न अस्माकम् त्वत् अपरः स्मृतेर्गोचरः कोऽस्ति ? अपि तु न कोऽपि । किंलक्षणः ? अपरः । कस्मात् ? त्वत् । पुनः किंलक्षणः ? गोचरः । कस्याः ? स्मृतेः । केषाम् ? नः अस्माकम् । सर्वत्र पूर्वं युष्मच्छब्द-रूपवत् सर्वविभक्तिबहुवचनेषु अस्मदो रूपं ज्ञेयम् । गोचरभयान्न साधनिका कृता इति ॥७॥

आयारधराण नमो पंचविहायारसुट्ठियाणं च ।
नाणीणायरियाणं आयारुवएसयाण सया ॥३॥
बारसविहं अपुव्वं दिंताण सुअं नमो सुअहराणं ।
सययमुवज्झायाणं सज्झायज्झाणजुत्ताणं ॥४॥
सव्वेसिं साहूणं नमो तिगुत्ताण सव्वलोए वि ।
तवनियमनाणदंसणजुत्ताणं बंभयारीणं ॥५॥
एसो परमिट्ठीणं पंचण्हवि भावओ नमुक्कारो ।
सव्वस्स कीरमाणो पावस्स पणासणो होइ ॥६॥
भुवणे वि मंगलाणं मणुयासुरअमरखयरमहियाणं ।
सव्वेसिमिमो पढमो होइ महामंगलं पढमं ॥७॥
चत्तारि मंगलं मे हुंतु रहंता तहेव सिद्धा य ।
साहू अ सव्वकालं धम्मो य तिलोयमंगल्लो ॥८॥
चत्तारि चेव ससुरासुरस्स लोगस्स उत्तमा हुंति ।
अरहंत सिद्ध साहू धम्मो जिणदेसियमुयारो ॥९॥
चत्तारि वि अरिहंत सिद्ध साहू तहेव धम्मं च ।
संसारघोररक्खसभएण सरणं पवज्जामि ॥१०॥
अह अरहओ भगवओ महइ महावीर वद्धमाणस्स ।
पणयसुरेसरसेहरवियलियकुसुमच्चियकमस्स ॥११॥
जस्स वरधम्मचक्कं दिणयरबिंबं व भासुरच्छायं ।
तेएण पज्जलंतं गच्छइ पुरओ जिणिंदस्स ॥१२॥
आयासं पायालं सयलं महिमंडलं पयासंतं ।
मिच्छत्तमोहतिमिरं हरेइ तिण्हंपि लोयाणं ॥१३॥

सयलम्मि वि जियलोए चिंतियमित्तो करेइ सत्ताणं ।
रक्खं रक्खसडाइणिपिसायगहजक्खभूआणं ॥१४॥
लहइ विवाए वाए ववहारे भावओ सरंतो य ।
जूए रणे य रायंगणे य विजयं विसुद्धप्पा ॥ १५ ॥
पच्चूसपओसेसुं सययं भव्वो जणो सुहज्झाणो ।
एयं झाएमाणो मुक्खं पइ साहगो होइ ॥१६॥
वेयालरुद्ददाणवनरिंदकोहंडिरेवईणं च ।
सव्वेसिं सत्ताणं पुरिसो अपराजिओ होइ ॥ १७ ॥
विज्जु व्व पज्जलंति सव्वेसुवि अक्खरेसु मत्ताओ ।
पंचनमुक्कारपए इक्किक्के उवरिमा जाव ॥ १८ ॥
ससिधवल-सलिलनिम्मलआयारसहं च वण्णियं बिंदुं ।
जोयणसयप्पमाणं जालासयसहस्सदिप्पंतं ॥ १९ ॥
सोलससु अक्खरेसुं इक्किक्कं अक्खरं जगुज्जोअं ।
भवसयसहस्समहणो जम्मि ठिओ पंचनवकारो ॥ २० ॥
जो थुणइ हु इक्कमणो भविआ भावेण पंचनवकारं ।
सो गच्छइ सिवलोअं उज्जोअंतो दस दिसाओ ॥ २१ ॥
तवनियमसंजमरहो पंचनमुक्कारसारहिनिउत्तो ।
नाणतुरंगमजुत्तो नेइ फुडं परमनिव्वाणं ॥ २२ ॥
सुद्धप्पा सुद्धमणा पंचसु समिईसु संजुअ तिगुत्तो ।
जे तम्मि रहे लग्गा सिग्घं गच्छंति सिवलोयं ॥ २३ ॥
थंभेइ जलं जलणं चिंतियमित्तो वि पंचनवकारो ।
अरि-मारि-चोर-राउल-घोरुवसग्गं पणासेइ ॥ २४ ॥

अट्ठेव य अट्ठसयं अट्ठसहस्सं च अट्ठ कोडीओ ।
रक्खंतु मे सरीरं देवासुरपणमिया सिद्धा ॥ २५ ॥
ॐ नमो अरहंताणं तिलोयपुज्जो य संथुओ भयवं ।
अमरनररायमहिओ अणाइनिहणो सिवं दिसउ ॥ २६ ॥
निट्ठवियअट्ठकम्मो सुइभूय-निरंजणो सिवो सिद्धो ।
अमरनररायमहिओ अणाइनिहणो सिवं दिसउ ॥ २७ ॥
सव्वे पओस-मच्छर-आहियहियया पणासमुवयंति ।
दुगुणियकयघणुसद्दं सोउं पि महाधणुं सहसा ॥ २८ ॥
इय तिहुयणप्पमाणं सोलसपत्तं जलंतदित्तसरं ।
अट्ठारं अट्ठवलयं पंचनमुक्कारचक्कमिणं ॥ २९ ॥
सयलुज्जोइयभुवणं विद्दावियसेससत्तुसंघायं ।
नासियमिच्छत्ततमं वियलियमोहं हयतमोहं ॥ ३० ॥
एय सया मज्झत्थो सम्मदिट्ठी विसुद्धचारित्तो ।
नाणी पवयणभत्तो गुरुजणसुस्सूसणापरमो ॥ ३१ ॥
जो पंचनमुक्कारं परमो पुरिसो पराइ भत्तीए ।
परियत्तेइ पइदिणं पयओ सुद्धप्पओ अप्पा ॥ ३२ ॥
अट्ठेव य अट्ठसयं अट्ठसहस्सं च उभयकालंपि ।
अट्ठेव य कोडीओ सो तइयभवे लहइ सिद्धिं ॥ ३३ ॥
एसो परमो मंतो परमरहस्सं परंपरं तत्तं ।
नाणं परमं नेयं सुद्धं झाणं परं झेयं ॥ ३४ ॥
एवं कवयमभेयं खाइयमत्थं पराभवणरक्खा ।
जोइ सुन्नं बिंदुं नाओ तारालवो बिमत्ता ॥ ३५ ॥

सोळस परमक्खरबीयबिंदुगब्भो जगुत्तमो जो उ ।
सुअबारसंगसायरमहत्थपुव्वत्थपरमत्थो ॥ ३६ ॥
नासेइ चोरसावयविसहरजलजलणबंधणसयाइं ।
चिंतिज्जंतो रक्खसरणरायभयाइं भावेण ॥ ३७ ॥

---

[ २० ]

## नमस्कारस्तवनम् ।

——:०:——

नम्रामरेश्वरकिरीटनिविष्टशोण-
रत्नाप्रभापटलपाटलिताङ्घ्रिपीठाः ।
तीर्थेश्वराः शिवपुरीपथसार्थवाहा
निःशेषवस्तुपरमार्थविदो जयन्ति ॥१॥
लोकाग्रभागभवना भवभीतिमुक्ता
ज्ञानावलोकितसमस्तपदार्थसार्थाः ।
स्वाभाविकास्थिरविशिष्टसुखैः समृद्धाः
सिद्धा विलीनघनकर्ममला जयन्ति ॥२॥
आचारपञ्चकसमाचरणप्रवीणाः
सर्वज्ञशासनधुरैकधुरन्धरा ये ।
ते सूरयो दमितदुर्दमवादिवृन्दा
विश्वोपकारकरणप्रवणा जयन्ति ॥३॥

सूत्रं यतीनातिपटु स्फुटयुक्तियुक्त-
युक्तिप्रमाणनयभङ्गगमैर्गभीरम् ।
ये पाठयन्ति वरसूरिपदस्य योग्या-
स्ते वाचकाश्चतुरचारुगिरो जयन्ति ॥४॥

सिद्धाङ्गनासुखसमागमबद्धवाञ्छाः
संसारसागरसमुत्तरणैकचित्ताः ।
ज्ञानादिभूषणविभूषितदेहभागा
रागादिघातरतयो यतयो जयन्ति ॥५॥

---

[ २१ ]

श्रीदेवेन्द्रसूरिविनिर्मितानि

# त्रिंशच्चतुर्विंशतिकास्तवनानि ।

## प्रथमभरतस्तवः ॥ १ ॥

**अतीताजिनाः**—

केवलज्ञानिनं निर्वाणिनं सागरमेव च ।
महायशोऽभिधं वन्दे भक्त्या विमलनामकम् ॥ १ ॥
सर्वानुभूतिं प्रणुमः श्रीधरं दत्तसंज्ञकम् ।
दामोदरं सुतेजस्कं स्वामिनं मुनिसुव्रतम् ॥ २ ॥
सुमतिं शिवगत्याख्यमस्ताघं च नमीश्वरम् ।
अनिलं यशोधराह्वं कृतार्घं च नमाम्यहम् ॥ ३ ॥

जिनेश्वरं शुद्धमतिं सेवे शिवकरं तथा ।
स्यन्दभं सम्प्रतिं चेत्यतीताः सन्तु श्रिये जिनाः ॥ ४ ॥

**वर्तमानजिनाः—**

ऋषभं चाऽजितं चैव सम्भवं चाभिनन्दनम् ।
सुमतिं पद्मप्रभाख्यं सुपार्श्वं नौम्यहं जिनम् ॥ ५ ॥
चन्द्रप्रभं च सुविधिं कलये हृदि शीतलम् ।
श्रेयांसं वासुपूज्यं च विमलानन्तजिज्जिनौ ॥ ६ ॥
धर्मनाथं तथा शान्तिनाथं कुन्थुं तदन्तरम् ।
मल्लिं सुनिसुव्रताह्वं पूजयामितमां नमिम् ॥ ७ ॥
नेमिनं पार्श्वनाथं च वर्द्धमानमभिष्टुमः ।
इत्यमी वर्त्तमानास्ते भूयासुर्भूतये जिनाः ॥ ८ ॥

**भाविजिनाः—**

पद्मनाभं सूरदेवं सुपार्श्वं च स्वयंप्रभम् ।
सर्वानुभूतिमभितो वन्दे देवश्रुताह्वयम् ॥ ९ ॥
उदयाख्यं च पेढालं पोट्टिलं सितकीर्त्तिकम् ।
सुव्रतं चाममं निष्कषायं हृदि निवेशय ॥ १० ॥
निःपलासं निर्ममाख्यं चित्रगुप्तं तथा श्रये ।
समाधि—संवर—यशोधरान् विजय—मल्लकौ ॥ ११ ॥
देवं चानन्तवीर्यं च स्तुवे भद्रकरं तथा ।
इत्येते भाविनोऽर्हन्तो विघ्नं निघ्नन्तु मेऽन्वहम् ॥ १२ ॥
इत्याद्यभरतक्षेत्रेऽतीताद्या जिनपुङ्गवाः ।
संस्तुता अद्भुतां दद्युः श्रीसङ्घतिलकश्रियम् ॥ १३ ॥

---

कमठहरिहारिअजीओ (८) जीओ नवमे भवम्मि तं सामि ! ।
पाणयकप्पम्मि सुरो इअरो पंकप्पहाइ पुढवीए (९) ॥६॥
वाणारसीइ पासो तेवीसइमो जिणो तुमं आसि ।
दसमे कमठकुलिंगी चमढिअकासी अहमहिंदो (१०) ॥ ७ ॥
सावणिसअट्ठमि सिवं नाणं चुई चित्तकसिणचउत्थीए ।
पासस्स पोसकसिणे दसमीगारसीहिं जम्मवया ॥८॥
इअ थुणिओ दढचमढिअसढकमढासुरबलो हवउ पासो ।
सिरिधम्मकित्तिविज्जाणंदयरो नमिरदेविंदो ॥९॥

---

[ ४३ ]

## श्रीवीर२७भवस्तोत्रम् ।



तिसलासिद्धत्थसुअं सीहंकं सत्तहत्थ कणयनिहं ।
भवसत्तावीसकहगेणं वद्धमाणं थुणामि जिणं ॥१॥
नयसारो सुग्गामे पढमे (१) बीए भवे पहु ! सुहम्मे (२)
तइए मरिइ तिदंडी (३) विजिआइ चउत्थए बंभे (४) ॥२॥
कुल्लागि कोसिअदिओ पंचमि (५) संसारचउर छट्ठभवे ।
थूणाइ पूसमित्तो सत्तमि (७) सोहम्मि अट्ठमए (८) ॥ ३ ॥
नवमे अग्गिज्जोओ चेइअगामम्मि (९) दसमि ईसाणे ।
इगदसमि अग्गिभूई मंदिरि ११ बारसमि सणकुमरो १२ ॥४॥
तेरसमे सेअबिआ भारद्दाओ १३ महिंद चउदसमे (१४) ।
रायगिहि थावरदिओ पनरसमे (१५) सोलसे बंभे (१६) ॥५॥

रायगिहि विस्सभूई सत्तरसि (१७) अट्ठारसे महासुक्के (१८)।
गुणवीसे पोअणपुरि तिविट्ठु (१९) वीसे तमतमाए (२०)॥६॥
पहु ! इगवीसे सीहो (२१) पंकाइ दुवीसमम्मि (२२) तेवीसे।
मूआपुरि पिअमित्तो चक्की (२३) सोहम्मि चउवीसे (२४)॥७॥
पणवीसे छत्तग्गाइ नंदणो (२५) पाणयम्मि छव्वीसे (२६)।
खत्तिअकुंडग्गामे सत्तावीसे महावीरो (२७) ॥ ८ ॥
मगसिरवइदसमि वयं कत्तिअमावासि सिवं सिआसाढे।
छट्ठि चुइ विसाहदसमी नाणु भवो चित्ततेरसिए ॥ ९ ॥
इअ सिरिवीरजिणिंदो थुणिओ भत्तिब्भरनमिरदेविंदो।
वरधम्मकित्तिविद्धिं विज्जाणं देउ मह सिद्धिं ॥ १० ॥

---

[ ४४ ]

## महामन्त्रगर्भितः

# अजितशान्तिस्तवः।

सिरिरिसह–अजिअ–संभव–अभिनंदण–सुमइ–सयप्पह–सुपासा।
चंदपह–सुविहि–सीअल–सिजंस–वसुपुज्ज–विमल–णंता ॥ १ ॥
धम–संति–कुंथु–अर–मल्लि–सुवय–नमि–पास–वीर–तेवीसं।
जिणपुंडरिआ पुंडरिअपव्वए जत्थ समुसरिआ ॥ २ ॥
वासासु विहिअवासा सुविहिअसित्तुंजए अ सित्तुंजे।
तहिं रिट्ठनेमिणो रिट्ठनेमिणो वयणओ जे उ ॥ ३ ॥
देविंदथुआ थुणिआ वरविज्जा णंदिसेणगणिवइणा।
समयं वरमंतसधमकित्तिणा अजियसंतिजिणा ॥ ४ ॥

तेहिं पि अजिअसंती थुणामि रागाइरिउअजिअसंती ।
विउलतउज्जिअसंती संपाइअतिजयजिअसंती ॥ ५ ॥
असुरिंदसुरिंदनरिंदचंदनागिंदबंदिवंदेहिं ।
वंदिअपयारविंदे वंदे जिअसंतिजिणचंदे ॥ ६ ॥
अजिअजिओ दुज्जयनिज्जिअतिजयंतरारिजाएण ।
तिजईसो तिजईससोहिओ जयउ जिणनाहो ॥ ७ ॥
सत्ताणं सत्ताणं संताणं कुणइ संतसंताणं ।
संति अ संतिकय उवसंती संतिकयउवसंती ॥ ८ ॥
पणवउत्ति नमो भगवओ अरिहओ जिअस्स सिज्झउ मे ।
संतिस्स य स भयवई जं महइ सया महाविज्जा ॥ ९ ॥
अजिअ सरइं अजिए रिऊहि अपराजिए जयम्मि सया ।
माहप्पराजिए अ णिहए असंवाहाबलेहिंपि ॥ १० ॥
जो कुणइ लोगसारं भत्तिपइट्ठिई पसाहेइ ।
लहुसव्वकामिअत्थे पुण्णसया सोहइ सया सो ॥ ११ ॥
जे संति संतिभत्ता कयासिवपसंति समुवसंतिपरा ।
सव्वं पावं असुहं उवसाहिंति अ दुहं ते ॥ १२ ॥
इट्ठट्ठं साहंति अ संतिं संतिण्णदुप्पयाइभया ।
अविरोहजुआ रोहंति निरुवसग्गं निरुवसग्गं ॥ १३ ॥
इअ अजिअसंतिजुअलं विमलं विमलगिरिसंठिअं सययं ।
खुद्दोवद्दवविंदं विद्दावइ दुअं नमंतस्स ॥ १४ ॥
जइ मग्गइ उग्गसमग्गदुग्गउवसग्गसंगदुक्खलयं ।
ता सरह सयलमंगलकल्लाणावलिनिलअमेअं ॥ १५ ॥

डाइणि–जोइणि–वेआल–जक्ख–रक्खस–पिसायभूआणं ।
न हु भवइ तस्स भयं जो सरइ थयं भयहरं एअं ॥ १६ ॥
इअ अजिअसंतिथुत्तं पक्खिअचउमासवच्छरपउत्तं ।
जो पढइ सुणइ सम्मं सो पावइ सिवसुहं रम्मं ॥ १७ ॥



[ ४९ ]

## श्रीवज्रस्वामिविरचितम्

# श्रीगौतमस्वामिस्तवनम् ॥



स्वर्णाष्टाग्रसहस्रपत्रकमले पद्मासनस्थं मुनिं
स्फूर्जल्लब्धिविभूषितं गणधरं श्रीगौतमस्वामिनम् ।
देवेन्द्राद्यमरावलीविरचितोपास्तिं समस्ताद्भुत–
श्रीवासातिशयप्रभापरिगतं ध्यायामि योगीश्वरम् ॥ १ ॥
किं दुग्धाम्बुधिगर्भगौरसलिलैश्चन्द्रोपलान्तर्दलैः ?
किं किं श्वेतसरोजपुञ्जरुचिभिः किं ब्रह्मरोचिःकणैः ? ।
किं शुक्लस्मितपिण्डकैश्च घटिता किं केवलत्वामृतै–
र्मूर्त्तिस्ते गणनाथ ! गौतम ! हृदि ध्यानाधिदेवी मम ॥२॥
श्रीखण्डादिपदार्थसार्थकणिकां किं वर्तयित्वा सतां
किं चेतांसि यशांसि किं गणभृतां निर्यास्य तद्वाक्सुधाम् ।
स्त्यानीकृत्य किमप्रमत्तकमुनेः सौख्यानि सञ्चूर्ण्य किं ?
मूर्त्तिस्ते विदधे मम स्मृतिपथाधिष्ठायिनी गौतम ! ॥ ३ ॥

नीरागस्य तपस्विनोऽद्भुतमुखव्राताद् गृहीत्वा दलं
तस्याः स्वच्छशमाम्बुधे रसभरं श्रीजैनमूर्त्तेर्महः ।
तस्या एव हि रामणीयकगुणं सौभाग्यभाग्योद्भवं
मद्ध्यानाम्बुजहंसिका किमु कृता मूर्त्तिः प्रभो ! निर्मला ॥४॥
किं ध्यानानलगालितैः श्रुतदलैराभासिसद्भावना–
ऽश्मोद्घृष्टैः किमु शीलचन्दनरसैरालेपि मूर्त्तिस्तव ? ।
सम्यग्दर्शनपारदैः किमु तपःशुद्धैरशोधि प्रभो !
मच्चित्ते दमिते जिनैः किमु शमेन्दुग्रावतश्चाघटि ॥ ५ ॥
किं विश्वोपकृतिक्षमोद्यममयी ? किं पुण्यपेटीमयी ?
किं वात्सल्यमयी ? किमुत्सवमयी पावित्र्यपिण्डीमयी ? ।
किं कल्पद्रुमयी मरुन्मणिमयी किं कामदोग्धीमयी
या धत्ते तव नाथ ! मे हृदि तनुः कां कां न रूपश्रियम ? ॥६॥
किं कर्पूरमयी सुचन्दनमयी पीयूषतेजोमयी
किं चूर्णीकृतचन्द्रमण्डलमयी किं भद्रलक्ष्मीमयी ? ।
किं वाऽऽनन्दमयी कृपारसमयी किं साधुमुद्रामयी—
त्यन्तर्मे हृदि नाथ ! मूर्त्तिरमला नाऽभावि किंकिंमयी? ॥७॥
अन्तःसारमपामपास्य किमु किं पार्थ्यव्रजानां रसं
सौभाग्यं किमु कामनीयसुगुणश्रेणीं मुषित्वा च किम् ? ।
सर्वस्वं शमशीतगोः शुभरुचेरौज्ज्वल्यमाच्छिद्य किं ?
जाता मे हृदि योगमार्गपथिकी मूर्त्तिः प्रभो ! तेऽमला ॥८॥
ब्रह्माण्डोदरपूरणाधिकयशःकर्पूरपारीरजः–
पुञ्जैः किं धवलीकृता तव तनुर्मद्ध्यानसद्मस्थिता ।

किं शुक्लस्मितमुद्गरैर्हतदलद्दुःकर्मकुम्भक्षरद्-
ध्यानाच्छामृतवेणिभिः प्लुतधरा श्रीगौतम ! भ्राजते ॥ ९ ॥

इत्थं ध्यानसुधासमुद्रलहरीचूलाञ्चलान्दोलन-
क्रीडानिश्चलरोचिरुज्ज्वलवपुः श्रीगौतमो मे हृदि ।
भित्त्वा मोहकपाटसम्पुटमिति प्रोल्लासितान्तःस्फुर-
ज्ज्योतिर्मुक्तिनितम्बिनी नयतु मां सब्रह्मतामात्मनः ॥१०॥

श्रीमद्गौतमपादवन्दनरुचिः श्रीवाङ्मयस्वामिनी
मर्त्यक्षेत्रनगेश्वरी त्रिभुवनस्वामिन्यपि श्रीमती ।
तेजोराशिरुदात्तविंशतिभुजो यक्षाधिपः श्रीः सुरा-
धीशाः शासनदेवताश्च ददतु श्रेयांसि भूयांसि नः ॥११॥

[ ४६ ]

कविकुलप्रभप्रणीतं

मन्त्राधिराजापराभिधानं

## श्रीपार्श्वनाथस्तवनम् ।



नत्वोपासितचरणं कमठेन प्राप्तबोधिना पार्श्वम् ।
कमठोपदिष्टमन्त्राक्षरगर्भां तन्नुतिं करवै ॥ १ ॥
वन्दे श्रीपार्श्वजिनं प्रथमं परमेष्ठिनां सदा ध्येयम् ।
यन्नामस्मरणमपि प्रशमयति दुरन्तदुरितानि ॥ २ ॥

षट्कोणयन्त्रमध्ये जन्मजरामृत्युनाशनं पार्श्वम् ।
पुनरुक्त्या च प्रणवं ह्रींकारं दोषविनिकारम् ॥ ३ ॥
मायाबीजं ह्रुं ह्रः सनाथमथ यः समस्तसुखदक्षः ।
किञ्च त्रैलोक्यसखं ध्वनिसारं फट् फट् स्वाहा ॥ ४ ॥
एकान्ते सुदृढमना ऐन्द्रीहरिदभिमुखः पवित्राङ्गः ।
श्रीपार्श्वनाथचरणाम्बुजसेवामधुकरः सुकृती ॥ ५ ॥
ध्यानविधौ निष्णातो ब्रह्मस्थः सद्गुरूपदेशेन ।
यो ध्यायति त्रिसन्ध्यं तस्याऽवन्ध्यो भवेदेषः ॥ ६ ॥
नारिर्न हरिर्न करी नाऽहिर्नाग्निर्न सागरो न गदः ।
न क्ष्मापतिर्न दस्युर्न रुजा नाकालसरणमपि ॥ ७ ॥
तस्य भयाय प्रभवति हृदये जागर्त्ति यस्य पार्श्वेशः ।
पवनेरिताम्बुदा इव किन्त्वेते झटिति विघटन्ते ॥ ८ ॥
दुष्टसुरशाकिनीग्रहमुद्गलवेतालराक्षसप्रमुखाः ।
विलुठन्ति किङ्करा इव पदयोः पार्श्वक्रमध्यातुः ॥ ९ ॥
स कविर्वादी वैद्यो दैवज्ञो मन्त्रतन्त्रनिष्णातः ।
सकलकलानां निलयो भवति हृदि स्मरति यः पार्श्वम् ॥१०॥

एवं कमठाधिष्ठित-
सुमन्त्रगर्भं जिनेन्द्रपार्श्वस्य ।
यः पठति स्तवमनिशं
स **कविकुलप्रभ**तया घटते ॥ ११ ॥

---

[ ४७ ]

श्रीवादिदेवसूरिप्रणीतं

## श्रीकलिकुण्डपार्श्वजिनस्तवनम् ।

आर्त्तनामोदरं कृत्वा हुंकारं रेफसंयुतम् ।
नादबिन्दुसमायुक्तं ॐकारं सम्पुटे स्थितम् ॥ १ ॥
दिक्षु वज्राष्टसम्भिन्नं षोडशस्वरवेष्टितम् ।
वज्राग्रेषु च सर्वेषु मूलमन्त्रं यथास्थितम् ॥ २ ॥
श्वेताम्बरधरो मन्त्री शुभध्यानपरायणः ।
उत्तराभिमुखो भूत्वा लिखेद् यन्त्रं शुभोदये ॥ ३ ॥
कांश्यभाजनमध्ये तु चन्दनेन सुगन्धिना ।
लिखेद्दर्भस्य लेखिन्या मुष्टित्रयप्रमाणतः ॥ ४ ॥
सुगन्धैः कुसुमैः श्वेतैः अष्टोत्तरशतेन च ।
अर्चयेद् विधिना यन्त्रं फलं यावद् दिने दिने ॥ ५ ॥
लिखितं पूजितं चैव प्रक्षाल्य सुजलेन तु ।
तज्जलं पीतमात्रं तु परविद्याविनाशनम् ॥ ६ ॥
शाकिनीभूतवैतालपिशाचोरगराक्षसाः ।
भवन्ति निःप्रभाः सर्वे यन्त्रस्यास्य प्रभावतः ॥ ७ ॥
शूलं विशूचिकाऽजीर्णं लूतादिस्फोटकादयः ।
अग्निचोरकृतात् (भीतिः) विषं स्थावरजङ्गमम् ॥ ८ ॥
गर्भस्य वेदना यस्या गूढगर्भा तु या भवेत् ।
एवं रोगैस्तु दुःखार्ताः सुस्थाः स्युः सर्वजन्तवः ॥ ९ ॥

वन्ध्यापि लभते पुत्रं मृतवत्सा च गर्भसूः ।
दुर्भगाः सुभगाश्चैव *मन्त्रयन्त्रानुभावतः ॥ १० ॥

[ ४८ ]

श्रीमुनिचन्द्रसूरिप्रणीतम्

## श्रीपार्श्वनाथस्तवनम् ।

नमामि श्रीपार्श्वं कलिगिरिशिरःकुण्डनिकट—
प्रदेशावस्थानाधिगतकलिकुण्डाभिधमहम् ।
तदासन्नायातक्षितिपबहुमानातिशयतः
स्वयं प्रादुर्भूतप्रतिममखिलोपद्रवहरम् ॥ १ ॥
त्वमर्च्यस्त्वं ध्येयस्त्वमनिशमुपास्यः सुकृतिनां
त्वमानम्यः सम्यक् किमिह बहुना त्वं च शरणम् ।
त्वमेवासि त्राता जगति कलिकुण्ड ! त्वदपरो
न कश्चित् क्षुद्रोपद्रवहरणदक्षः क्षतभयः ॥ २ ॥
सकारान्तं बीजाक्षरमध उकाराग्निमयुतं
कृतोर्ध्वाधोयान्तं द्विजपतिकलाबिन्दुकलितम् ।
निविष्टान्तर्नाम प्रणवयुगकोटीपरिगतं
ज्वलद्वज्रैर्युक्तं दिशि विदिशि चाष्टाभिरभितः ॥ ३ ॥
अधोवज्रस्याग्रात् परिवृतमकारादिभिरपि
द्विरष्टाभिर्वर्णै रइतिचरमैर्दक्षिणगमात् ।
अथोङ्कारं मायाक्षरमलवयस्याथ उपरि
रकारं तत्षष्ठस्वरशशिकलाबिन्दुकलितम् ॥ ४ ॥
चतुर्थं च प्राग्वत् प्रकटतरसंयोगरचितं
ततः पूर्वं दीर्घं ननु गरसमेतं तमथ च ।

सबिन्दुं लक्ष्मीं चान्ययुगजलधामाभिधमहो
परं तत्त्वं नीचैर्जनवशकरं नाम तदपि ॥ ५ ॥
चतुर्थी प्राग्वान्तमथ हुतभुक्तृप्तिविचनं
वरैर्वर्णैर्गर्भिर्दशसहितषड्भिः परिगतं
परिज्ञातं तत्त्वं जयतिकलिकुंडाख्यममलं ॥ ६ ॥
तदित्थं सम्पूर्णं गुरुजनगिरा दोषहरणम्
पवित्रे पात्रे च स्फुरदमलसौराष्ट्रिकमये
शुचिश्रीखण्डेन प्रचुरतरसौभाग्यगुणिना ।
त्रिमुष्टिप्रामाण्यैः कुशसहितदर्भैर्विलसितं
क्षणादेतत् तत्त्वं भुवि विजयते स्वास्थ्यजनकम् ॥ ७ ॥
अशक्तं शाकिन्याः शिरसि निहितं शङ्कुशकलं
कृतं लीलामात्रान्निखिलपरविद्याविदलनम् ।
विशीर्णा चेदानीं जगति ननु दाहज्वरकथा
पुरः साक्षाद् दृष्टे जयति कलिकुण्डे भगवति ॥ ८ ॥
प्रचण्डो दण्डोऽयं सपदि कलिकुण्डस्य सहसा
भवेद् भूतादीनां प्रकटमिह दण्डो निरवधिः ।
असावेव त्राणं भवति नियतं मान्त्रिकतते-
रपि क्षुद्रार्तायाः क्वचिदपि कथंचिद्विधिवशात् ॥ ९ ॥
इति श्रीमान् पार्श्वः प्रभुरखिलकल्याणवसतिः
समुद्रो विद्यानामतिशयवतीनां निरुपमः ।
स्थितः सिद्धिस्थाने महितमुनिचन्द्रप्रकटित-
स्फुरन्मन्त्रात्मा मे शमयतु समग्रं भवभयम् ॥ १० ॥

[ ४९ ]

कविचक्रवर्त्तिश्रीपालविरचितं

## श्रीचतुर्विंशतिजिनस्तवनम्

भक्त्या सर्वजिनश्रेणिरसंसारमहामया ।
स्तोतुमारभ्यते बद्धरसं सारमहा मया ॥ १ ॥
श्रीनाभेय ! भवान् पुंसामलङ्कारमगीयते ।
अभूत् ते चित्तमाक्रष्टुमलं का रमणी यते ! ॥ २ ॥
समुलङ्घितसंसारकान्तार ! तरसाऽजित ! ।
मां पुनीहि जगन्नाथ ! कान्तारतरसाजित ! ॥ ३ ॥
निरस्तः केन मोहस्त्वां विना शम्भव ! दारुणः ।
तेनासि दहनीकर्त्तुं विनाशं भवदारुणः ॥ ४ ॥
अभिनन्दन ! युष्मासु सदाचरणधीरता ।
जेतुमेनांसि नान्येषां सदा च रणधीरता ॥ ५ ॥
श्रीः पुंसां सुमते ! ध्वस्तकलितापाय ! दक्षता ।
तद्भक्तेस्तत्र पापेषु कलिता पापदक्षता ॥ ६ ॥
पद्मप्रभ ! सिषेवे त्वां मुक्ताहारमुदारता ।
त्वयि लोकत्रयी मुक्तिमुक्ताहार ! मुदा रता ॥ ७ ॥
सुपार्श्व ! देशनायां ते चतुराननकोमलाः ।
गिरः श्रुत्वा न तुष्टाव चतुरानन ! कोऽमलाः ॥ ८ ॥
चन्द्रप्रभ ! भवानेव सत्तमः सप्रभावताम् ।
यो धत्ते चैव सञ्जेतुं सत्तमः सप्रभावताम् ॥ ९ ॥

सुविधे! कैर्वचोमार्गं विभवस्तव नीयताम् ।
त्वय्येव मन्यते स्वर्गविभवः स्तवनीयताम् ॥ १० ॥
त्वयि निर्वृतिदानाय शीतले! सविभावसौ ।
सिक्तोऽस्मि सकलक्लेशशीतलेशविभावसौ ॥ ११ ॥
तं श्रेयांसं स्तुवे भक्त्या कामं केवलिनामिनम् ।
यस्मादन्ये न गृह्णन्ति कामं के वलिनामिनम् ॥ १२ ॥
वासुपूज्य ! विभो ! स्तौमि भवन्तं सत्वराशयः ।
यत्प्रासादात् तरन्त्येव भवं तं सत्वराशयः ॥ १३ ॥
यं स्मृत्वाऽपि लभन्ते स्म देहिनः सुरसम्पदम् ।
स त्वं विमल ! निर्दोषं देहि नः सुरसं पदम् ॥ १४ ॥
अनन्तजित्! तव श्रेयः सुतरामापदञ्चकः ।
त्वामीशं प्राप्य नावैति सुतरामापदं च कः ? ॥ १५ ॥
केषां नाऽभूच्चमत्कारो धर्मराज ! सतामसौ ।
विकारौ यत् त्वया ध्वस्तौ धर्म ! राजसतामसौ ॥ १६ ॥
शान्तं यन्नागमो दोषविकलं कतमो नयः ।
तद्वचस्ते स किं स्तौति विकलङ्कतमो न यः ॥ १७ ॥
तेजः कुन्थो! भवोत्तारकरालम्ब ! तवारिभिः ।
कूर्चाग्नेरिव न ध्वस्तं करालं बत वारिभिः ॥ १८ ॥
अर ! त्वदुपमानस्य विभवोदधिरेकदा ।
जन(नः) तीर्णोऽखिलकर्मविभवो दधिरेकदा ॥ १९ ॥
मल्लिदेव ! दयारूपममानं ते नवं धनम् ।
त्वया कर्माख्यमुच्छेद्यममानं तेन बन्धनम् ॥ २० ॥

श्रीसुव्रत ! व्यधार्षीःस्म महीनतरसं यमम् ।
अजैषीस्त्वं जनान्नन्तुमहीनतरसंयमम् ॥ २१ ॥
नमे ! यस्मिन्नतोऽस्मि त्वाममानं दमयोगतः ।
स एव समयः कामं ममाऽऽनन्दमयो गतः ॥ २२ ॥
ताः समन्नाक्षिपन्नेमे ! कमनीयतमा नवम् ।
यासां दृशाऽपि नानङ्गकमनीयत मानवम् ॥ २३ ॥
पार्श्वनाथ ! जगाम त्वां कोपमातङ्गतापदम् ।
यः पुपोष तपःसिंहं कोऽपमातङ्गतापदम् ॥ २४ ॥
जातलक्ष्मीं तमो हर्त्तुं वर्द्धमान ! प्रभो ! दयाम् ।
देहिमद्य विधेहि त्वं वर्द्धमानप्रभोदयाम् ॥ २५ ॥
शुचिर्जिनाली वः पायादपवित्रा समानसा ।
योऽस्नाद्यस्यास्तमोग्गोसा (?) दपवित्रा समानसा ॥ २६ ॥
जिनागमं तमोध्वंसे रविकल्पमपापदम् ।
नमाम्यममांकमलै रविकल्पमपापदम् ॥ २७ ॥
त्वया वाग्देवि ! तत्कार्यं महतोद्यमयाऽऽदरात् ।
यथा मोहमयां तार्यं महतोद्यमयादरात् ॥ २८ ॥
इति सुमनसः **श्रीपालकवि**रचितनयः समस्तजिनपतयः ।
अविनाशिज्ञानदृशो दिशन्तु वः ………… ॥ २९ ॥

---

[ ५० ]

पण्डितावतंसश्रीरामचन्द्रसूरिकृता

## अपह्नुतिद्वात्रिंशिका ।

भवद्गुणानां स्तुतये जगद्गुरो ! कृतादरः सोऽयमपह्नुतौ जनः ।
अशस्तमप्याश्रितकर्म मन्यते यतः प्रसन्नः शुभमेव सुप्रभः ॥१॥
सितं न ते सद्म हिरण्मयाचले चकास्त्यदः पन्नगसेव्य ! किन्त्वसौ ।
फणीश्वरः क्ष्माभरभङ्गुरस्थितिस्तवाश्रिते वोपिकया रसातलात् ॥२॥
जिनेश ! नेदं सदनं तवेन्दवप्रभावभासि प्रतिभाति किं पुनः ।
वृषाह्वसिंहस्य विपद्द्विपावलीविपाटनस्फाटिकपञ्जरं परम् ॥३॥
इदं न ते नीलतनुच्छविच्छटाकदम्बकं किन्तु फणीन्द्रकेतन !
त्वया त्रिलोकीविपदां विपत्कृते तरङ्गितं कालभुजङ्गमण्डलम् ॥४॥
अदः समुन्मीलितनीलमङ्गतः प्रभोर्मिजालं त्रिजगत्पते ! न ते ।
अपि त्वसौ स्फूर्त्तिमियर्त्ति चापलच्छिदे श्रियामायसशृङ्खलावलिः ॥५॥
सरोजसौन्दर्यजुषोस्तवोन्मिषत्यसौ मुनीश ! क्रमयोर्न शोणिमा ।
प्रसह्य रागः स बहिष्कृतो हृदस्त्वदङ्घ्रिसेवामपि तु प्रपन्नवान् ॥६॥
निरायतात्मा न तवोपरि स्फुरत्ययं भुजङ्गाधिपनि (ति)र्गुणाधिकः ।
अपि त्वसौ रज्जुरजीर्णरागया स्वधाम नेतुं मुमुचे शिवश्रिया ॥७॥
क्षमाभृतां धुर्य ! तवेदमुच्चयौ तदा न शोणाहिफणामणीमहः ।
अभूदयं किन्त्वरुणोदयः पुरा स्फुरिष्यतो ब्रह्ममयांशुमालिनः ॥८॥
तवायमाभाति भुजङ्गपुङ्गवः प्रशान्तमूर्द्धन्य ! न मूर्ध्नि किन्त्वियम् ।
तपोऽधिकं त्वां भुवनाभयाचलं विचिन्त्य भेजे कमठाज्जटावली ॥९॥

अशोषिताशेषरुजस्तव प्रभो ! न धर्मचक्रं पुरतः स्फुरत्यदः ।
स्वकुष्ठनिष्ठापननिष्ठुराशया समाश्रितः किन्त्वयमीश्वरस्त्विषाम् ॥१०॥
अयं जिनानामधिराज ! राजते न ते जितारिव्रज ! वज्रभृद्ध्वजः ।
असौ स्फुटं किन्त्वतिवृद्धिविश्वगत्वदीयकीर्त्तेरवलम्बयष्टिका ॥११॥
सुवर्णशैलः किल नायमत्र ते जिनेन्द्र ! नैतद् भवनं च निर्मलम् ।
असौ कुमारक्षितिभृद्यशोङ्कुरः शुभैककन्दादमु(दु)दगादपि त्वतः॥१२॥
इयं न ते पादनखोज्ज्वलद्युतिर्विनम्रभालेष्वभिषङ्गमङ्गति ।
तदाश्रया पुण्यलिपेरपि त्वदः प्रमार्ज्जनोर्ज्जस्वलमम्बु वल्गति ॥१३॥
तव प्रभाचक्रमुदश्चिमेचकं चकास्ति नैतन्मणिमात्रपन्नगम् ।
तनुं दधानः क्षणदामयि त्विदं विभाति सप्तर्षिविभूषितं नभः ॥१४॥
स एव रोचिष्णुकडारकेसरच्छटाकटप्रा तप (तव) मौलिपृष्ठतः ।
नृसिंह ! नैदं तु महःकदम्बकं विडम्बयद् बिम्बमशीतरोचिषः ॥१५॥
इदं न फुल्लत्फणभृत्फणामणीमहस्तवोच्चैः शमिनामधीश्वर ! ।
समुल्लसद्ध्यानसुधाभयात् त्वहेर्विषार्चिरेतन्मिषतः पलायितम् ॥१६॥
इदं तव ज्योतिरुदेति विष्टपत्रयोदरव्यापि जिनेश ! न त्वदः ।
अहीन्द्ररत्नाक्षिकरस्फुरन्नखैरुपर्यधोमध्यविकस्वरं महः ॥१७॥
न रक्तकङ्केल्लिरसौ चकास्ति ते निषेवते त्वामपि नृत्वगुप्तये ।
अशेषषड्जीवनिकायतायिनं मुनीश ! रागः स वनस्पतीभवन् ॥१८॥
जिन ! द्विजानां तव देशनावनावमी न कान्तिस्तबकाश्चकासति ।
विमुक्तिकान्ताभरणाय किन्त्वयं कृपापयःसागरमौक्तिकोत्करः ॥१९॥
न मूर्ध्नि भूषा प्रणयी फणीश्वरं क्षमाभृतामीश ! बिभर्षि किं पुनः ।
अमुं दधानेन कलापिना त्वया शिवं विरोधप्रशमा प्रकाश्यते ॥२०॥

अमी न नम्रावनिशासिनां शिरःस्रजः पुरस्ते पतयालवोऽलयः ।
अपि त्वसौ पादनखांशुताडिता गलत्यहो पापमलस्य मालिका ॥२१॥
इदं न ते नीलतनूरुचामुपर्युदञ्चि दन्तोज्ज्वलरोचिरासदः ।
जगत्त्रयीमङ्गलवल्लिकाननं चकास्त्यदः किन्तु लसत्प्रसूनकम् ॥२२॥
इयं न ताम्राङ्घ्रिनखांशुमञ्जरी जिनेश ! लेश्यापि तु भाति तैजसी ।
विनम्रदुष्कर्मदिधक्षया तव प्रसन्नपद्भ्यां झटिति स्फुटीकृता ॥२३॥
इदं न मौलौ धरणोरगेश्वरस्फुरत्फणालीफलकं जगत्पते ! ।
तवापि तु ध्यानसुधाम्बुपायिनः करातपत्रं भुवनश्रिया धृतम् ॥२४॥
अयं न गाङ्गेयगिरिस्त्वमप्यसौ न चेह नीलोत्पलसोदरद्युतिः ।
अदस्त्रिलोकाभरणैकपङ्कजं हिरण्मयं किन्तु सनीलषट्पदम् ॥२५॥
नमस्यतां भालतलेषु नैष ते जपासखः पादनखत्विषां चयः ।
पदं ददत्याः सुकृतश्रियस्त्विदं विराजते यावकरागवल्गितम् ॥२६॥
अयं न नीलोपलशेखरायितं त्वदीयमूर्त्तिस्तपनीयभूधरः ।
जगत्सु कल्याणनिपः स्फुरत्यपि त्वसौ वतंसार्पितनीलपल्लवः ॥२७॥
इयं न ते पादनखांशुमण्डली सतां ललाटाङ्गणकुङ्कुमच्छटा ।
उदेष्यतः पुण्यरवेरपि त्वसाववन्ध्यसन्ध्याभ्रकदम्बडम्बरः ॥२८॥
फणीन्द्ररत्नाश्रितमेचकद्युतामिदं न ते वृन्दमुदेति देहतः ।
नभःकृतावासमपि त्वदस्तडित्वतां कदम्बं कमठाम्बुभृज्जयात् ॥२९॥
यमीष्टसिद्धेर्गृहमिन्द्रनीलजं न ते विनीलाङ्गरुचामयं चयः ।
इदं त्वया किन्तु वियन्नखच्छविच्छलात् स्वतेजःप्रसराय कल्पितम् ॥३०॥
विभाति भोगीन्द्रफणामणिप्रभा क्षमाभृतामीश ! न ते शिरस्यसौ ।
अपि त्वयं सिद्धिवधूविभूषणोपयोगभूर्गैरिकधातुसञ्चयम् ॥३१॥

गगनपुलिनप्रेङ्खज्ज्योतिर्नखोत्करतारका
तव तनुरियं श्यामा वामातनूद्भव ! भासते ।
शुचिरदरुचिर्नैषा व्याख्याविधाविह केवला-
ऽभिनवशशिनः सच्चक्राणा मुदेऽपि तु कौमुदी ॥३२॥

[ ५१ ]

## श्रीपार्श्वनाथस्य ।

# अर्थान्तरन्यासद्वात्रिंशिका

धर्मार्थकामात्मकमीश ! ते गिरा निर्बाधमर्थत्रितयं प्रसाधयन् ।
अर्थान्तरन्यासविधिं समीहते सोऽयं जनस्तावकभूमिकातिथिः ॥१॥
संस्तुतौ तव जिनेश ! नेशते तेऽपि वन्ध्यधिषणाः पुरन्दराः ।
तत्र सादरमतिस्तदप्यहं कोऽपि वा स्खलति नो मनोरथः ॥२॥
अश्वसेनतनुभूः स भूयते यः स्वयं फणिफणोष्णवारणम् ।
बिभ्रदन्तमनयज्जगत्त्रयी तापमद्भुतगुणा हि सज्जनाः ॥३॥
येन काञ्चनगिरौ विनिर्ममे शासनोन्नतिवधूकरग्रहः ।
युक्तमेतदथवा कुमारतां बिभ्रतां खलु भुजङ्गसङ्गिनाम् ॥४॥
रक्षितो विषधरः कृपालुना येन तापसहुतासविह्वलः ।
आपदं गतवति द्विजिह्वकेऽप्युत्तमाः स्युरुपकारतत्पराः ॥५॥
यत्प्रसादमुदितस्तदा फणी प्राप नागनगराधिराजताम् ।
उत्तमेषु नियमेन रागिणां सम्पदः करतले गतापदः ॥६॥

यश्चकार करुणाचणं मनो दुर्गतिं स कमठस्तदप्यगात् ।
सज्जनेषु सहनेष्वपि ध्रुवं दुष्कृतेन पतयालवः खलाः ॥७॥
यो वितृष्णहृदयः प्रकाशयन् पीतशान्तरससुस्थतां स्वयम् ।
देहिनां भववनभ्रमक्लमं चिक्षिपे चरितमद्भुतं सताम् ॥८॥
येन वाञ्छितफलैः समन्ततो दर्शनान्तरजुषोऽपि योजिताः ।
अत्युदारचरितोज्ज्वलात्मनां नास्ति वा स्वपरयोरिहान्तरम् ॥९॥
येन तैः स्वचरितैरलित्विषा सौरभं किमपि हेमभूभृतः ।
ख्याप्यते प्रगटमेव किन्तु तद् यन्न शक्यमिह वा कलावताम्॥१०॥
यः कषायकलुषाभिषङ्गिनां क्षालयन् गलितरागसङ्गतिः ।
मुक्तिरक्तहृदयश्चिरं बभौ को नु वेत्ति चरितं महात्मनाम् ? ॥११॥
तत्त्वपावन ! मुनीश ! दर्शनाद्धन्तिजन्मनि मनस्यबोधि याः ।
सङ्गमाद्धि महतां महात्मनां चित्कला कलति किं कुतूहलम् ॥१२॥
रागिणां किल रसायनं तनूद्वर्त्तनं तदपि यस्य जायते ।
सर्वमेव जगतां हिताय वा कल्पते परमसिद्धिशालिनाम् ॥१३॥
याच्ञया भवतु सन्तनोति यश्चित्त एव नहि तं समीहितम् ।
लाघवाय यदमुष्य लङ्घनं कोऽपि हन्त महतां महाग्रहः ? ॥१४॥
मौलिमण्डलविलासमण्डनं दर्शयन् शतिफणीशमुत्फणम् ।
सन्तनोत्यहिभयज्वरक्षयं चित्रमेव चरितं महात्मनाम् ॥ १६ ॥
वर्त्तमानमपि भूतभावि वा दूरवर्त्त्यपि समीपवर्त्ति वा ।
योऽवलोकयति विश्ववल्गितं क्वापि दृष्टिरपरैव योगिनाम् ॥ १६ ॥
एक एव जगतां मनस्सु यः कृष्णमूर्त्तिरवदातपुण्यभूः ।
भोगिकेतुभिरगम्यविग्रहो योगिनो हि विपरीतवृत्तयः ॥ १७ ॥

यः स्वयं दधदनश्वरात्मतामिष्टसिद्धिघटनामिषुः सताम् ।
अध्युवास कनकाद्रिचूलिकां शैलवासरतयो हि योगिनः ॥ १८ ॥
नेत्रयोः प्रणयितामुपेत्य यः सज्जकज्जलसगोत्रगात्रकः ।
दृष्टिमाशु तनुते निरञ्जनां सृष्टिरेव हि नवा महात्मनाम् ॥ १९ ॥
यस्य न स्खलति तत् कचिन्महः स्फूर्जितं नृपशतैर्नतात्मनः ।
सौजसः स्फुटमधृष्यतेजसः स्युर्यतः शिरसि दुर्गशालिनः ॥ २० ॥
बिभ्रता भृशमताड्यजीवतां येन धर्मकलयात्र दुष्कलौ ।
आन्तरारिविजयः कृतः सतां चातुरी जयति काचिदद्भुता ॥२१॥
निर्व्यपेक्षहृदयो दयानिधिः कल्पयत्युपकृतिं जनेषु यः ।
कारणेन किल योपकारिता सा हि नूनमथवा स्वविक्रयः ॥ २२ ॥
आग्रहो जनयितुं प्रभावतां यस्य काञ्चन कलामुपेयुषः ।
इन्दुसुन्दरयशःफलेग्रहिर्निर्वृतिं दिशति वा स्थितिः सताम् ॥ २३ ॥
यं प्रभुं समधिगम्य धारयत्युच्चकैः कनकभूधरः शिरः ।
कः क्षितौ सकलकाङ्क्षितप्रदं प्राप्य रत्नमथवा न दृप्यति ? ॥२४॥
यत्पदप्रणयिनां नृणामगुः सिद्धिपद्धतिमहो मनोरथाः ।
येन गौरवभृतामुपासनं कामधुक्सुरभितो न भिद्यते ॥ २५ ॥
यस्य रूपमनघं परं किमप्यस्ति कः कलयितुं प्रगल्भधीः ।
एवमेव सकलातिवर्त्ति वा वृत्तमद्भुतरसाय कल्पते ॥ २६ ॥
यः सुवर्णगिरिविस्फुरत्यदस्तत्प्रकाशयति वृत्तमात्मनः ।
कस्य गोप्रकटितप्रभावतः श्लोकसिद्धिरुदयं न याति वा ? ॥ २७ ॥
भारतीं यदुपदेशपेशलामर्थसिद्धिमनुधावति ध्रुवम् ।
काञ्चनाचलकलामुपेयुषां सिद्धयो हि वृषलीसमाः सताम् ॥ २८ ॥

कालकूटमपि सत्यमुत्कटं यत्प्रभाववशतः सुधायते ।
विश्ववल्गदघमृत्युहारिणो नेदमद्भुतममुष्य वा प्रभोः ॥ २९ ॥
येन सान्द्रकरुणार्द्रचेतसा वैभवाभ्युदयभङ्गिसङ्गिना ।
उद्धृतं विपदुदन्वतो जगद् विश्वदुर्गतिहृतः श्रियः सताम् ॥ ३० ॥
यस्य संस्मरणमीक्षणं गुणोत्कीर्त्तनं स्नपनमर्चनं च तत् ।
पूरयत्यसुमतां मनोरथान् किं न वा भगवतः शुभावहम् ? ॥ ३१ ॥

एवं विशेषकमवाप्य जिनं सुवृत्त–
कार्त्तस्वरक्षितिभृताखिललोकलक्ष्मीः ।
त्यक्तान्यवीक्षणरसा विदधे क्षणेन
क्षोभावहो भवति वा तिलकप्रयोगः ॥ ३२ ॥

---

[ ५२ ]

## पार्श्वनाथस्य

# व्यतिरेकद्वात्रिंशिका ।

यदिह देवकदम्बकतः स्वकैर्गुणगणैस्त्वमसि व्यतिरेकभूः ।
तदवतंसितशारदया दयानिलय ! तत्प्रयतोऽस्मि तव स्तवे ॥ १ ॥
स भवताद् भवतां भवतान्तिहृद् भुजगभूषणभूः परमेश्वरः ।
जगति पूरितकाममहोत्सवः कनकसानुगतो नवशङ्करः ॥ २ ॥
स्फुटसुदर्शननन्दकविक्रमः सकलविश्वनिषेव्यमहोदरः ।
इह बभौ भुवि यः पुरुषोत्तमः कमठकीर्त्तिसहस्तु न केवलम् ॥ ३ ॥

अकृत तल्लवनाश्रयि कर्म यः स्फुटमपातकपङ्ककलङ्कितः ।
त्रिजगदुद्धरणोद्धुरया धुग नववराहतया विदितः क्षितौ ॥ ४ ॥
परमहंसमनोहरविग्रहः शुचिचतुर्वदनः कमलालयः ।
समधितिष्ठति यः परमेष्ठितां वहति नैव तु वेदसमुन्नतिम् ॥५॥
हरिमनोहरचित्रचरित्रभूर्जगति बिभ्रदनन्त इति श्रुतिम् ।
भजति यः कलितं बलडम्बरं कमपि नैष तु काममपालयन् ॥ ६ ॥
परशुभासितनीलतनुद्युतिश्चरणसंश्रयसाधुवृषस्थितिः ।
वहति विघ्नविनायकतां परं सकलनागशिराः खलु यः श्रुतः ॥७॥
असमशक्तिरनङ्गशरज्वरानुपहतः स्फुटपावकजन्मभृत ।
जगति योऽत्र बभार कुमारतामयमहो स्वयमेव तु तारकः ॥ ८ ॥
क्षणविनश्वरविश्वमयीं स्थितिं व्यवहरन् विदितः खलु मारजित ।
भजति बुद्धकलां स्वयमेव यः प्रथयति स्म पुनर्न निरात्मताम्॥९॥
जितमनस्कतया सुसमाधितां दधदपि प्रथयन् वपुषः क्षयम् ।
परमयोगरहस्यनिवासभूरितरनाथविलक्षण एव यः ॥ १० ॥
निखिलविश्वगशाश्वतरूपभृन्निजगुणोद्यतशब्दमनोहरः ।
भजति काञ्चन योऽभिनवाम्बरश्रियमनश्वरतारकशीतगुः ॥ ११ ॥
अनुपलभ्यखमण्डलडम्बरः सकलतारकवैभवभासुरः ।
य इह क्रमकलानिधिकौशलो नवमहः स्फुरितं तुलयत्यलम् ॥१२॥
न कमलं विकचं कुरुते गवां व्यतिकरैर्विकिरंस्तमसस्ततिम् ।
मुदितकौशिकसंश्रितपादतां वहति योऽत्र नवीनदिवाकरः ॥ १३ ॥
न वियति स्थितिबन्धितमादधे न खलु कैरवबोधकृदक्षि यः ।
क्षणदयाधिगतप्रणयो नवामृतकरः कलिताभ्युदयो नवः ॥ १४ ॥

प्रमदयन्नमृतेन कृताञ्जलीन् गततृषः शिखरिश्रियमावहन् ।
अकलुषः कमठाम्बुदवृष्टिभिस्त्वभिनवः किल यः कमलाकरः ॥१५॥
प्रकटयन्नवनस्थितिपाटवं भुवि कलां कलयन्निह हारिणीम् ।
सकलकामसमुद्भवसौहृदः श्रयति यो नवकेसरिणः श्रियम् ॥१६॥
दधदहो विबुधाश्रितपादतां भुजगराजिविराजितमौलिताम् ।
किमपि यः स्वगुणैर्भुवनाद्भुतैर्दिविषदामचलाददतिरिच्यते ॥ १७ ॥
सुमनसामधिगम्य तयाऽत्र यः श्रयति नन्दनतां कमलाचले ।
परमयं शतधारिभिदेलिमाद्भुतमहाबलवैभवशोभितः ॥ १८ ॥
विबुधकुञ्जरतां विततान यः कनकसानुमति स्थितिमाश्रितः ।
विजयिनागकृतोच्चरणः परं शितितनुः सततं विमदोदयः ॥ १९ ॥
शिरसि बिभ्रदहीन्द्रनिभाज्जटापटलमिष्टफलस्फुटपादभृत् ॥
तनुकलां कलयन्नभसः सखीमभिनवः खलु यः सुरपादपः ॥ २० ॥
भुवनतापकृदक्षणिकोन्नतिर्भुवि विकीर्णरजाक्षतकन्दलः ।
अपर एव विनीलघनद्युतिर्य इह भाति गिरौ विहितस्थितिः ॥२१॥
अहरसत्कवृषोदयमादधद् भृशमरालवयो (?) नुदयन्मदः ।
वहति मानसमप्यजलाशयं स्फटिकशैलयशा नव एव यः ॥ २२ ॥
असमरत्नजिघृक्षुजनं नयन्नहह कन्दरमीरितदुर्गतिः ।
वहति सद्गुणरोहणतां परं य इह नागवरश्रियमाश्रयत् ॥ २३ ॥
निजशिरस्यहिमक्षयमावहन्नपि निवर्त्तितवेपथुरङ्गिनाम् ।
य इह नव्यशिवोदयकृद्गिरीश्वरतया जगति स्पृशति प्रथाम् ॥ २४ ॥
स्फुरदगस्तिमिताद्भुतवैभवः परमशङ्खगणेन च न श्रितः ।
कमठभृङ्गभृदस्खलितक्षमस्त्वजनि यो नव एव महोदधिः २५ ॥

प्रगुणनायकतां स्वयमेव तां दधदशेषितदुष्कृतवैकृतः ।
सकललोकशिरःकृतसंश्रयः श्रयति यो नवमौक्तिकयष्टिताम् ॥ २६ ॥
न धरणीसुविरागमुपैति यः किल नवालिसमोन्नतविग्रहः ।
अरिपुरीत्यधिकं प्रमनःस्थितिः प्रकटयत्यहरीशमहोबलम् ॥ २७ ॥
न चरणाश्रयणं भरतो दधौ स्फुरति किञ्चन रौरवनिग्रहम् ।
मनसि यस्य गुरुश्च नगाधिभूर्वसति नूतनरागकलाश्रितः ॥२९॥ युग्मम्
विषमहारि विजृम्भितमीयुषः श्रवणवीक्षणतुल्यलसद्दृशः ।
फणपतेर्न च यस्य कलान्तरं किमपि भोगपरित्यजनं विना ॥२९॥
शुचिदशाश्रयदीप्रमहोदयः कुशलभासितसन्ततनामभृत् ।
दधदजस्रनिरञ्जनतां न यः स्फुरति कोऽपि नवः खलु दीपकः ॥३०॥
जगति पूर्वविधेर्विनियोगजं विधिनतान्ध्यगलत्तनुतादिकम् ।
सकलमेव विलुप्यति यः क्षणादभिनवः शिवसृष्टकरः सताम् ॥३१॥

इत्थङ्कारमकारणैकसुहृदं विश्वस्य पार्श्वं जिनं
तं स्तोतुस्त्रिजगद्विलक्षणगुणग्रामाभिरामाकृतिम् ।
यः कश्चिद्विकचीबभूव बत मे भाग्यातिरेकस्ततः
स्तल्लोकव्यतिरिक्तमुक्तियुवतिप्रेमप्रमोदोत्सवः ॥ ३२ ॥

[ ५३ ]

## श्रीमुनिसुव्रतदेवस्तवः ।

देवस्तनोतु हरितोत्पलकोशकान्तिः
शान्तिं श्रियं च परमां मुनिसुव्रतो वः ।

यस्य क्रमाम्बुरुहमुद्गतचक्रचाप-
माश्रित्य कर्म्मजयिनः कति नाम नाऽऽसन् ? ॥ १ ॥
श्लाघ्यान्तरस्य विरहेण गिरां कवीन्द्राः
स्तोत्रणि ते जिन ! गृणन्ति शिवावहानि ।
यस्मात् तव स्तवनसम्भविना महिम्ना
प्राप्तिः शिवस्य कृतिनां कियती फलाप्तिः ॥ २ ॥
तेषां गिरः खलु गिरः कविचक्रवाले
ते नाम बिभ्रति यशःकुसुमावतंसम् ।
येषां मुखाम्बुरुहमञ्चति वास्तवाय
वाग्देवता भगवती भवतः स्तवाय ॥ ३ ॥
ये त्वां स्तुवन्ति परदूषणघोषणाभि-
स्ते जाड्यकश्मलदृशः परमार्थवन्ध्याः ।
एषापि कापि विपणिर्ननु मूढतायाः
सत्तां यदन्यविषयां सहतेऽन्तरात्मा ॥ ४ ॥
तस्मै नमः सकलकालशिरोवतंस-
लक्ष्मीगृहाय समयाय महोदयाय ।
यत्र त्रिलोकविभवप्रभवैकमित्रे
चेतस्तवाङ्घ्रिप्रक्रमलोत्सुकमाविरस्ति ॥ ५ ॥
श्रेयो निमित्तमपि ये गृहमेधिनोऽपि
धावन्ति वैभवभराय धनोद्भवाय ।
निःसङ्गतैकशरणानि पदं शरण्य !
स्वप्नेऽपि तेषु कृतवन्ति न ते वचांसि ॥ ६ ॥

अस्मासु दुःस्थितशिरोमणिषु प्ररूढ–
श्रद्धाकणेषु करुणा तव तन्न चित्रम् ।
श्रद्धानवन्ध्यमनसः पशवोऽपि येनाऽऽ–
कृष्टाः स्वयं भगवता भवसिन्धुमध्यात् ॥ ७ ॥

लक्ष्मीः प्रणश्यति चिरं सरुजो भवन्ति
नीचैरपि प्रसभमीश ! तिरस्क्रियन्ते ।
त्वद्वाक्यतत्त्वपरिबोधसुधापराञ्चः
कां कां न नाथ ! विपदं कलयन्ति लोकाः ॥ ८ ॥

किं तैः श्रुतं किमवधारितमार्यकार्य–
वन्ध्येषु किं परिणतं च महेश ! तेषु ।
वाचस्तवापि निशमय्य शमैकरूपा
लोकद्वयद्विषि विकर्मणि ये रमन्ते ॥ ९ ॥

कारुण्यमावह शरण्य ! कृपास्पदेषु
किं देवदेव ! तव दृष्टिरियं पराची ।
तैस्तैर्जगत्त्रयजयः क्षतपुण्यपापै–
स्ते सन्तु सङ्कटतमाः शिवभूमिभागाः ॥ १० ॥

भूमीभुजां त्रिदशभूमिभुजां च कुन्द–
कोशावदातमहसः ककुभां मुखेषु ।
खेलन्ति याः सपदि कीर्तिकुरङ्गनेत्रा–
स्तास्ते पदाम्बुरुहभक्तिवधूभुजिष्याः ॥ ११ ॥

किं कौतुकं नवसुधामधुरैर्यदीश !
सूक्तैस्तवापि परितप्यति कोऽपि पाप्मा ।

वाताधिकास्तनुभृतो हि घनागमेन
विश्वोपकारिपयसापि वहन्ति पीडाम् ॥ १२ ॥
तान्यद्भुतान्यहरहः प्रविलोक्य पूर्वं
सद्दृष्टयो जिन ! भवन्तु न तत्र चित्रम् ।
अस्मादृशः खलु कुतूहलधाम योऽय-
मप्रेक्षिताद्भुतलवोऽपि यथार्थदृष्टिः ॥ १३ ॥
प्राप्तः कथञ्चिदपि तावदयं तवाध्वा
श्रद्धालुतत्त्वमिदमस्ति मनोऽपि सम्यक् ।
तं किञ्चिदप्यथ पृथुं प्रथय प्रसादं
येन क्रियास्वपि भवत्यमलासु वृत्तिः ॥ १४ ॥
कालाय विश्वमहिताय नमोऽस्तु तस्मै
तेभ्यस्त्रिधास्मि विनतः सततं जनेभ्यः ।
यामैश्चतुर्भिरुपदेशगिरोऽभिवर्षन्
यत्रासि यैर्जिन ! कृतो निजनेत्रपात्रम् ॥ १५ ॥
मार्गान्तरप्रणयवासितचेतसोऽपि
स्वर्गौकसां चिरमुपासत एव लक्ष्मीम् ।
तत्किञ्चिदस्ति मितपुण्यमपास्तपापं
स्थानं तु नेतुमलमेष तवैव पन्थाः ॥ १६ ॥
ताः सम्पदोऽपि विपदः खलु यास्त्वदुक्त-
सूक्ताञ्जनामृतदृशां सुखयन्ति चेतः ।
श्लेष्मज्वरार्त्तवपुषां शिशिराम्बुपान-
स्वास्थ्यस्य जीवितविहारपरो विपाकः ॥ १७ ॥

तस्याग्रतो बहुतृणं त्रिदशेश्वरोऽपि
यद्बाल्यमेतदखिलं भुवनं लघीयः ।
अर्वाणमध्वनि नियोजयितुं यमेष
श्रीसुव्रतो जिनपतिः स्वयमाजगाम ॥ १८ ॥

कृत्येऽपि केषु निरताः खलचेतसोऽपि
शुद्धाशया अपि चरन्ति च केऽथ कृत्यम् ।
तेषामगम्यपरलोकफलोदयानां
देवः परं फलयितुं चतुरो विपाकम् ॥ १९ ॥

क्लेशाविलेषु नरकैकनिबन्धनेषु
किं कुर्महे कलुषकर्मसु याति चेतः ।
न त्वेव देव ! परमं प्रशमाश्रितासु
निर्वाणहेतुषु मनागपि सत्क्रियासु ॥ २० ॥

कृत्येषु नन्दति विषीदति विक्रियासु
श्रद्धां दधाति विजहात्यपथं स एव ।
श्रीदेवसुव्रत ! य एव विकाशिकुन्द–
कोशत्विषां तव दशां ललितैः पवित्रः ॥ २१ ॥

आजन्मरोगिषु पराभवसारभाव–
पीडावृथाकृतसमस्तगुणोदयेषु ।
अस्मादृशेषु परदास्यनियन्त्रितेषु
काञ्चिद्दिशं विमृश सुव्रतदेवदेव ! ॥ २२ ॥

स्तुतयः शतशः पुरा कृताः
कविभिः सन्ति महद्भिरद्भुताः ।

तदिदं तु निजस्य जन्मनः
सुखवन्ध्यत्वनिवेदना परम् ॥ २३ ॥
नितरामतराम चन्द्रकीर्त्ते !
भवजलधिं न विना तव प्रसादात् ।
प्रथय जिन ! ततस्तथा प्रसादं
सफलमनोरथवीथयो यथा स्मः ॥ २४ ॥

[ ५४ ]

## श्रीनेमिजिनस्तवः ।

यदुकुलतिलकः समृद्धलक्ष्मीर्नरकनिरोधविधानबद्धकक्षः ।
जगतां धृतशङ्खचक्रपाणिर्दिशतु जिनः पुरुषोत्तमः शिवानि ॥१॥
स कविः खलु वास्तवं चरित्रं तव परिकीर्त्तयितुं कृताग्रहो यः ।
धिक् तांस्तु नरेन्द्रचन्द्रयोषिच्चरितमवास्तवमेव ये स्तुवन्ति ॥२॥
समयोऽथ न पारभेदसङ्गी मतिसौहत्यकृते महामतीनाम् ।
इतरेषु रहः पुनस्तवेदं निखिलप्राणिगणेन नित्यमैत्री ॥ ३ ॥
समता कुत एव ते सहान्यैरुत्कर्षेऽपि मनांस्यपत्रपन्ते ।
यमिनां मृतपाद गुणाधिकत्वे महिमा कः कथिते प्रशंसितोऽस्तु ॥४॥
न तमांसि न वा रजांसि दृष्टिं पुरुषस्यप्रभवन्ति तस्य रोद्धुम् ।
अनिशं खलु शासनाञ्जनं ते सविधे यस्य विजृम्भते जिनेश ! ॥५॥
परपरिभावदीनदीक्षितेषु क्षितिनाथेषु यथार्थिनो भवन्ति ।
भवति यदि तथा भवेयुरस्मिन् किमसुलभं भुवने तदास्तु वस्तु ॥६॥
न तपो न जपो न संवरो वा भवनाशाय विना त्वदुक्तमन्त्रात् ।
प्रगुणेष्वविशेषकारणेषु प्रसवति बीजमुपास्य नाम्बुसेकम् ॥७॥

करणोपचयो भवच्छिदायै स च साम्येन तदेतदात्मवश्यम् ।
किमियत्यपि मुक्तिकार्मणेऽसौ भवदुक्ते भवति द्विषां विमोहः ॥८॥
उभयोरपि योग्यतापवर्गं प्रति पुरुषस्य सुमेधसः स्त्रियाश्च ।
वपुरन्नमयं च योगभाजामपि तव सैष मुदे न कस्य पन्थाः ॥ ९ ॥
**खलमनसो** यदि मादृशोऽमी तदपि तवोचितमौचितुं विधातुम् ।
विजनेषु महीधरेषु गुर्वीं सलिलमुचो रचयन्ति किं न वृष्टिम् ॥१०॥
त्वयि मयि न नाम कोऽपि भेदो यदि कृपां कुरुषे कृपास्पदेषु ।
सवितुर्ग्रहचन्द्रतारकाभ्यो भुवनविकासविलासतो विशेषः ॥११॥
व्रतमसिनिशितं चिरं दधानेष्वपि विकृतिं क्वचिदीश ! वीक्ष्य काञ्चित् ।
दिशतस्तव मूलनाशमन्ये कथय कथं तु कृपालुतां स्तुवीरन् ॥१२॥
परिणाममशेषजन्तुवाचां दधदखिलान् सह संशयांश्च भिन्दन् ।
नहि केवलमेव केवलं ते वचनमपीश्वर ! केवलं तदेवम् ॥ १३ ॥
विभवलवमदान्धनेत्रपात्रैरवगणितां क्वचिदर्थितां वहन्तः ।
तव वचनपवित्रताविरागं दधति वहन्त्यपरेऽपि रोषमुच्चैः ॥१४॥
धिक् तानि हहा पितंश्च तेषां ये भवतोऽपि विगाह्य तत्त्वसिन्धुम् ।
घननिगडविशृङ्खलाङ्घ्रिपातं गगननिवेशितनेत्रमर्थयन्ते ॥ १५ ॥
विरचितगुरुकर्मवर्मभेदे निरवधिशर्मणि शाश्वतावलोके ।
श्रद्धा यदि जन्मकोटिलक्षैरपि भवति त्वयि किं न नाम लब्धम् ॥१६॥
पवनः खलु पावनो जडोऽपि द्विषतस्त्वां विबुधादपि ध्रुवं सः ।
सततं तव यः पदाब्जपीठीमनुकूलत्वमुपेयिवानुपास्ते ॥ १७ ॥
विभवैः समयप्रभावकत्वादपि हृदयेन्द्रियसंवरो वरीयान् ।
तदिदं तव तत्त्वसूत्रकत्वं द्विषमपि कन्न चिरं चमत्करोति ॥ १८ ॥

शक्तिर्यदि मानसं विजेतुं किमखिलदुःखगृहस्थचिन्तनेन ।
जनकजनककर्मणो वचोभिः किमिह परैर्विभवार्जनावबोधैः ॥ १९ ॥
प्रवचनपरिधारिणोऽप्यमी ये विदधति कर्मसु तामसेषु वृत्तिम् ।
खलु तेषु बहिश्चरित्रमुख्यः सुगतिमपोहत एव ते निदेशः ॥ २० ॥
निवसति स जडेषु या न नाम श्रीलोलेषु दधाति नास्पदं च ।
शिवभूमीसखीं विना न सा श्रीः पदयुगली तव लभ्यते महद्भिः ॥ २१ ॥
विसदृशमपि भावजातमेतद् युगपदशेषविशेषमीश ! बिभ्रत् ।
समवसृतिमही च शासनं च द्वयमपि सोदरतां ध्रुवं ददाति ॥ २२ ॥
मयि शोकधनी प्रवासनी च प्रभवपराभवभारविक्लवस्य ।
भवति खलु जनस्य सौममस्यं तव वचनामृतविप्रुषां निषेकैः ॥ २३ ॥

अवर्त्मनि वचःपतेरपि गिरामसौ मादृशां
मलीमसदृशां ध्रुवं त्वयि क एव देवस्तव ।
तथापि सफलो मम स्तवनसम्भवोऽयं श्रमः
फलन्ति नहि देवताः किमुत भावनाः स्वाः सताम् ॥ २४ ॥

---

[ ५५ ]

उपमाभिः

## जिनस्तुतिद्वात्रिंशिका ।

---

आस्तां समस्तभुवनेष्वपि नोपमा ते
स्तुत्यै पुनर्जिनपते ! प्रयतस्तयास्मि ।
उद्दामदामरचना मम तत्त्वपुष्पैः
सैषा न साध्यमिह वा तव किं महिम्नः ॥ १ ॥

नीलोत्पलासितवपुर्विपुलप्रसर्पद्ध्यानानलः प्रदहताद्दुरितानि देवः ।
यस्मिन्नकुण्ठकमठाभ्रभुवा तदानीं तप्तायसीव पयसां प्रलयः प्रपेदे ॥२॥
वैरोचनेन रचितं दनुजेन्द्रजैत्रे तन्निग्रहोद्यतमताविव भूमिदानम् ।
तज्जीवनं खलु वृथा कमठेन वृष्टं यस्मिन्नभीष्टघटनाय जिनः स वोऽस्तु ॥
आप्लाविते जगति मेघजलैरपारकासारतां वसुमतीवलये प्रपन्ने ।
यन्मूर्त्तिराप तुलनां नलिनीवनस्य वामाङ्गजः स जगतां मुदमादधातु ॥
येनाधरीकृतलसत्कमठप्रतिष्ठामुच्चैः क्षमां गुरुतमां दधता तदानीम् ।
काचित् कुलाचलकला कलयाम्बभूवे भूयादमेयमहिमा स विभूतये वः ॥
पार्श्वस्य जन्ममहमज्जनजागरूकास्ताः पान्तु दुग्धजलधेर्जलविप्लुषो वः ।
गात्रे प्रभोः पुटकिनीदलवालमित्रे मुक्ताप्र....करकान्तिमुपासते यः ॥६॥
भूत्यै वपुर्भवतु वा भुजगध्वजस्य विश्वश्रियो मरकतोद्भवकुट्टिमाभम् ।
यत्र प्रवालसखपाणिनखांशुजालं संलग्नतच्चरणयावकवच्चकास्ति ॥ ७ ॥
उत्तप्तजात्यतपनीयविनिद्रभद्रपीठप्रतिष्ठितविनीलतनुः सभायाम् ।
चामीकराद्रिशिखरस्थितनीलरत्नसापत्नकं दधदयं जयताज्जिनेन्द्रः ॥८॥
आकर्ण्य गर्जिमिव यस्य गिरं गभीरां सानन्दमुद्भिदुरपुण्यकलापभाग्भिः ।
जज्ञे शिखण्डिभिरिवाङ्गभृतां मनोभिः पाथोदसोदरतनुः स मुदेऽस्तु देवः ॥
व्योम्नः सखी तनुमयूखसखी सुखाय श्रीअश्वसेनकुलसिन्धुकलानिधेर्वः ।
व्याख्याविधौ दशनदीधितिरुज्जिहाना ज्योत्स्नेव यत्र किल निर्वृत्तये न कस्य ॥
उत्कर्षिपार्षदमहर्षिजनापनिद्रज्योतिर्मयान्तरदृशः सततप्रकाशैः ।
सिद्धाञ्जनस्वजनतां जिनपार्श्वभर्त्तुर्व्यातन्वती तनुरुचिस्तनुतां श्रियं वः ॥
संसारसिन्धुकुहरे हरिसैन्यलक्ष्मीसम्पादकः सुमनसाममृतप्रदाता ।
मन्थाचलेन्द्रतुलनां कलयन्नजस्रं जीयाद् भुजङ्गपतिविभ्रमभृज्जिनेशः ॥

पार्श्वप्रभोः परिलसत्पुरतस्तमांसि तद्धर्मचक्रमचिरान्मुकुलीकरोतु ।
प्राच्याचलेन्द्रशिखरस्य पुरस्सरं यद् बिम्बं विडम्बयति वारिजबान्धवस्य ॥
सम्यक्त्वरत्नविभवं जिनपुङ्गवो वः कालोदसोदरवपुर्विपुलीकरोतु ।
यस्मिन्नशोकदलपाटलपाणिजांशुजालं प्रवालवनविभ्रममाबिभर्त्ति ॥१४॥
कुर्यादुदञ्चदहिरत्नमहास्तडित्वदम्भोद....वथुमेष कथावशेषम् ।
यस्योन्नतिर्भुवि न कस्य समस्तकामवल्लीः सपल्लवभराभरणाः करोति ॥
बिभ्रत् क्षमां स नरकक्षयबद्धकक्षः पायाद्दलत्कुवलयद्युतिभृज्जिनो यः ।
रत्नत्रयीतिलकितां स्वतनुं दधानः प्रादुश्चकार करणिं पुरुषोत्तमस्य ॥
पुन्नागभङ्गिसुभगालिविनीलमूर्त्तिरुत्तुङ्गभूरिशिखरश्रियमादधानः ।
भूयादशोकतरुभूषितभूमिभागः श्रीमान् वसन्त इव सम्भृतसिद्धिरागः॥
व्याक्रोशमेचककुशेशयकाननश्रीर्वामाङ्गभूर्जिनपतिर्जगतीं पुनातु ।
उन्मीलदुत्पलदलद्युतिमेति यस्मिन्नालायितस्ववपुषः फणिनः फणाली ॥१८
विश्वं पवित्रयतु पार्श्वजिनः स यस्य चन्द्रोत्पलः कतकचूर्ण इवोपदेशः ।
अन्हाय निर्मलयति स्म रजःप्रशान्तिं सम्पाद्य कस्य हृदयं न जलाशयस्य॥
देवः स दूरयतु वो दुरितोपतापं विन्ध्यावनिध्र इव सम्भृतभद्रयूथः ।
देवेव यद्वपुरुदञ्चिमरीचिमालाव्यालोकनादपि जनं परितः पुनीतौ ( ते )॥
देवः सदा सिततनुः सुमनोजनानां पौरन्दरद्विरदवत् प्रमदं प्रदत्ताम् ।
स्वर्णाचले कलयति स्म कलां यदीयालानस्य मन्दिरमदः साहिरण्यकुम्भम्॥
निस्सीमनिःसमतमप्रशमैकसौख्यसख्यं स जागरयतादिह वीतरागः ।
लाक्षेव यस्य हृदि तत्क्षणमिध्यमानध्यानानले विलयमाप विलासचापः ॥
रत्नैकदीपक इवाखिलविश्वकेलिवेश्मोदरे स्फुरति यः सततप्रकाशः ।
निःस्नेहतां दधददग्धदशोज्ज्वलश्रीः सस्मेरमुक्तिरमणीरतये सतां स्तात् ॥

आशाकरीन्द्रकरणिं दधदश्वसेनगोत्रोद्भवः स भवनीरधितीरधामा।
चातुर्यतश्चरणजाद्दलयन् रजांसि जीयात् क्षमाधरणानित्यधुरीणवृत्तिः ॥२४॥
नीलोत्पलन्ति सुरलोकसदां शिरस्सु भालाङ्गणेषु मृगनाभिविशेषकान्ति ।
प्रोदश्चिकूर्चचिकुरन्ति मुखेषु यस्य पादत्विषः फलतु सैष मनीषितानि ॥
रूपं च रूपमिव यस्य हृदि क्षमा च भाति क्षमेव करुणा करुणेव सा च ।
स्वस्मिन्नसंशयसमासनिजोपमानः पार्श्वः स पार्श्व इव विश्वजनं पुनीताम्
श्रेयोलताः स्तबकितास्तनुतां सदैव कान्तिः कलिङ्गतनयेव यदङ्गयष्टेः ।
तत्त्वोपदेशविकसद्दशनांशुगङ्गासङ्गान्न कस्य कृतिनः शिवमाततान ॥२७॥
वैरायमाणकमठोल्बणदृष्टिसृष्टौ छत्रीभवद्भुजगराजफणासमाजः ।
शालस्तमाल इव बालदलप्ररोहचेतोहरस्थितिररोचत यः स वोऽव्यात् २८
त्रैलोक्यमाङ्गलिकभूप इवेन्द्रनीलप्रोन्मीलदंशुचयमेचकितः स पार्श्वः ।
चूलावलम्बिसहकारलतानुकारप्रोत्फुल्लपन्नगफणः फलतु श्रियं वः ॥२९॥
पायादपायसरितः परितस्तमालबालप्रवालरुचिराङ्गरुचिर्जिनो वः ।
विभ्राजते भवमहाजलधौ जनानां यः सेतुदण्ड इव शैवलजालनीलः ३०
कल्याणभूधरविभूषण ! तीर्थलक्ष्मीमल्लीमयैकमुकुटे शशिशुभ्रधाम्नि ।
कृष्णाभ्रकप्रियसखीं द्युतिमुद्वहन् वस्तीर्थङ्करः सकलमङ्गलकेलयेऽस्तु ॥

जन्मान्धेनाऽमृतकर इव त्वं मया नाथ ! दृष्टो
दुःस्थेन स्वर्विटपिन इव प्रापि ते पादसेवा ।
तन्मे प्रीत्यै भव सुरभिवत् पञ्चमोद्दामगत्या
तन्वानस्य श्रुतिमधुमुचं कोकिलस्येव वाचम् ॥ ३२ ॥



[ ५६ ]

## जिनस्य

# दृष्टान्तगर्भस्तुतिद्वात्रिंशिका ।

दृष्टान्तभूमिः किमिवाऽस्ति वस्तुतो स्वर्भूर्भुवोऽनन्यसमानवैभवम् ।
तेन स्तुतिं कल्पयितुं तथापि यत् प्रागल्भ्यमभ्येमि कला तवैव सा ॥
विश्वेश ! विश्वज्ञ ! तव प्रसादनादैन्यो विशुद्धासु ममात्र का त्रपा ? ।
अभ्युन्नतेऽम्भोमुचि दीनवक्त्रकः किं चातकः कूजति नाऽमृताशया ? ॥
स्वामिन् ! न संसारमिमं दुरुत्तरं मन्दोऽपि मन्ये त्वयि कामवर्षिणि ।
सत्सार्थवाहं प्रतिपद्य हेलया दुःस्थोऽप्यतिक्रामति दा महाटवीम् ॥३॥
श्रीवीतराग ! त्वयि मे प्रभौ सति स्वान्तं क हृत्वा विषयैः स्फुरिष्यते ।
प्रावीण्यपुण्ये पदिकेऽनुगत्वरे किं वा प्रगल्भ्येत सलोप्त्रदस्युभिः? ॥४॥
मीमांस्यमानं जगदीश ! शासनं चेतो हरत्यासुखदुर्गमं तव ।
सञ्चर्व्यमाणो ह्यसकृन्न किं सतां पुष्णाति रागं खदिरः कटुर्मुखे?॥५॥
सन्त्येव देवास्त्वमिह क्षितौ पुनः कल्याणकन्दः सुमनोमनोहरः ।
भूमीभृतस्ते कति नाऽश्मराशयः सैकः परं कश्चन काञ्चनाचलः ॥६॥
शान्तामुदात्तां च जिन ! त्वदाकृतिं दृष्ट्वाऽऽर्द्रतां कः कठिनोपि नो भजेत्? ।
मूर्त्या सुधास्निग्धतनोः कलानिधेर्निःष्यन्दमिन्दोर्दृषदोऽपि बिभ्रते ॥७॥
पादौ तवाऽऽसाद्य गुरो ! क्षमाभृतां विश्वं मनो मे न तृणाय मन्यते ।
उत्तुङ्गधात्रीधरशृङ्गसङ्गतः सर्वं हि खर्वं मनुतेतरां न कः? ॥८॥
त्वद्गोः प्रबन्धे त्रिजगद्धितेऽप्यहो मोहव्यपोहो न भवाभिनन्दिनाम् ।
विश्वप्रकाशव्रतभाजि भास्करे किं मान्द्यमास्कन्दति कन्दरातमः? ॥९॥

ज्योतिर्मयाव्यांजतनौ जिन! त्वयि प्राप्तेऽस्तु दूरे न तु दैवतं परम्।
हस्तस्थितिं बिभ्रति रत्नकङ्कणे किं दर्पणेनाऽर्पितभस्मकान्तिना॥१०॥
यत् किञ्चिदूचुश्चतुरं परेऽप्यसौ देवाधिदेव! प्रभुता तव ध्रुवम्।
सा स्वामिनः कापि किल प्रगल्भता सौभाग्यमायान्त्युपजीविनोऽपि यत्११
दुर्वारभावारिपराबुभूषया निर्मूलितं नाथ! बलान्मनस्त्वया।
आक्रम्य सम्यक्क्षण(?) णे यतः क्षितेः कौतस्कुती स्याद् द्विषतां समुन्नतिः १२
त्वत्पादपद्मद्वयसौरभोर्म्मयः कुर्वन्त्यकल्याणघटाविघट्टनम्।
गन्धे हि वा केसरिणः प्रसृत्वरे स्युः कान्दिशीकाः किमु नाम न द्विपाः?१३
निःकाञ्चनत्वं कलयन्नपि प्रभो! मध्यस्थभावेन मनो धिनोषि नः।
दारिद्र्यमुद्रामुदरं दधतः क्षामोदरीणामधिकं न किं मुदे? ॥१४॥
मूर्तिर्जिनेन्दो! तव दारुणोष्मणः पीयूषवर्षेण पुनाति देहिनः।
ज्वालाजटालांस्तपनोपमान्न किं ज्योत्स्नाम्भसा शीतलयत्यहो शशी १५
श्रेयः फलत्येव महाभयागमक्लान्तात्मनामप्यनुचिन्तनं तथा।
मूढक्षुतानां हि निरीक्षणं क्षणात् किं नाम नामोघमहो रवेर्भवेत् ॥१६॥
सन्त्येव भूयांस्यधिदेवतान्यहो नैतानि तु त्वं जिन! सर्वकामदः।
भूयस्तरैः स्यात् तरुभिः स कल्पितः श्रीस्थूललक्षः किमु कल्पपादपः१७
हित्वा प्रभो! त्वां प्रविजृम्भिवैभवं मुग्धः परं ध्यायति देवतां पराम्।
सन्त्यज्य चिन्ताफलमीप्सितप्रदं सस्याधिदेवीं श्रयते कृषीबलः ॥१८॥
काङ्क्षामि लक्ष्मीमपि नान्यदैवतात् ततः समीहे जिन! दुःस्थतामपि।
स्याद्दुर्जनान्नेह महेभ्यता मुदे दारिद्र्यमुद्रापि शिवाय सज्जनात्॥१९॥
लोकोत्तरः कोऽप्यसि देवदेव! तत् कस्ते महिम्नः कलने प्रगल्भताम्।
को वा दवीयःस्थमहामहीधरोत्सेधं परिच्छेत्तुमतुच्छसाहसः ॥२०॥

प्रौढप्रतापोष्मभृता प्रभो ! त्वया मिथ्यादृशां कापि कला व्यलीयत ।
उद्दामधाम्ना हि निदाघभानुना दीर्घं न नीहारशिलावतिष्ठते ॥२१॥
त्वां देव! सन्त्यज्य कलौ जनोऽन्वगान्मुण्डावलीमण्डनमन्यदैवतम् ।
प्रायो रजःपर्वणि भूतिराजितं के नैव राजानमनुव्रजन्ति वा ॥ २२ ॥
रागो गलत्येव मनोगतः सतां नीरागवैराग्यरसोक्तिभिस्तव ।
विस्रंसमेवाश्रयते यदैन्दवैः शेफालिकानां कुसुमोत्करः करैः ॥ २३ ॥
मौलौ तवाऽयं शमधातुवादिनः फुल्लत्फणास्फारमणीरुचारुणः ।
विश्वस्य कल्याणकृते प्रकल्पते स्यान्नागरङ्गो हि महार्थसिद्धिकृत् ॥२४॥
स्याद्वादमुद्राभ्युदयाद्भुतप्रदं लोकेश्वर ! त्वं नयवादमादिशः ।
न्याय्यस्थितिं बिभ्रति वा प्रजापतौ किं दुर्लभा स्याज्जयवैजयन्तिका ? २५
त्वं पालयस्येव विलीनमत्सरः स्वामिन् ! विपक्षादपि संसृतं जनम् ।
निश्छद्मसद्म प्रणयी महाशयैः पुत्रोऽपि शत्रोरपि रक्ष्यतेऽथवा ॥२६ ॥
कामान् सदा ध्यानवतां फलत्यहो श्रीपार्श्वनामस्मरणादरस्तव ।
यत् सिद्धमन्त्रेण समस्तसिद्धयः प्रादुर्भवन्तीह कुतूहलं न तत् ॥२७॥
त्वद्वीक्षणेन क्षपिते रजस्यहो व्यञ्जन्ति बाष्पं प्रमदस्पृशां दृशः ।
अभ्युद्धृते धूलिभिरेव हन्ति किं न श्रोतसां सैकतभूमयः पयः ॥२८॥
ज्योतिर्मयत्वं हरसे हृदि स्फुरन्नन्हाय मोहं खलु निर्मलात्मनाम् ।
बद्धास्पदो ह्यभ्रकमन्दिरोदरे दीपाङ्कुरः कुड्मलयत्यलं तमः ॥२९॥
उल्लङ्घयत्यापदमाश्रितः सुखं त्वत्पादसेवारसमुस्थमानसः ।
द्वैपं पयः प्राप्य पतिं हि यादसां सांयात्रिकः को न तरत्यनाकुलम् ॥३०॥
कारुण्यपीयूषपयःस्पृशा दृशा सम्भावय त्वं शठमप्यमुं जनम् ।
वात्सल्यताच्छिल्यनिधे! प्रसीद मे न स्यात् कुमाता हि भवेत् कुजातकम् ३१

भवक्लेशावेशाङ्कुश ! विशदलोकंपृणगुण—
कृपासिन्धोरन्यं क इव जिन ! जागर्त्ति भवतः ।
स्फुरद्भीष्मग्रीष्मग्लपितजगतां कालजलदो
विदम्भप्रारम्भः स परमगदङ्कारमहिमा ॥ ३२ ॥

[ ५७ ]

## श्रीयुगादिदेवद्वात्रिंशिका.

युगादिदेवाय युगादियोगिने युगादिराजाय युगादिशिल्पिने ।
अपारसंसारपयोधिसेतवे नमो नमस्ते जिन ! मुक्तिहेतवे ॥ १ ॥
अलोकमाक्रामति यः सलीलया विशीर्णसीमार्गलमेकझम्पया ।
स एव ते वृत्तविशेषवर्णनाविधानसंरम्भपरः परं नरः ॥ २ ॥
बलिं व्रजामः कतिशः स्वयं वयं सुमेधसस्तस्य महेश ! वेधसः ।
भवद्गुणग्रामसमृद्धिशंसिनीं चकार वाणीं विदुषां मुखेषु यः ॥३॥
अजानतां भेदमुषर्बुधांभसोः स्वयं स येषामभवद् भवान् गुरुः ।
अशेषसम्पत्तिविलाससम्पदां त्रिसन्ध्यमेषामहमानतस्त्रिधा ॥ ४ ॥
इमामशेषां प्रविभज्य काश्यपीं यथायथं पुत्रशताय कल्पयन् ।
विधातुकामो विषयोपसंहृतिं व्यधत्त भूम्ना विषयान् कथं भवान्॥५॥
बभूव नैकोऽपि समुद्रमाश्रयन्नमुं प्रचेताश्च्युतपाशवैशसः ।
भवन्तमाराध्य समुद्रशेखरं पुनर्विपाशाः कति न प्रचेतसः ॥ ६ ॥
नमोऽस्तु तस्मै भुवनोपकारिणे मनःप्रयत्नाय यथाप्रवृत्तये ।
सदाऽध्यनासादितत्त्वविप्रुषो यतस्तवोकं स्पृहयन्ति जन्तवः ॥७॥

तपोभिरुग्रैः करणोपरोधनैरकृत्रिमैरादधतस्तव स्थितिम् ।
विपश्चितः के न भवन्ति हेतुना सचेतसोऽपि प्रविलीनचेतसः॥८॥
तमःप्रणष्टामलदृष्टिवर्त्मनि प्रबद्धमिधे (?) प्रभवद्भि कर्मणि ।
रवेरिवोन्मीलितभाववैभवस्तवावतारं जिन ! भारतेऽभवत् ॥९॥
तवांघ्रिसेवारसिकैः कुटुम्बितामिह प्रपन्नैरवनौ सुरासुरैः ।
कृताश्चिरं यामिकमात्रदेहिनो (त) रसातलस्वर्गनिवासिनो ग्रहाः ॥१०॥
अमुं प्रमथ्नन्ति न ये जडाविलं तवाध्वमन्थेन भवोदधिं बुधाः
भवन्ति सर्वेन्द्रियशान्तवेधसो न ते नवीनाऽमृतसम्पदां पदम् ॥११॥
निवासमर्हन्ति न ये महोदधे (?) मलीमसा मुक्तिपुरे वपुःस्पृशः ।
कृता भवग्रामतलेषु ते त्वया विपन्नृपाणां करदाः कुटुम्बिनः ॥१२॥
महांहसां दुर्नयशूरचेतसां विमोहमूर्छालुदृशां च मादृशाम् ।
शरण्य ! को नाम सकर्णमानसो ध्रुवं त्वदन्यः शरणं भवे भवेत् ?॥१३॥
बृहन्न किञ्चिद् गगनाङ्गणात् परं न चाऽपरं मुक्तिपदात् प्रियङ्करम् ।
न बीजमन्यद् व्यसनस्य कामतः परो न कश्चिद् भवतो यथार्थवाक् १४
अहंयवो ये किल रोषतोषजैः परे प्रबन्धै रिपुमित्रवर्द्धिभिः ।
उपासितैस्तैर्मनसापि मादृशाश्चिरं त्रपन्ते तव किङ्करा अपि ॥१५॥
वसुन्धरामश्नुवतां नृपार्चिता भवन्तु शास्त्रैरपि सन्तु विश्रुताः ।
सुखोन्मुखे चेत् पथि सोत्सवाः परे तदा भुजिष्यैस्तव मादृशैर्जितम् १६
अखण्डिताखण्डलवन्दितश्रिया त्वया त्यजन्तः सह साम्यविप्लवम् ।
सुधामयीं तामपि मुक्तिभूमिकां मनीषिणो न स्पृहयन्ति चेतसि॥१७॥
त्रिलोकरक्षाभिरिहाभिमन्त्रितः प्रियङ्कराभिस्तव सूक्तिपङ्क्तिभिः ।
दृढानुबन्धैरपुनर्ग्रहं ग्रहैश्चिरं गृहीतोऽपि न कोऽपि मुच्यते ॥१८॥

व्रतं विहाय स्पृहयन्ति ये श्रियं व्रजन्ति ते पूज्यतमां परे दशाम् ।
त्वया पुनर्देव ! विमुञ्चतां व्रतं स्थितिः प्रक्लृप्ता मलिनानुरूपिणी॥१९॥
तदेव नास्त्यस्ति तदेव चेत्ययं चलाचलस्ते वचनस्य डम्बरः ।
शिवाय कस्याप्यशिवाय कस्यचिन् मुदेऽथ कस्याप्यमुदेऽथ कस्यचित् २०
अमुत्र यत् किञ्चिदचिन्त्यवैभवं सनातनं शर्म न तत्र साक्षिणः ।
इहापि गच्छंस्तव देव ! वर्त्मना भवत्यवाच्यस्य न भाजनं जनः॥२१॥
गुणैकरूपा गमभङ्गशालिनी चकास्ति येयं तव वाक्यवागुरा ।
स एव दूरं विनियन्त्र्यते न या य एव बन्धैरचिराय मुच्यते ॥२२॥
प्रसीद सीदन्तममुं जगज्जनं नियोजय क्वापि महार्थकर्मणि ।
क्षमाभृति त्वय्यपि शासति प्रजामजातदैन्याः कथमीश ! नाङ्गिनः॥
ऋतुक्रियाभिर्विषयोपदेशनां निशम्य वाचो हृदयङ्गमा जनः ।
विरोधिनीर्वैषयिकस्य शर्मणः क एव ते सूक्ष्मगिरोऽनुरुध्यते ॥२४॥
विशृङ्खलैर्योऽमृतपोऽपि लज्जते प्रियाप्रणामप्रमुखैर्विकर्मभिः ।
परां परैस्तैरपि यान्ति पूज्यतामहो विमोहान्धलमानसं जगत् ॥२५ ॥
प्रसादमासाद्य कुतीर्थिनां जनः स लाघवोऽपि ध्रुवमेत्य गौरवम् ।
तव प्रासादा (न्) न पुनर्मुहुर्मुहुः स गौरवोऽप्यञ्चति लाघवं परम् २६
अकल्पवृक्षा विबुधप्ररोहिणी विशीर्णदोषा गुरुराजराजिनी ।
समुत्थितज्योतिरकृष्णवर्त्मिका त्वयि प्रभो ! साग्तभूरभूदियम्॥२७॥
शुभाशुभं बाह्यमथान्तरं भवत्प्रणीतसंवादि विलोकयन्नपि ।
प्रशान्तिवन्ध्यैर्ग्रहिलाभिरुक्तिभिः प्रतार्यते पश्य परैः कथं जनः॥२८॥
सतां न तत् कौतुकमस्तु विप्लुते यदेष भूयांस्तव गौरवोदयः ।
कृपाद्विषः कामजुषः परां परे यदञ्चितिं यान्ति तदेव कौतुकम्॥२९॥

पट्टानि चाट्टानि कियन्ति कुर्महे महेश ! युष्माकमपारसम्पदाम् ।
विना न यः शर्म सतां सदोदयं वचोभिरेभिः किल किं न पूर्यते॥३०॥

विघटय कलुषाणि भुर्भुवःस्वर्घटय घटां शिवसम्पदामपाराम् ।
उपनय गुरुकर्म्ममर्म्मभेदं नय भवभीतिमसम्भवामवस्थाम् ॥३१॥

माहात्म्यं तव परिमातुमीहते यः सख्यातुं जगदणुसञ्चयं स लोलः।
साफल्यं तदपि सुमेधसः स्ववाचामाधातुं विदधति ते गुणप्रशस्तिम्३२

तां पुण्यपापजयिनीं कनकाभिराम-
चन्द्रांशुपुञ्जविशदामधिगम्य भूमिम् ।
आत्यन्तिकीमनुभवामि यथा मुदं मे
श्रीनाभिनन्दन ! तथा प्रथय प्रसादम् ॥ ३३ ॥

श्रीशीलवर्द्धनगणियोग्यं सं. १४९९॥

---

( ५८ ]

# शान्ति--द्वात्रिंशिका.

( अपूर्णा )

सदोदितानन्दमनन्तदर्शनं निरन्तरालोकमशोकविस्मयम् ।
अवैरसौहार्दमपुण्यकल्मषं स्मरामि शान्तिं दुरितोपशान्तये ॥ १ ॥

शुभाशुभान्तःकरणैकसाक्षिणे जगद्विपत्तिप्रतिघातकाङ्क्षिणे ।
यथार्थबोध [ प्रविधान ] वेधसे नमोऽस्तु ते तीर्णभवार्णवाम्भसे॥२॥

क्लमानुविद्धेषु भिदेलिमेषु च स्पृहा कुतो वैषयिकेषु कर्मसु ।
भवद्वचःप्रीतिविलीत (न)चेतसः पदे परेऽपि क्रमशो विराशिषः ॥३॥
यदि प्रभावो व्यसनोपशान्तये विचेतनानामुपलास्थिवीरुधाम् ।
अनश्वरज्ञानमयस्य किं ततो न ते प्रभावः प्रभविष्णुरापदः? ॥४॥
कुतीर्थिनां क्वापि कृतार्चि(र्थि)ता गिरः क्वचित्तु जीवानुविघातपिच्छिलाः।
त्रिलोकलोकाभयदानदीक्षिता जिनेन्द्र ! सर्वत्र तु सूक्तयस्तव ॥५॥
प्रतीपमेतां भवकृत्यनिम्नगां विगाढुमाजीवितवृत्ति यः क्षमः ।
प्रवेशतीव्रामवसानशीतलां स एव वीथीं तव यातुमर्हति ॥ ६ ॥
गिरं परेषां भवतन्त्रसूत्रणीं कृताञ्जलिः को न शृणोति सोत्सवः ।
वचः पुनस्ते भवतन्त्रसूदनं सकामधीरुद्विजते ततस्ततः ॥ ७ ॥
न विस्मयोऽसौ यदमी सुधाभुजो भुजिष्यतां यान्ति नदीष्णचेतसः।
स विस्मयो यद्विनमन्ति ते स्वयं विवेकदुःस्था अपि मेदिनीरुहः॥८॥
विसम्पदो ये सरुजश्च ये परैस्तिरस्कृता ये न च ये सुमेधसः ।
स्मृता न हास्यादपि नाथ ! तैर्भवत्पदद्वयी जातु युगान्तरेष्वपि॥९॥
न कौतुकं यद् भवतोऽपि शासनाद् गानाः पराञ्चो जगदीश ! कोटिशः
गरीयसी सा ननु भाग्यभूमिका यया त्वमीशो भगवानवाप्यसे॥१०॥
महौजसश्चेत् प्रलयप्रसादयोस्तथा सतां काममधीश्वराः परे ।
अशेषतोषः परमार्थदर्शिनां त्वमेव देवः शिवकाङ्क्षिणां पुनः ॥११॥
प्रियाप्रणामश्रमखिन्नमौलयः परे क्व च त्वं क्व च वीतविप्लवः ।
भवन्निरासेन भवेच्छिदर्थिनस्तथापि तान् केचिदुपासते जडाः॥१२॥

---

१ भवच्छिदार्थिनः

महर्द्धयो यस्य विषेण घूर्णिताः स्मरन्त्यकृत्यानि न ते हरादयः ।
अमुष्य कन्दर्प्पसदर्पभोगिनस्त्वमेव नाथ ! ध्रुवमाहितुण्डिकः ॥१३॥
कुटुम्बभाजां विषयार्त्तचेतसां कुतीर्थिनां वृत्तिमवेक्ष्य पेशलाम् ।
जनो जडः स्निह्यति कामकर्मसु क्रियां हि सर्वोऽप्यनुयाति शासितुः १४
ररक्ष पारापतमात्तसाध्वसं यदात्ममांसैर्नृपतिर्भवन् (?) भवान् ।
कृपालुतां ते भुवनेषु घोषयन्नयं न विश्राम्यति कीर्त्ति*डिण्डिमः॥१५॥
त्रिधानिरुद्धाखिलभूतविप्रियाक्रियासु वृत्तिर्यदि नाम दुष्करा ।
हितैषिणो नाथ ! मनीषिणः पथा तथापि ते मुक्तिपुरीं यियासवः १६
जिघांसितारं महितारमेकतो दृशाऽभिषिञ्चन् करुणार्द्रपक्ष्मणा ।
विशेषदृष्टिं स्वपरेषु हेलया प्रशासितारं जितवान् न किं भवान् ।१७
यमर्थयन्ते मखकल्मषैः परे शतक्रतुश्रीपरिरम्भणोत्सवम् ।
स एव ते वाक्यसुधासुमेधसां विभाति हालाहलतोऽपि दुस्सहः १८
अवाप्तनिर्वाणमतापनोदयं निरञ्जनं स्नेहनिगसभास्वरम् ।
प्रदीपमेकं जगतां विपश्चितः श्रयन्ति के त्वां न तमोजिघांसवः ॥१९॥
तपश्च तीव्रं विषमश्च संयमो द्वयं त्वया देव ! शिवाय पश्यता ।
कुशावलम्बेन शिवाधिरोहिणः परे कृताः कस्य न हास्यभूमयः॥२०॥
रहस्यधाम्नां विपदामथोर्म्मिभिर्न ये विषीदन्ति विगीतकर्मसु ।
अवाप्य ते त्वामपि देवदेवतं चिरं सहिष्यन्ति चतुर्गतिक्रमान् ॥२१॥
तव प्रणीतेरनुकूलमाचरन्निहैव लोकः शुभमश्नुते फलम् ।
तदप्यगाधैः स्थगिताः कुकर्मभिर्भवत्प्रतीपं विचरन्त्यमेधसः ॥२२॥

---

* दण्डम् ।

निषिद्धलोलाविहितार्थविद्विषोऽसमञ्जसज्ञानकरालचक्षुषः ।
उपेक्षिताश्चेद् भवताऽपि मादृशास्ततो भवेयुर्विपदां कुटुम्बिनः ॥२३॥
प्रसाध्य ते शर्म हठेन देहिनो निकृत्य जिवातु जिनेन्द्र ! को न यः ।
पलादमुख्यैः स्वपरौ मुखाध्वना तदप्यगाधं प्रतिलम्भितौ तमः ॥२४॥
इदं कृपापात्रमतल्लिका जगद् भवान् पुनर्विश्वकृपालुकुञ्जरः ॥
तदौचितीं स्वस्य परस्य चिन्तयन् प्रतिक्रियां कामपि कर्तुमर्हसि२५
तथा त्वया तत्त्वमधीश ! सूत्रितं यथा सुरश्रीरपि भाविविप्लवः ।
ततः श्रुतेर्वर्त्मनि भोगसाधने कियत् प्रवृत्तं ग्रहिलेन्द्रियं जगत् ॥२६॥
पराशयेभ्यः परभागवासिनः स्थितिक्रमाः सन्तु परेऽपि लक्षशः ।
अखण्डवृत्त्या बत तत्वपद्धतेर्जिनेन्द्र ! सन्तः कृपयैव विस्मिताः॥२७॥
नवं नवं धाम नवा नवा रुचिर्नवो नवो वैभवगौरवोदयः ।
तव प्रसाद प्रणयाञ्चितात्मनां नवं नवं शर्म नवा नवा रतिः ॥२८॥
कियद् यशो धाम कियत् कियन्मही रसात × × × ×

---

[ ८९ ]

## भक्त्यतिशयद्वात्रिंशिका ।

---

एकातपत्रामिव शासनस्य लक्ष्मीं दधानः फणभृत्फणाभिः ।
आरूढ'जाबालि'पुराद्रिहस्ती श्रियेऽस्तु वः पार्श्वजिनाधिराजः ॥१॥
सर्वज्ञ ! विज्ञप्यमिहास्ति यत्तन्न वेदनातीत ! भवान्न वेद ।
तथापि माध्यस्थ्यमिदं त्वदीयं किमप्यहो मां मुखरीकरोति ॥ २ ॥

महीभृतोऽमुष्य महाप्रभावः प्रासादवर्यस्तिलकीभवंस्ते ।
नेत्रातिगे मेरुगिरौ व्यनक्ति युक्तं सुवर्णाचलराजलक्ष्मीम् ॥ ३ ॥
मात्राधिकश्रीर्भवता सनाथः प्रासाद एष प्रभुपार्श्वनाथ ! ।
सतां हृदि स्फूर्त्तिमियर्त्ति चेत्तदन्तः प्रविष्टस्तव स प्रसादः ॥ ४ ॥
त्वद्बिम्बरत्नाञ्चितचूलदण्डं नीलं नभश्छत्रमुपर्यवाप्य ।
व्यनक्तु साम्राज्यमयं जिनेश ! निःशेषशैलेषु सुवर्णभूभृत् ॥ ५ ॥
द्युलोकलक्ष्मीप्रणयं परत्र कल्याणमत्रापि च दातुकामः ।
शङ्के प्रभोऽभ्रंलिहचारुचूलं चामीकरक्ष्माधरमध्यरोहः ॥ ६ ॥
रक्षोरगासङ्गतिरङ्गिताङ्गः प्रोत्सर्पदित्यद्भुतवृत्तभूमिः ।
त्रिलोकलक्ष्मीनिधिकुम्भशोभां बिभ्रत् प्रभो ! पार्श्व ! पुनासि विश्वम् ॥७॥
निरूपितं तावकमुख्यरूपं जायेत सिद्ध्यै खलु युक्तमेतत् ।
दृष्टा जिनेन्द्र ! प्रतिमापि यत्ते धत्ते परेषामुपकारमेषा ॥ ८ ॥
त्वं नन्दतात् पार्श्व ! चिरं शरण्यशिरोमणिः कश्चन यद्दधासि ।
जनस्य निःशेषभियां भियेव पलायनायोरगमुत्तमाङ्गे ॥ ९ ॥
श्रीपार्श्व ! पुन्नाग ! विपन्निरासव्रतं यदात्तं भवता पुराऽभूत् ।
अद्यापि जागर्त्ति तवाहतं तन्महाशया हि प्रतिपन्नसाराः ॥ १० ॥
जिनाधिनाथ ! प्रतिमा यथा ते कल्याणजन्माकरतां दधाति ।
चामीकराद्रिप्रतिमस्तथैष मन्येऽस्ति जाबालिपुराचलोऽपि ॥ ११ ॥
सङ्क्रान्तसिद्धोज्ज्वलसंविदेव निष्पादितं सिद्धशिलादलेन ।
त्वदीयमेतज्जिनचन्द्र ! बिम्बं ज्योतिर्मयत्वेन चमत्करोति ॥ १२ ॥
श्रीअश्वसेनक्षितिभृत्कुमार ! सुवर्णधात्रीधरमौलिरत्न ! ।
अमोघवाचस्तव पार्थिवत्वं सम्प्रत्यनन्यप्रतिमं चकास्ति ॥ १३ ॥

वितन्वती कामपि कामपुष्टिं तुष्टिं नयन्ती कृतिनां मनांसि ।
त्वत्पादसेवादवथुं जिनेन्दो ! युक्तं निकृन्तत्यमृतैकहेतुः ॥ १४ ॥
दुःस्थात्मनोऽस्याः कलिकालसिन्धौ रूपान्तरेणोद्धरणे धरित्र्याः ।
जगत्पते ! श्रीपुरुषोत्तम ! त्वं गदाधरत्वं किरसीति युक्तम् ॥ १५ ॥
दुःकाललीलायितदुःस्थलोककल्याणसम्पत्तिपवित्रसत्रम् ।
सुवर्णगोत्रे तिलकः स कोऽपि सद्वृत्त ! भासन्न ! चिराय जीयाः ॥१६॥
कामान् निकामं तनुताज्जनानां पतिर्जिनानामविपन्नगाङ्कः ।
नावन्ध्यचक्षुर्मुदमाप वीक्ष्य यत्तीर्थलक्ष्मीमविपन्नगाङ्कः ॥ १७ ॥
कृतार्थतां नाथ ! समेत्य तावदशेषसत्वेषु वहत्युपेक्षाम् ।
त्वद्भक्तिकल्पद्रुमकन्दलीयं तदप्यहो यच्छति वाञ्छितानि ॥१८॥
एकातपत्रा जिन ! शासनश्रीर्जाताऽधुनेयं भवता जिनेश ! ।
तच्छायया स्वास्थ्यजुषां जनानां भवोऽस्तमभ्येतु स तापहेतुः ॥१९।
रत्नार्चिरुन्मञ्जरिभङ्गियोगिफणौघपर्णं सुमनोचिताङ्गम् ।
गाङ्गेयभूभृद्भुवि सुप्रतिष्ठं श्रीपार्श्वकल्पद्रुममाश्रिताः स्मः ॥२०॥
देव ! त्वदीयं वदनं विलोक्य कृतार्थतां मेऽद्य दृशौ प्रपन्ने ।
धत्तः समस्तेन्द्रियमण्डलेऽपि बाष्पाभिषेकस्फुटराज्यलक्ष्मीम् ॥२१॥
सन्तापकेऽस्मिन् भवघर्मकाले तव प्रणामावसरे ममाद्य ।
भालस्थलेऽजायत भूरजोऽपि सत्कन्दलः पुण्यकदम्बशाखी ॥२२॥
त्रातस्तवाङ्घ्री शरणं श्रितस्य ममाङ्गतः सम्प्रति निःसरन्तु ।
धर्मार्पितं द्वारमवाप्य साक्षाद् भियाऽन्तरङ्गा इव कण्टकास्ते ॥२३॥
संस्नाप्य पञ्चामृतपूर्णकुम्भैर्भवन्तमभ्यर्चनमल्लिकाभिः ।
स्वामिन् ! मयात्मा विमलीकृतोऽयं चित्रं त्रिलोक्यां सुरभीकृतश्च।२४।

भवप्रभूतासुखसन्निपातकदर्थितस्य स्तुवतो भवन्तम् ।
भवागदङ्कार ! चिराय जिह्वा सुधामयीं मेऽद्य कलां दधाति ॥२५॥
आपीय कर्णाञ्जलिसम्पुटेन प्रभाववृत्तानि तवाद्भुतानि ।
करालखेलत्कलिकालदुःखक्लान्तं चिरान्निर्वृतिमेति चेतः ॥ २६ ॥
वैडूर्यरत्नाङ्कुरसोदराणि तवाङ्गवल्लिद्युतिडम्बराणि ।
विपच्चमूसंहरणैषिणो मे प्रयान्तु कालायसकङ्कटत्वम् ॥ २७ ॥
आज्ञेश्वरस्त्वं जगदेकनाथ ! विज्ञातनिःशेषमनोविशेषः ।
तवाज्ञया तन्मयि वर्त्तमाने गतावसादः किमु न प्रसादः ? ॥२८॥
श्रीअश्वसेनान्वयपूर्णचन्द्र ! विश्वैककारुण्यसुधासमुद्र ! ।
कुलप्रभुस्त्वं चिरसेवकोऽहं मयि प्रसादस्तव युज्यते तत् ॥ २९ ॥
महाप्रभावोऽसि महेश ! मह्यं प्रभावलेशं कमपि प्रयच्छ ।
त्वदगर्भदासोऽहमिति प्रसिद्धिरन्योन्यलभ्या भुवने ममास्ताम् ॥३०॥
स्वामी त्वमेकः खलु मे जिनेश ! चिरेण वा सम्प्रति वा प्रसीद ।
तावत्त्वदीयाङ्घ्रिसरोजसेवा....रामलीनं हृदयं मदीयम् ॥ ३१ ॥
मामेकमेव व्यवसायसारमनन्तरायं दधतो द्विधापि ।
यत्किञ्चिदस्तीह तदस्तु नान्यदभ्यर्थये त्वां भुवनैकनाथ ! ॥३२॥

---

[ ६० ]

# प्रसादद्वात्रिंशिका ।

---

पायात् पार्श्वस्त्रिभुवनपतिर्यत्प्रसादोर्जितानां
निःसामान्यं स्फुरति परमप्रीतिहेतुः फलं तत् ।

धन्याः सिद्धिप्रणयिनिपुणा (?) नर्घ्यरत्नत्रिकात्मा
भावं लब्ध्वा दधति यदहो विश्वलोकाग्रभूषाम् ॥१॥
संसाराब्धौ प्रकृतिविषमावर्त्तदुर्द्दैशमूर्त्तौ
श्रेयः किञ्चित् क्वचन भविनां यत् कदाचित् कथञ्चित् ।
निःसन्देहं तदिह भुवनामेय ! वामेय ! देव !
त्वत्पादाब्जप्रणयकणिकाक्रीडितानां विवर्त्तः ॥ २ ॥
संभेदेन प्रसृमरनिजस्रोतसां तीर्थभूताः
क्रीडापूताखिलवसुमतीमण्डलाः केऽप्यमोघाः ।
मोक्षाय स्युर्भुवि तनुभृतामाश्रितानां यदेषां
योगीश ! त्वच्चरणयुगलीपांशुसंसर्गलीलाः ॥ ३ ॥
यज्जिह्वाप्रोज्झितजललवासङ्गतः कुष्टशान्ति-
र्यन्मूत्राम्भःपरिमलतया हेमतामेति लोहम् ।
अक्षीणत्वं दधति निधयो यत्करन्यासयोगात्
त्वद्योगश्रीपरिचयमृते तादृशास्ते कथं स्युः ? ॥ ४ ॥
यद् गाहन्ते तरणिकिरणालम्बनेनाम्बराग्रं
यद्वर्षास्वप्यसलिलजुषः क्ष्मातले सञ्चरन्ति ।
मध्येज्वालागहनदहनं यत् समाधिं दधन्ते
धन्याः केचित् तदखिलमदः खेलितं त्वत्प्रसत्तेः ॥ ५ ॥
अन्तःक्रीडाविपिनवसुधं बद्धकेलिक्रमो यत्
यत्सन्मुक्ताप्रकरमरजः पुष्पवर्षं दधानः ।
स्वःश्रीसङ्गं प्रथयति हरिः साप्सरः सन्निधानः
स्वामिन् ! सोऽयं लवणिमकणस्त्वत्पदद्वन्द्वभक्तेः ॥ ६ ॥

वृत्तेर्नोर्व्यां शशिमदमुखापीतशौर्योष्मणेव
क्ष्माभृद्वंशैरिव च कलितैः स्वप्रतापाग्निना च ।
एकच्छत्रं विरचयति यत्कोऽपि मर्त्याधिपत्यं
सोऽयं वामातनुभव ! भवत्पादपद्मप्रसादः ॥ ७ ॥

गीतश्लोकः शशिशुचिगणोदश्चिरोमाञ्चसूचि-
स्यूतिक्रीडानिबिडतरदलत्कञ्चुकं पन्नगाभिः ।
यत्पातालं भुजगतिलकः शास्ति विश्वेश ! पार्श्व !
त्वत्पादाब्जद्वयपटलिमोल्लासलीलायितं तत् ॥ ८ ॥

यद्वैताढ्यं रजतवपुषं स्वं यशोराशिमुच्चैः
पिण्डीभूतं किल विलभते कोऽपि विद्याधरेन्द्रः ।
त्रैलोक्यश्रीतिलक ! भवतः स्मेरपादारविन्द-
द्वन्द्वासेवारसपरिणतेः स्फूर्जितं किञ्चिदेतत् ॥ ९ ॥

शृङ्गारस्याखिलरसमहाराज्यलक्ष्मीभिरुच्चै-
रभ्यर्च्यन्ते नयननलिनस्राविणीभिर्वधूभिः
केचिन्मर्त्या मदनजयिनो यन्महीमण्डपान्तः
श्रीमत्पार्श्व ! स्फुरति भवतः सैष सेवाप्रभावः ॥ १० ॥

राज्यप्राप्तिक्षणसमुदितामन्दनान्दीनिनादैः
कर्णस्फोटादिव न वचनं श्रूयते कस्यचिद् यैः ।
भूपाः पुंसो यदिह सुधियां यान्ति वाग्वश्यतां ते-
ऽप्येष स्वामिंस्तव पदरजःसङ्गभङ्गेर्विलासः ॥ ११ ॥

गोष्ठीबन्धं विदधति मिथो निर्विरोधानुबन्धा-
स्त्वद्व्याख्यानाङ्गणधरणिषु प्राणिनो वैरिणोऽपि ।

तत्राश्चर्यं जिन यदधिकं स्निह्यतन्वन्निवास–

स्वान्ते पुंसि प्रमदविशदाश्रीख (श्च) वागीश्वरी च ॥१२॥

हेमक्ष्माभृत्तिलक ! तव यः प्रापितः पादनम्र–

स्तां कस्तूरीस्तबकरचनां मेचकाङ्गप्रभाभिः ।

व्यक्तं पीताम्बरमिव नरां कृष्णतां तं वहन्तं

प्रौढप्रेमासवपरदशाः संश्रयन्त्याशु लक्ष्मीः ॥ १२ ॥

शश्वन्नामाक्षरपरिचयश्वेतमासञ्चितस्ते

सेकः सत्यं स्फुरति परमः कामदः कोऽपि मन्त्रः ।

नव्यं केषामपि तदपि तं व्याकरोषि प्रतीमः

प्रीत्यै विद्याशतलिपिकरस्याहिभर्त्तुः श्रितस्य ॥ १४ ॥

साक्षात्कारः सकलजगतां स्याद् यतः केवलं त–

च्चक्षुः किञ्चिद्दिशति कृतिनां देव ! युष्मत्प्रसादः ।

अन्धानां तन्नियतविषयां श्रृष्टिसृष्टिं दधानः

केषामेष स्तवनवचसां गोचरे सञ्चरिष्णुः ॥ १५ ॥

मित्रीभावं भजति तपनः सोमनामेति दोषा–

धीशः शश्वद् भवति विलसन्मङ्गलश्रीः सवक्रः ।

सान्वर्थत्वं बुधगुरुगवी न त्यजत्येव मन्द–

स्थाना य स्यादिति जिन ! तवाऽनुग्रहे सद्ग्रहाः स्युः॥१६॥

भूताः स्यूताः स्वमनसि भिया राक्षसाः कातराक्षा

यक्षाः कक्षां दधति विधुरां स्युः पराचः पिशाचाः ।

दुःस्वप्नास्ते प्रशमपदवीपान्थतामावहन्ते

सेवाहेवाकिनि तव जने निर्विरामं जिनेश ! ॥ १७ ॥

श्रीवामेय ! त्वयि विहरति प्रौढरूढप्रभावे

प्रादक्षिण्यप्रवणगतयः पक्षिणः प्राग् बभूवुः ।

तत् किं चित्रं वससि हृदये त्वं यदीयेऽधुनापि

स्यादेतस्याऽध्वनि न शकुनप्रातिकूल्यं कदाचित् ॥१९॥

कारागारं विविशुरवशाः कण्ठपादप्रतिष्ठा-

माबिभ्राणाः कुपितनृपतौ शृङ्खलामायसीं ये ।

तां सौवर्णीं सपदि दधतस्ते निरीयुः करीन्द्र-

स्कन्धासीनास्तव जिनवर ! ध्यानबद्धावसानाः ॥ १९ ॥

मैत्रीं प्राप्य प्रसृमरमरुत्कल्पितां धूमकेतु-

र्यः स्वं तेजः प्रथयति समित्सङ्गलब्धाधिकश्रीः ।

पादन्यासं शिरसि तरसा ते नदीयेऽपि कुर्यु-

र्ये देव ! त्वाममृतमदुरं मानसे धारयन्ति ॥ २० ॥

स्वर्णक्षोणीधरवरशिरःशेखर ! श्रीजिनेश !

व्यक्तं सेयं परमहिमता काचिदुज्जृम्भते वः ।

पुंसां पादास्थितिसमुचिता यत्तडागापगाम्भः-

सम्भाराणां परमहिमता स्यादनुद्वेगहेतुः ॥ २१ ॥

दुर्वर्णत्वं दधदपि रसाविद्धनिःशेषधातु-

श्च्योतत्कुष्टग्लपितवपुषां सिद्धनाथाऽधुनापि ।

सद्यः पिण्डं भवति विकसत्सौरभं यत्सुवर्ण

स्फूर्त्तिः कापि स्फुटमनवधेस्त्वत्प्रसादौषधस्य ॥ २२ ॥

तन्वन्नामस्मरणवशतः प्राणिनां पोतभाजा-

मम्भोराशेर्जलभरभृतो लङ्घनं दुर्दिनेऽपि ।

नूनं नाथ! प्रथयसितरां सुप्रसन्नान्तरात्मा
संसाराब्धेरपि तटभुवः प्रापणे नैपुणत्वम् ॥ २३ ॥
सर्पद्दर्पोत्फणमभिसरन्नागलोकाधिराज-
स्फूर्जच्चूडाभरणधरणस्याज्ञयेव स्थिरात्मा ।
कालव्यालः स्थलकुवलयोल्लासलीलामुपैति
श्रीमत्पार्श्व ! त्रिभुवनपते ! त्वत्पदाम्भोजभाजाम् ॥ २४ ॥
कोपाटोपज्वलनजनितैस्तैः स्फुलिङ्गैरिवोग्रै-
रक्ष्णां पातैः कृतदवथुभिर्भिल्लसैन्यैर्निरुद्धे ।
अम्भःप्राप्तिर्यदि भयभवस्वेदभूर्यत्र सत्रं
दिष्टया युष्मच्चरणशरणास्ते लघूल्लङ्घयन्ति ॥ २५ ॥
स्थानेवात....मजजिन ! कृपास्तन्द्रपीयूषवृष्ट्या
दृष्ट्या दिष्ट्या तव नृपतयस्तापनिर्वापमापुः ।
यस्मादेषां समुदयिसमित्सङ्गमैरुष्मलश्री-
वैरिव्रातः प्रकटदहनः शान्तिमाशु प्रपन्नः ॥ २६ ॥
मूर्त्तं तेजः प्रकटयति यः केसरैः स्वैः कडारैः
किञ्च स्वीयं यश इव नखैर्मुक्तमुक्ताफलौघैः ।
विख्यातारिद्विरदविजयः सोऽपि राजा मृगाणां
न स्याच्चित्रार्पित इव भिया जाग्रति त्वत्प्रतापे ॥ २७ ॥
स्फूर्जद्गर्जिः स्फुटमदपयोवृष्टिभृच्चीनपिष्ट-
व्यासक्रीडानिबिडतमतडिद्दन्तवल्गद्बलाकः ।
मत्तव्यालः प्रलयसमयाम्भोदमूर्त्यन्तरश्री-
स्तं त्वद्ध्यानाङ्कुशितमनसां स्यात्कृतातङ्कपङ्कः ॥ २८ ॥

सङ्ग्रामाब्धिं प्रबलविलसद्वाहिनीसन्निपातो-
यत्कीलालाकुलितसकलप्राणिवर्गे क्षणेन ।
निर्मथ्यान्तः सपदि बलिना भूभृता बाहुनैव
श्रीकान्तत्वं दधति कति न त्वत्प्रसादामृतार्द्राः ॥ २९ ॥
प्रौढोत्पाता अपि विदधते....क्षमाकम्पनाशा-
प्लोषप्रायाः प्रशममचिरा....राष्ट्रेषु तेषाम् ।
ये निःस्यन्दीकृतनिजहृदा निःप्रकम्पक्षमं त्वा-
मासावल्लीस्तवकनघनं निर्विरामं स्मरन्ति ॥ ३० ॥
स्फूर्त्तिं बिभ्रत् परशुभरतो भद्रकुम्भाधिकश्री-
र्विघ्नश्रेणीहरणनिपुणः कोऽपि देवोऽयमेकः ।
श्रेयः कर्मोद्गमसमुचितारम्भसरम्भभाज-
स्तद् भोरेनं गमयतितमां निष्प्रमादं प्रसादम् ॥ ३१ ॥
भालं कृत्वाञ्जलिमुकुलितं सोऽहमभ्यर्थये त्वां
तृष्णार्त्तं वा कथयतु जनो मामथो न्यस्ततृष्णम् ।
यद् यत् किञ्चिज्जगति परमानन्दसम्पत्तिकन्द-
स्तत्तन्मह्यं वितर वितर त्वं प्रसीद प्रसीद ॥ ३२ ॥



[ ६१ ]

## षोडशिकाः

# साधारणजिनस्तवाः।



सकलसमयोपबृंहकसमयस्थितिजन्तुमखिलतुल्यगिरं ।
गतपापं गतपुण्यं पुण्यकृते जिनपतिं स्तौमि ॥ १ ॥

दुरितानि हरसि जनयसि भद्राणि तनोषि मङ्क्षु दिक्षु यशः।
किमपरमुपनयसि शिवं त्वमेव जिन ! दृष्टमात्रोऽपि ॥ २ ॥
नृत्यत्पुरन्दरवधूसिन्दूरपरागपिञ्जरदिगन्तम् ।
तव समवसरणमशरणशरणं शङ्केऽस्मि न गतोऽहम् ॥ ३ ॥
अपविस्मयविगतस्मयविश्वत्रयरूपदर्शनादर्श !।
गिरमिव सर्वपथीनां न दृष्टवानस्मि तव मूर्त्तिम् ॥ ४ ॥
पुरुहूतपाणिसञ्चार्यमाणकनकाम्बुजाङ्कविश्रान्ता ।
न भुवि न वियति गतिर्या तव समजनि सा न मे साक्षात् ॥५॥
तव पथि वितमसि विरजसि सच्छाये सामृते महामरले ।
अपरपक्षाधिगमकरे कृतवानहमीश ! नास्मि पदम् ॥ ६ ॥
आजन्मरुचां रुचिधामगुरुतिरस्कारसारभारखनिः ।
दुःस्वग्रामकुटुम्बी त्रातस्तेनाऽस्म्यहं जातः ॥ ७ ॥
लङ्घयति यस्तवाज्ञामात्मन्ययमीश ! वैरमुद्वहति ।
यः स्वात्मन्यपि वैरी कृपालुरन्येषु स कथं स्यात् ? ॥ ८ ॥
लक्ष्मीप्रभवे पुरुषोत्तमाश्रये सत्वधाम्नि निस्तावे।
यस्तव समयोदन्वति मज्जति स परं व्रजति पारम् ॥ ९ ॥
जम्भारिचक्रकृतसेव ! देवदेवस्त्वमेव खलु विदुषाम् ।
ये पुनरपरे देवास्ते देवाः कश्मलमतीनाम् ॥ १० ॥
तव वचनसुधारसपानपावनीभूतकर्णपथकुहरः ।
कलुषविषगर्भिताभिर्मुह्यति को वाग्भिरपरेषाम् ॥ ११ ॥
अमरासुरनरलक्ष्मीः सौभाग्यं वहति तावदेवेयम् ।
भवदुपदेशसकर्णैर्न वीक्ष्यते चापलं यावत् ॥ १२ ॥

विषयविषघूर्णनावेगभङ्गुरस्तुब्धकृत्यमार्गाणाम् ।
अमृतप्रवेशकुशलं तव शासनमेव जाङ्गुलिकः ॥ १३ ॥
अभवनिरस्तु शिवस्य स्वर्गस्य क्ष्माश्रियश्च नित्यमपि ।
यदि भवति भवति तुष्टे स्वातन्त्र्यं मे सदा भवतु ॥ १४ ॥
अर्हन्ननन्तसुख ! शाश्वतिकावलोक !
विश्वोपकारिकरुणागृह ! मुक्तिनाथ ! ।
निःक्लेश ! निर्मम ! निरामय ! निःस्वभाव !
देवाधिदेव ! कृतसेव ! नमो नमस्ते ॥ १५ ॥
भवसङ्क्लेशसन्तप्ताराम चन्द्रांशुरोचिषि ।
प्रसीद यच्छ संवासं तस्यां मे निर्वृतिक्षितौ ॥ १६ ॥

---

[ ६२ ]

अनास्पद ! मनोवाचामिन्द्रियाणामगोचर ! ।
श्रद्धाविशुद्धिविज्ञेय ! श्रीमन्नर्हन् ! नमोऽस्तु ते ॥ १ ॥
पात्रं न वाचां सद्रूपं यत् पात्रं तदसत् पुनः ।
अवास्तवात् ततः सर्वे संस्तवास्त्वयि वस्तुतः ॥ २ ॥
सामान्यात्मा विशेषात्मा सर्वश्चेद् वस्तुविस्तरः ।
अन्यगीर्भ्यः किमेकान्तविशिष्टा भवतो गिरः ॥ ३ ॥
कस्यचिन्नागदङ्कारस्तामसस्य भवानपि ।
उलूकलोचनस्थस्य तिमिरस्येव भानुमान् ॥ ४ ॥
त्वयि श्रद्धोद्गमान्नाथ ! जानाम्यात्मनि भव्यताम् ।
कुतः सौदामिनी वारिवाहवन्ध्ये विहायसि ? ॥ ५ ॥

तस्यावश्यं पुरो मुक्तिर्योऽध्वनीनस्तवाध्वनि ।
दृष्टौ प्रकाशमानस्य तिग्मांशोरिव कार्मुकम् ॥ ६ ॥
सद्यः पुष्यन्ति ये योषित्पादघातमहोत्सवैः ।
अशोकगोत्रिणो देवास्ते पुरस्ते तृणं तृणम् ॥ ७ ॥
मञ्जुसिञ्जानमञ्जीरं निःस्वनद्भुजकङ्कणम् ।
अग्रतस्ते शचीलास्यं दृश्यं धन्यस्य कस्यचित् ॥ ८ ॥
स श्लाध्यस्तुम्बुरोर्वीणाप्रपञ्चस्वरसञ्चयः ।
त्वद्गणाद्घोषणोत्कण्ठैर्योगीन्द्रैरपि यः स्तुतः ॥ ९ ॥
कर्ममर्मभिदि श्राद्धो यः स्याल्लालाटिकस्त्वयि ।
असौ जायेत विश्वश्रीवक्त्राम्भोजललाटिका ॥ १० ॥
भवतोऽचिन्त्यतेजांसि वचांसि सहजान्यपि ।
यथाधरं यथाम्भांसि परिणाममुपासते ॥ ११ ॥
सा ते सचेतसः कस्य विस्मयाय न जायते ।
अवाचः कुर्वती वाणी गतिश्च भुवि कण्टकान् ॥ १२ ॥
त्वत्प्रणामकिणश्रेण्या भालभूर्यस्य सिध्मला ।
दन्तुरा शक्रकोटीरभाभिस्तस्याङ्घ्रिपीठिकाः ॥ १३ ॥
हास्यादपि भवत्पादाः क्वापि तैर्वीक्षिता ध्रुवम् ।
दुर्नयैकनिषण्णानामपि येषां शुभोदयः ॥ १४ ॥
तवाङ्घ्रिनखरज्योत्स्नाशिखाचूडालभूमिषु ।
जङ्घालोत्कण्ठवैयात्यात् कामुकी मुक्तिकामिनी ॥ १५ ॥
स्वामिन्ननन्तफलकल्पतरो ! ऽभिराम-
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।

शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणाङ्कुरु देहि दृष्टिम् ॥ १६ ॥

[ ६३ ]

अनन्तदर्शनज्ञानसुखवीर्यमविस्मयम् ।
अशोकहर्षाप्रत्यूहकल्याणं संस्तुवे जिनम् ॥ १ ॥
रजो हरन्तु ते धर्मदेशनासरितः सताम् ।
मज्जन्नपि जनो यासु न जाड्यमधिगच्छति ॥ २ ॥
त्वत्पादपाटलज्योतिःकडारकबरीजुषि ।
नम्राणां मांसला मूर्ध्नि कटाक्षा निर्वृतिश्रियः ॥ ३ ॥
लघुस्त्वदङ्घ्रिनां देव ! भवाम्भोधिर्महानपि ।
सर्वज्ञसंविदो व्योम निरन्तमपि मुष्टिगम् ॥ ४ ॥
असान्तापिकसिद्धान्तविदुचन्द्रकितश्रुतिः ।
हिंसापिच्छलवेदोक्तिशूनां को नाम संस्पृशेत् ? ॥ ५ ॥
विसारिसौरभोल्लाससमिलितालिकुलास्तृतः ।
दिव्यपुण्योपहारस्ते पञ्चवर्णोऽपि मेचकः ॥ ६ ॥
पुरस्ते भान्ति विश्वस्य वन्दारोः प्रति यातनाः ।
देशनां श्रोतुमायाताः पातालादिव नारकाः ॥ ७ ॥
विबुधाध्वन्यपि प्राप्ता ये नीचगतयो जनाः ।
ते प्रयान्त्येव पातालं नाथ ! पाथो यथाभ्रजम् ॥ ८ ॥
अक्षिणेणाऽपि निःशेषदोषकाननलाविना ।
ब्रह्मादीनामशेषाणां त्वया मूर्ध्नि कृतं पदम् ॥ ९ ॥

अद्यश्वीनो भवाम्भोधिसमुत्तारस्त्वदङ्घ्रिनाम् ।
अद्यप्रातीनमेवेशं सिद्धिसौधाधिरोहणम् ॥ १० ॥
वैहासिकः कथं न स्यादसौ निर्वाणकुट्टिमे ।
यः स्याद् भवद्गुणोद्घोषवाचाटश्चाटुकर्मभिः ॥ ११ ॥
निर्लूनकिन्नरीगीतगन्धारग्रामसौरभैः ।
भेरीमुखोदरोद्गीर्णैर्व्याकुलाशानि भाङ्कृतैः ॥ १२ ॥
प्रचलच्चामरोद्बुद्धगन्धवाहविशृङ्खलैः ।
धौतदिग्गजगण्डाङ्कदानाम्भांसि जलोर्म्मिभिः ॥ १३ ॥
चारीप्रचारनिर्घातपतद्भिः शैलसानुभिः ।
कम्पमानावनीव्यग्रनागराजशिरांसि च ॥ १४ ॥
त्वज्जन्म मज्जनारम्भसंरम्भोत्कर्षहर्षणैः ।
हरन्तु डिम्बषण्डानि ताण्डवानि बलत्विषः ॥ १५ ॥
स्वामिन्ननन्तफलकल्पतरो ! ऽभिराम-
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

---

[ ६४ ]

अर्हते देवदेवाय शीर्णसंसारहेतवे ।
पर्याप्ताशेषकृत्याय ज्योतिर्मात्रात्मने नमः ॥ १ ॥
वन्दारुशक्रकोटीररत्नच्छायाच्छटाच्छिदः ।
तमो मुष्णन्तु विश्वस्य भवत्पादनखांशवः ॥ २ ॥

तव क्रमनखादर्शरङ्गोत्सङ्गाप्रनर्त्तकीम् ।
स्वस्य पश्यन्ति ये मूर्त्तिं कस्यास्ते नास्पदं श्रियः ॥ ३ ॥
विशीर्णाशेषदोषस्य कामाहङ्कारहारिणः ।
भवता देवदेवोऽस्तु को नामैकधुरः पुरः ॥ ४ ॥
पथा तवापि गच्छन्तः सारम्भा यान्ति दुर्गतिम् ।
यादांस्यपि जिनाधीश ! दह्यन्ते जातवेदसा ॥ ५ ॥
स्वयम्भुशम्भुवैकुण्ठैः शिल्पनाट्यच्छलोद्भटैः ।
यदा क्षिप्तमिदं विश्वमर्वाक्दृष्टि तदौचिती ॥ ६ ॥
हर्षाश्रुक्षालिता दृष्टिर्या न पश्यति ते मुखम् ।
सा पश्यति मदोत्तानचक्षुषां विद्विषां क्रमौ ॥ ७ ॥
त्वदुक्ततत्त्वयोग्यायामलङ्कर्मीणचेतसाम् ।
किमस्मिन्न षडक्षीणं त्रिलोकेऽस्तु सुमेधसः ॥ ८ ॥
तेजस्तेषां यशस्तेषां तेषां गौरवडम्बरम् ।
स्वर्गस्तेषां शिवं तेषां येषां त्वयि मनो रतम् ॥ ९ ॥
तव प्रसादैरानन्दं जिघृक्षोः स्थावरं परम् ।
यायावरेषु कः कामोद्यावाक्ष्माजन्मशर्मसु ॥ १० ॥
भवद्वाक्यसुधासारैः कर्णाः पूर्णा न ये मुहुः ।
आकस्मिकरुषो मन्तुस्ते पूर्यन्ते वचोविषैः ॥ ११ ॥
कामव्यालविषोच्छालमूर्छालमनसां नृणाम् ।
नरेन्द्रवृन्दवन्याङ्घ्रिर्भवानेवाहितुण्डिकः ॥ १२ ॥
यादसामिव पाथांसि स्वर्गो दिविषदामिव ।
विश्वम्भरेव मर्त्यानां विरतेरिव मर्त्यता ॥ १३ ॥

सुखानामिव सन्तोषो दुःकीर्तेरिव दुर्णयः ।
आत्मैव पुण्यपापानां प्रशमस्येव संवरः ॥ १४ ॥
प्रेष्यतेव महाधीनामारम्भ इव दुर्गतेः ।
क्षेत्रं त्वमेव देवेश ! सर्वज्ञ ! ज्ञानसम्पदः ॥ १५ ॥
स्वामिन्ननन्तफलकल्पतरो ! ऽभिराम–
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

---

[ ६९ ]

आनन्दमर्हतः पादास्ते देयासुरनश्वरम् ।
ये नखेन्दुप्रभाजालैः कुर्वन्ति वितमो जगत् ॥ १ ॥
विद्वानपि यथा हास्यः परकाव्यैः कविर्भवन् ।
तथा भक्तोऽप्यहं स्तोत्रं पात्रं कुर्वन् भवद्गुणान् ॥ २ ॥
त्वद्वाक्यश्रवणादेव देव ! भ्रश्यन्ति दुर्ग्रहाः ।
धूमरीशीकरासिक्ता माकन्दमुकुरा इव ॥ ३ ॥
द्विषोऽपि गमयत्येव त्वन्मूर्त्ति सौहृदं क्षणम् ।
पिचुमन्दफलानीव पाकः कामधुरं रसम् ॥ ४ ॥
शतपत्रपुष्पाणीव वचसा शिशिरेण ते ।
द्विषतामपि चेतांसि रक्तिमानमुपासते ॥ ५ ॥
उच्चं प्राप्याऽपि ते (मं)स्थानं ये न निश्चलवृत्तयः ।
पातालं ते प्रयास्यन्ति पादा वटतरोरिव ६ ॥

क्षेमङ्करा भद्रकरास्तव पादाः प्रियङ्कराः ।
सर्वङ्कषा विपत्तीनां किञ्च नाडिन्धमा द्विषाम् ॥ ७ ॥

प्राप्तः कुतीर्थिनां चण्डजाड्यपिण्डाल्पमेधसाम् ।
वचांस्यवास्तवान्येव रागद्वेषजुषामिव ॥ ८ ॥

वराकः किमलम्भूष्णुर्विज्ञातुं तां भवद्गवीम् ।
यां श्रुत्वा स्वर्गनाथोऽपि भिक्षुकत्वाय सोत्सवः ॥ ९ ॥

निर्वाणविमुखा हिंस्राः सर्वज्ञज्ञानविद्विषः ।
श्रुतयोऽपि प्रमाणं चेज्जितं देव ! तदांहसा ॥ १० ॥

कुतीर्थिनां स्तवेन स्यात् कृपालुरपि निष्कृपः ।
अम्भांस्यपि दहन्त्येव देव ! पावकसङ्गमात् ॥ ११ ॥

स मेघः पुष्करावर्त्तो जडात्मा ते कुतः समः ? ।
युज्यते येन संसिक्ता कन्दलैश्च तृणैश्च भूः ॥ १२ ॥

परप्रसादैरुद्गर्वा ये वहन्तः शिरोधराम् ।
न लज्जन्ते ध्रुवं तैस्ते न पीतं वचनामृतम् ॥ १३ ॥

रजोगृहिरसावात्मा यथा विरजसीभवेत् ।
तथा स्वदृष्टिपीयूषच्छटाभिरभिषिञ्च माम् ॥ १४ ॥

स्थास्नवः कीर्तयस्तेषां म्लास्नवो दुरितादयः
निराकरिष्णवो येषामघानि तव दृष्टयः ॥ १५ ॥

स्वामिन्ननन्तफलकल्पतरोऽभिराम–
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

—◆◆—

[ ६६ ]

जगन्ति तीर्थनाथस्य पान्तु पादनखांशवः ।
अगाधे रज्जवो येऽस्मिन् भवाम्भोधौ निमज्जताम् ॥ १ ॥
दत्तपद्मोदयाः क्लृप्तकलावत्कान्तिडम्बराः ।
जाड्यं हरन्तु ते पादा वसन्तदिवसा इव ॥ २ ॥
कल्पते नाथ ! घाताय स्वीकृतोऽपि कुतीर्थिकः ।
विध्यापयन्ति पाथांसि गाढोष्णान्यपि पावकम् ॥ ३ ॥
संयमैकधुरीणानामात्मनीनैकचेतसाम् ।
नाकेऽपि नरकास्थैव त्रातस्त्वन्मार्गदृश्वनाम् ॥ ४ ॥
नम्ररम्भालकोत्सङ्गसङ्गिकर्पूररेणवः ।
त्वदङ्घ्रिपङ्कजे देव ! बिभ्रतां ते परागताम् ॥ ५ ॥
जल्पाकास्त्वद्गुणौघस्य ये न स्युर्मन्दमेधसः ।
सौखप्रसुप्तिकास्तेषां कथं स्युर्जम्भविद्विषः ॥ ६ ॥
श्रियः कीर्तेश्च लुण्टाका ध्रुवं ते देव ! विद्विषाम् ।
कर्माचलस्य कुट्टाकास्त्वद्वाक्यकुलिशेन ये ॥ ७ ॥
भवक्लेशाग्निसन्तप्ताः पारदा इव पाथसि ।
शुद्धात्मानो निमज्जन्ति शीतलासु तवोक्तिषु ॥ ८ ॥
भवत्प्रणीतसिद्धान्तसुधास्वादं सुमेधसाम् ।
परोपनीतो मोक्षोऽपि नरकादतिरिच्यते ॥ ९ ॥
तव सूक्तिसुधासारैः परब्रह्माभिलाषुकाः ।
कामुका निर्वृत्तिश्रीणां न के कर्माणि घातुकाः ॥ १० ॥
ईश ! त्वत्पादपद्मस्य पांसुरा ये रजःकणैः ।
ईशते स्वःशिवश्रीणामुदरम्भरयोऽपि ते ॥ ११ ॥

अन्तर्निःसारमापातरम्यं ग्राम्यानुरञ्जकम् ।
चित्रकाव्यमिवान्येषां वचः पर्यन्तनीरसम् ॥ १२ ॥
मनीषिपरितोषिण्यो मनःश्रोत्ररसायनम् ।
सत्काव्यानीव ते देव ! परमार्थपरा गिरः ॥ १३ ॥
निष्फला भोगिसंसेव्या जाड्यनिर्माणकार्मणम् ।
मिथ्यादृशां गिरो देव ! श्रीखण्डतरुसोदराः ॥ १४ ॥
वचस्वी च यशस्वी च तेजस्वी च क्षणेन सः
मल्लीविलासिनी यत्र खेलतस्तव लोचने ॥ १५ ॥
स्वामिन्ननन्तफलकल्पतरोऽभिराम-
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥



[ ६७

नमो निर्लूननिश्शेषदोषसन्तानवीरुधे ।
देवाय वीतरागाय प्राप्तनिर्वाणशर्मणे ॥ १ ॥
मनसा यत् परोक्षोऽसि हृदये निवसन्नपि ।
तत्ते चरित्रवैचित्र्यमवैति यदि केवलम् ॥ २ ॥
मलीमसदृशो जाड्यकण्डूलास्तुन्दिलांहसः ।
विशुध्येयुः कथं विश्वजनीनः स्यान्न चेद् भवान् ॥ ३ ॥
प्रकाशयति वस्तूनि प्रत्याशं ज्योतिषा त्वयि ।
कुतोऽन्येषां प्रभा चन्द्रे ताराणामिव पार्वणे ॥ ४ ॥

रक्तोद्भेदं पयांसीव मृदून्यपि वचांसि ते ।
विद्रावयन्ति जन्तूनामेनांसि प्रचितान्यपि ॥ ५ ॥
नखेन्दुमण्डलीज्योत्स्नावितानपरमांसलाम् ।
त्वत्पादपादपच्छायां श्रयन्ति परितापिनः ॥ ६ ॥
श्रेयांसि पशुघातेन शंसतामपि पूज्यता ।
येषां तेषां प्रशास्तारो नाथ ! मात्स्यिकसौनिकाः ॥ ७ ॥
तत्त्वस्पृशोऽपि वाचस्ते मुधा दुर्मेधसं प्रति ।
दिवाऽपि जनुषान्धस्य तमिस्रासोदरोदयम् ॥ ८ ॥
यः सर्वाङ्गीणरोमाञ्चपक्ष्मलः स्तौति ते गुणान् ।
सर्वकर्मीणविज्ञानः स स्यात् सर्वपथीनवाक् ॥ ९ ॥
रिपुश्रीवन्हिना दृष्टिर्येषामाजन्म दह्यते ।
तैः कदाचिन्न दृष्टोऽसि पूजितोऽसि स्तुतोऽसि च ॥ १० ॥
सन्ताप्यते यथा लोकः क्रूरैर्निःसत्वराजकः ।
त्वद्वियुक्तस्तथा नाथ ! मिथ्यात्वान्धैश्चरित्रवान् ॥ ११ ॥
चक्रासिचापदम्भोलिभाजो यस्य त्वदङ्घ्रयः ।
सहायाः सोऽभ्यमित्रीणः किं न स्याद् भावशत्रुषु ? ॥ १२ ॥
ये पराञ्चस्तवोपास्तेर्नास्तिकाः स्वास्तिवेश्मनः ।
वैभवान्धविरोध्यन्तरासंसारं वसन्ति ते ॥ १३ ॥
ते सिद्धिसुन्दरीवक्षःपर्यङ्कोत्सङ्गशायिनः ।
त्वत्पादपङ्कजक्रोडे ये रज्यन्ति मनीषिणः ॥ १४ ॥
अभङ्गुरामनाबाधाममन्दानन्दमेदुराम् ।
मुक्तिं त्वदङ्घ्रिनो यान्ति भासुरज्ञानमूर्तयः ॥ १५ ॥

स्वामिन्ननन्तफलकल्पतरोऽभिराम-
चन्द्रावदातचरिताञ्चितविश्वचक्र !।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

[ ६८ ]

स्वयम्भुवं भुवो नाथं लक्ष्मीनाथं कलानिधिम् ।
समन्तभद्रं भास्वन्तं तीर्थनाथमुपास्महे ॥ १ ॥
पापास्तवाङ्घ्रिपीठोपकण्ठं नैव लुठन्ति ये ।
वैरिवेश्माङ्गणक्षोणौ पांसुरायां लुठन्ति ते ॥ २ ॥
जगत्त्रयैकमित्रस्य ये तवाऽपि विरोधिनः ।
भृत्या भृत्यद्विषो भर्त्तुर्भूयासुः प्रतिजन्मनि ॥ ३ ॥
किं ते रजोभिराकीर्णामुद्वहन्ति वपुःस्थलीम् ।
भवत्पादनखज्योत्स्नाच्छटाभिः स्नान्ति येऽन्वहम् ॥ ४ ॥
मार्गतां यत्नतो देव! त्वदाराधनसाधनम् ।
नास्ति वैनयिकादन्यत् किञ्चिदौपयिकं सताम् ॥ ५ ॥
वाचालोऽपि तव स्तोत्रैः पत्याहंयुरपि त्वया ।
कैः कैर्न पूज्यते.....देवदैत्यनरेश्वरैः ॥ ६ ॥
आत्मद्विषो द्विषन्ति त्वां ये पापीयोमतल्लिका ।
अष्टमं नरकं यान्ति पारवश्यमिहैव ते ॥ ७ ॥
असौ किं गौर्न वोढा यः किं राजाऽसौ न पाति यः ।
असौ देवेश ! किं देवो यः कुटुम्बविसंस्थुलः ॥ ८ ॥

देवाश्चेत् कामिनीपादप्रणामानम्रमौलयः ।
ततोऽस्तु स्वस्ति भण्डेभ्यः संस्तुमो विटपेटकम् ॥ ९ ॥

नमो लीलाविलासाय पानशौण्डकलाय च ।
वन्दामहे भुजङ्गाङ्घ्रीन् निर्वाणप्राप्तिहेतवे ॥ १० ॥

उद्गायन्तः प्रनृत्यन्तो विनिघ्नन्तश्च नित्यशः ।
यद्युपास्याः शिवश्राद्धैस्ततो योगजुषो हताः ॥ ११ ॥

पाणौ शस्त्रं प्रिया श्रोणौ शिखी भाले गले फणी ।
सायं नृत्तं वृषो यानमहो ध्येयस्य साधुता ! ! ! ॥ १२ ॥

आदिशन्तः परं ब्रह्म मृत्कुशाग्नितिलोदकैः ।
त्वदन्ये कस्य हास्याय न जायन्ते विबुद्धयः ॥ १३ ॥

येऽमलस्यान्तरस्यापि स्नानेन ब्रुवतेऽत्ययम् ।
तेऽपि ग्राह्यगिरः पश्य लोकस्यापानमत्तताम् ॥ १४ ॥

स एव वाग्मी स श्राद्धः स प्रज्ञालः स मेधिरः ।
त्वत्प्रणामकिणैर्यस्य शुभंयोः पत्रलं शिरः ॥ १५ ॥

स्वामिन्ननन्तफलकल्पतरोऽभिराम-
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

[ ६१. ]

उपास्महे जिनेन्द्रस्य शङ्खपद्माञ्चितौ क्रमौ ।
शाश्वतीमस्तसङ्क्लेशां सम्पदं स्पृहयालवः ॥ १ ॥
यथा षण्ढस्य सौभाग्यमुपहासाय योषिताम् ।
तथा त्वयि मम स्तोत्रसंरम्भोऽयं सुमेधसाम् ॥ २ ॥
प्रमोदोद्भिन्नरोमाञ्चव्याजेन नवपल्लवान् ।
त्वदञ्चनपवित्राणां प्रसूते पुण्यपादपः ॥ ३ ॥
व्याकुलस्यापि यामिन्यां यथा निद्रा प्ररोहति ।
विशृङ्खलेन्द्रियस्यापि त्वदुपास्तौ तथा शुभम् ॥ ४ ॥
तस्य सौस्नातिकः सोऽपि जम्भारिः प्रोषिताश्ये ।
नमस्करोति यस्तुभ्यमभ्यर्णशिववैभवः ॥ ५ ॥
स्तौति या न भवद्वीर्थी त्रैलोक्यत्राणदीक्षिताम् ।
सन्त्रासकाहला स्तौति सा वाणी द्विषतां यशः ॥ ६ ॥
प्रयत्नेऽपि यथा मूको नालम्भूष्णुः प्रजल्पितुम् ।
त्वत्पदानि तथा देव ! क्रोधक्लिन्नोऽपि हिंसितुम् ॥ ७ ॥
त्वन्मार्गानिर्मलात्मानः पूर्णेऽपि निभृतं जडैः।
निस्तुषाणीव शस्यानि न रोहन्ति भवे जनाः ॥ ८ ॥
प्रसाधितोऽपि रागाणां न यथा प्रवयाः प्रियः ।
तथा प्रख्यातिभाभोऽपि ब्रह्माद्या भवदङ्घ्रिणाम् ॥ ९ ॥
सौनिकानां पथा येन भूयते विश्वगर्हितैः ।
किं कुर्मः केऽपि तेनापि प्राप्ताः पूज्यतमां दशाम् ॥ १० ॥
कोऽप्यनेहाः स ते देव ! प्रसादेन भवे भवेत् ।
चेतो जुगुप्सते यत्र योषित्प्रेम्णो मिदेलिमात् ॥ ११ ॥

योषितां न यथा कोऽपि स्वकीयः कुटिलात्मनाम् ।
तथा विरक्तचित्तस्य त्रातरस्तु ममान्वहम् ॥ १२ ॥
दृष्ट्याऽप्याजन्म सर्वेषां यथा भ्रान्तिर्नभो नतिः ।
तथा कालं प्ररूढापि तत्त्वक्कृतिः कुतीर्थिनाम् ॥ १३ ॥
मम त्यक्तान्यकृत्यस्य नासाग्रन्यस्तचक्षुषः ।
अस्तु पूर्वाह्णमध्याह्नसायाह्नेषु त्वयि क्षणः ॥ १४ ॥
किञ्चित् कारुण्यमास्थाय प्रसीद जगतां पते ! ।
पचेलिमानि जायन्ते यथैनांसि चितान्यपि ॥ १५ ॥
स्वामिन्ननन्तफलकल्पतरोऽभिराम–
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

[ ७० ]

अनाधेयमनाधारमसहायमनायकम् ।
अशास्त्रचममित्रं च नमस्यामो जिनेश्वरम् ॥ १ ॥
केवलं स्तोत्रमर्हन्ति दैवतेसु हरादयः ।
सर्वथा कुत्सिताचारैरपि यैर्मोहितं जगत् ॥ २ ॥
शासितारः स्वयं येषां रागान्धमनसः सदा ।
विषयेषु विरज्यन्ते यत् ते तन्नाथ ! नौचिती ॥ ३ ॥
उपालभामहे यद्वा त्वदन्याराधिनो मुधा ।
अयं हि पन्थाः सिद्धो यन्न देवचरितं चरेत् ॥ ४ ॥

दधानो यामिमां मुद्रामन्त्यजोऽपि विलज्जते ।
देवस्य पूजयन्तस्तां विलीयन्ते न किं जनाः? ॥ ५ ॥
हराकारोऽपि चेद् याति पूज्यतां महतामपि ।
उपस्थाच्छादनक्लेशस्ततो लोकस्य दुर्जनः ॥ ६ ॥
निमील्य नेत्रे विद्वांसो द्वयं निश्चिन्वतामिदम् ।
मुक्तेरुपायास्त्वन्नीतौ परनीतौ तु संसृतेः ॥ ७ ॥
देव ! यद्यस्ति देवस्य भवतोऽन्यस्य कस्यचित् ।
देवलक्षणलेशोऽपि प्रमाणं जगती तदा ॥ ८ ॥
पन्थानौ द्वाविमौ देवनरकाव्यभिचारिणौ ।
अन्येषु प्रीतिलेशोऽपि द्वेषलेशोऽपि तु त्वयि ॥ ९ ॥
कृपाऽपि कल्पते दिष्ट्या त्वदन्यैः पापजन्मने ।
दहन्ति वीरुधोऽम्भांसि चित्रासु घनजान्यपि ॥ १० ॥
सर्वस्यात्मा महांस्तेन शम्भुः स्त्रीशस्त्रवानपि ।
देवत्वमन्यतामन्ये मन्यन्ते तस्य किं पुनः ॥ ११ ॥
प्रतीक्ष्य नृत्यतो वीक्ष्य विलज्जेऽन्तः परानपि ।
स्वयं तु केऽपि नृत्यन्ति देवाः सन्तोऽपि कौतुकम् ॥१२॥
न सूत्रयसि विश्वानि न नृत्यसि न गायसि ।
किञ्चिन्न दत्से नादत्से ततः किं मन्यसे जडैः ? ॥ १३ ॥
चाक्षुषानपि पश्यन्ति न ये भावान् यथास्थितान् ।
अतीन्द्रियं भवन्तं ते कथं पश्यन्तु तामसाः ॥ १४ ॥
स्त्रीशस्त्रगीतनृत्तादि यत् कुत्सायै महात्मनाम् ।
तदेव येषां पूजायै तेभ्यो भद्रं हितं नमः ॥ १५ ॥

स्वामिन्ननन्तफलकल्पतरोऽभिराम–
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

[ ७१ ]

यथावस्थितबोधस्य यथावस्थितवादिनः ।
अरागद्वेषमोहस्य देवस्य पथमाश्रये ॥ १ ॥
उपेक्षावान् जगद् रक्षन् कृपावान् निर्जयन् परान् ।
मध्यस्थः परमाक्रामन् दत्से कस्मै न विस्मयम् ? ॥ २ ॥
प्रशान्तश्चेत् किमन्येषां मर्माणि तुदसे गिरा ।
निराकाङ्क्षोऽसि चेद् विश्वं केनोपकुरुषेऽधुना ॥ ३ ॥
प्रत्यूहं जयतात्मानमशेषं रक्षता परम् ।
निर्जिता यत् त्वया त्रातः ! परे चित्रं न कस्य तत् ?॥ ४ ॥
न सैन्यानि न दुर्गाणि नोपाया न च हेतयः ।
एवमेव द्विषोऽशेषान् जयतस्ते नवो नयः ॥ ५ ॥
सर्वत्र मुदिता मैत्री कृपोपेक्षा च जन्तुषु ।
इयं वागपि नान्येषामनुष्ठाने तु का कथा ? ॥ ६ ॥
आत्मैकनिष्ठे निःशेष........चिन्तापराङ्मुखे ।
न जानीमः कुतोऽप्यर्थादर्थिनस्त्वयि तात्त्विकाः ॥ ७ ॥
उदास्स्व यदि वा कुप्य प्रसीद यदि वा मयि ।
अहं पुनः शिवायापि प्रपद्ये नार्थितां त्वयि ॥ ८ ॥
आकृष्य पात्यमानानां विषयैर्व्यसनाम्बुधौ ।
स्वामी त्रिलोकलोकस्य त्राणं देव ! त्वमेव नः ॥ ९ ॥

न विस्मयो यदर्थन्ति त्वादृशो वीतविप्लवाः ।
यदिन्दुः पार्वणो रम्यस्तत्र किं नाम कौतुकम् ? ॥ १० ॥
इयन्तं कालमुद्दण्डजाड्यपिण्डान्धमानसः ।
त्रातर्भ्रान्तोऽस्मि संसारकान्तारे सत्यपि त्वयि ॥ ११ ॥
पुण्यनैपुण्यसम्प्राप्यः साक्षात्कारः कुतस्त्वयि ।
स्वप्नेऽपि देव ! भूयान्मे त्वद्दर्शनमहोत्सवः ॥ १२ ॥
क्षीयन्तां नाम पापानि भवत्पादसपर्यया ।
पुण्यान्यपि यदायान्ति क्षयं तेनाऽस्मि विस्मितः ॥ १३ ॥
प्रसीद सीदते मह्यमेधि दीने मयि प्रभुः ( भो ! ) ।
समाधिव्याधिविध्वस्तं........देव ! पालय ॥ १४ ॥
मादृशां पापबीजानां स्थानं क्वापि न विद्यते ।
वयं पूत्कुर्महे तेन भूयो भूयस्तवाग्रतः ॥ १५ ॥
स्वामिन्ननन्तफलकल्पतरोऽभिराम-
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

---

[ ७२ ]

क्षमाभृतेऽर्हते तस्मै नमो विस्मयवेश्मने ।
जाड्यतापहरी यस्मात् प्रादुरास सरस्वती ॥ १ ॥
विस्मयाय परं तेषां येषां त्वं नासि संस्तुतः ।
चित्राय तारकास्तेषां साक्षाद् येषां न भानुमान् ॥ २ ॥

मिथ्यात्वान्धमनाः कालमियन्तं नाथ ! सर्वथा ।
कोऽस्मि कुत्रास्मि कस्यास्मि नेदमस्मि प्रपन्नवान् ॥ ३ ॥
त्वद्वाक्यभानुभिर्ध्वनसान्द्रमोहतमःस्थितिः ।
इदानीं स्वं परं स्थानमस्थानं चास्मि बुद्धवान् ॥ ४ ॥
विषं तैर्भक्षितं मूर्ध्नि पातितः स्वे महाशनिः ।
झम्पा प्रदत्ता कल्पाग्नौ नासि यैर्देव ! सेवितः ॥ ५ ॥
सैन्यानि सम्पदः पूजा वैभवानि महोत्सवाः ।
तेषां हर्षाय कल्पन्तां ये देव ! भवतो द्विषः ॥ ६ ॥
जातास्ते किं प्रवृद्धाः किं मर्त्याः किं सचक्षुषः ? ।
वीतसंसारसञ्चार ! त्रातर्यैर्नासि वीक्षितः ॥ ७ ॥
येषामन्हाय देहेऽपि परित्यागोत्सुकं मनः ।
तेषां त्वदङ्घ्रिनां नाथ ! का नामास्था धनादिषु ? ॥ ८ ॥
गुणिनोऽपि रजोदेश्या न्यायिनोऽपि तिरस्कृताः ।
वयं तथापि........विरज्यामो न पाप्मनः ॥ ९ ॥
पाप्मानः केऽपि वैरस्यं त्वद्वाग्भिरपि बिभ्रते ।
कूपोद्भवानि यादांसि क्लाम्यन्ति क्षीरनीरधौ ॥ १० ॥
त्वत्प्रसादेन जानीमः सन्तोषसुखसौरभम् ।
तथापि चेतोऽसन्तोषं दधाति करवाम किम् ? ॥ ११ ॥
द्विषन्तस्त्वां निमज्जन्तु कामं पापेषु कर्मसु ।
तव भृत्या निमज्जामो यद्वयं तत्र कौतुकम् ॥ १२ ॥
भ्राम्यन्तु नाम संसारे पराञ्चस्तव शासनात् ।
शासनं ते समारूढा भ्राम्यामः किं वयं हताः ? ॥ १३ ॥

त्वदाज्ञां नानुतिष्ठन्ति यद् द्विषस्ते तदौचिती ।
यद् वयं नानुतिष्ठामस्त्वद्भुजिष्याः स को नयः ? ॥१४॥

अर्हअर्हन्निति त्रातस्त्रातुं पूत्कुर्वतो मम ।
समं समन्ततः कण्ठः पापं पुण्यं च शुष्यतु ॥ १५ ॥

स्वामिन्ननन्तफलकल्पतरोऽभिराम-
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

[ ७३ ]

सजन्मानमजन्मानं स्थावरं नश्वरात्मकम् ।
विश्वरूपमरूपं च देवं जिनपतिं स्तुवे ॥ १ ॥

सतामुन्मीलयन् दृष्टिं पापपङ्कं त्वशोषयन् ।
भानुमान् भवतः कोऽन्यो लोकस्यास्य तमस्वतः ? ॥ २ ॥

कषायवह्निना विश्वे ज्वलत्यस्मिन् समन्ततः ।
त्वमेव पुष्करावर्त्तो देशनासारमावहन् ॥ ३ ॥

कुतीर्थयायिनां नाथ ! संसारापारवारिधौ ।
निर्यामको भवानेव नृणां सर्वपथीनदृक् ॥ ४ ॥

त्वदाधारमिदं येन विश्वं विश्वं चराचरम् ।
त्वमेव देव ! मन्यन्ते ततस्तत्त्वस्पृशो वियत् ॥ ५ ॥

अनन्तरत्नभाजोऽपि रत्नत्रयवतो मम ।
समुद्रास्ते जडात्मानः प्रकृष्यन्तां कुतः प्रभो ! ॥ ६ ॥

त्वत्तः समुद्गतः प्राप्तं रत्नत्रयमिदं मम ।
प्राणात्ययेऽपि नो शक्यं हर्तुमिन्द्रियदस्युभिः ॥ ७ ॥
त्वन्नीत्या कण्टकान् सोढुं गाढोत्कण्ठो यथास्म्यहम् ।
तथा न सम्पदो भोक्तुं भूर्भुवःस्वःसमुद्भवाः ॥ ८ ॥
तथा त्वयि न मे रागो मोक्षदानैकदीक्षिते ।
त्वदन्येषु यथा द्वेषो नाथ ! नारकवर्त्मसु ॥ ९ ॥
भवत्सिद्धान्तपीयूषपानसौहित्यसोत्सवः ।
लज्जते गर्हते विद्वान् ब्रह्मादीनां विचेष्टितैः ॥ १० ॥
दैन्यं मर्त्येषु कुर्वन्ति मादृशाः किं सति त्वयि ।
ककुभो भासयत्यन्हां पत्यौ दीपेषु का स्पृहा ? ॥ ११ ॥
देव ! त्वन्मार्गसंवादिदुःखं प्राप्यापि ये हताः ।
न पापेषु विषीदन्ति पशवस्ते न मानवाः ॥ १२ ॥
शुभोदर्कां क्रियां कर्तु नास्मि लब्धामपि क्षमः ।
त्वन्निश्चयः फलं किञ्चित् कुर्यात् कुर्यान्न वा न वा ॥१३॥
निषिद्धाधानसोत्कण्ठान् मादृशो विहितद्विषः ।
त्वत्तस्त्राणैकहेवाकान् को नामाद्रियतां परः ? ॥ १४ ॥
शाधि नः कश्मलाचारानेधि नः शाश्वतः पतिः ।
आन्तरान् जहि नः शत्रून् देहि नः स्थिरमन्तिकम् ॥१५॥
स्वामिन्ननन्तफलकल्पतरोऽभिराम–
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

[ ७४ ]

क्षीणापायोऽपि निश्शेषविशेषोपेयसिद्धिभाक् ।
देव ! पुष्णातु विश्वस्य वीतरागो विरागताम् ॥ १ ॥
न पाप्मनो विरज्यन्ते शासकेन त्वयाऽपि ये ।
राज्येऽपि भास्वतस्तेषां ध्वान्ताभोगभृतैव भूः ॥ २ ॥
शाम्यन्नपि भवद्वाह्यः शमं नायाति तादृशम् ।
न सा कूपोदकैश्छाया वीरुधां या घनोदकैः ॥ ३ ॥
तपस्यन् शाश्वतं ज्योतिः श्रद्दधानोऽपि पश्यति ।
मर्मभेदिषु घर्मेषु वर्षास्वपि घनोदकम् ॥ ४ ॥
उपसर्गान् स्वयं सोढा बाध्यते न भवोर्मिभिः ।
हिमानीं बाधितुं देव ! नाम्भोमग्ना तरस्विनी ॥ ५ ॥
आकालं यैर्न लब्धोऽसि ते शोच्या एव जन्तवः ।
लब्ध्वापि यैः पुनस्त्यक्तः कस्तेषां ब्रूहि निर्णयः ? ॥ ६ ॥
निधीनालोक्य जाताः स्म सद्यस्तद् वयमन्धलाः ।
यदासाद्य भवान् भर्ता समीचीनं न सेवितः ॥ ७ ॥
महान्तो हन्तकारेऽपि यद् वैरिमुखवीक्षिणः ।
त्वदाज्ञालोपकोपस्य स ध्रुवं दण्डडिण्डिमः ॥ ८ ॥
प्रसीद कुरु कारुण्यं दीनचूडामणौ मयि ।
एनांसि बिभ्रतां नाशमेधांसीव कृशानुना ॥ ९ ॥
सम्पदो विपदः सर्वा विशीर्यन्ते यथा मम ।
तथा प्रतिक्रियां काञ्चित् कर्तुं संरम्भमुद्वह ॥ १० ॥

भूयसीभिः समुद्वेगं याञ्चाभिर्नाथ ! मा कृथाः ।
पाल्यपालनकष्टा हि महीयःपदसम्पदः ॥ ११ ॥
संवरीतुं हृषीकाणि स्वस्वगोचरवर्त्मनः ।
ततो भवान् भवानेव ज्ञातुमौपयिकं क्षमः ॥ १२ ॥
तैस्तैः स्वकर्मभिर्यान्तं कृतान्तवदनोदरे ।
स्वं स्वकीयं च शोचन्ति भवन्मार्गबहिर्मुखाः ॥ १३ ॥
पथा केन भवस्यास्य स्तोत्रमाधातुमुत्सहे ।
भ्राम्यतो यत्र लब्धोऽसि दुरापस्त्वं मया पतिः ॥ १४ ।
अनेहसे नमस्तस्मै सर्वकल्याणसंसदे ।
त्रातः ! स्यां यत्र निःशेषसङ्गभङ्गसमुत्सुकः ॥ १५ ॥
स्वामिन्ननन्तफलकल्पतरोऽभिराम–
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥



७९ ]

रत्नत्रयनिदानाय दोषत्रयविनाशिने ।
जगत्त्रयनमस्याय देवाय प्रणिदध्महे ॥ १ ॥
स नाम कां गतिं यायात् यस्ते हास्यादपि द्विषन् ।
सोऽपि वा कां गतिं यायात् यस्ते हास्यादपि स्मरेत् ॥२॥
समूलकाषं कषतः स्वस्यान्यस्य च शात्रवम् ।
तवैव परमां प्रापुः प्रवृद्धिं शमसम्पदः ॥ ३ ॥

परेभ्यस्ते विशेषोऽरितक्षणीयो जडैरपि ।
विवेकिमानिनोऽप्येतं लक्षयन्ति न केऽपि किम् ? ॥ ४ ॥
अन्यशिष्याः प्रतिष्ठातुं खपुष्पमपि वाग्मिनः ।
तव शिष्या पुनर्देव ! खरत्वमपि नो वयम् ॥ ५ ॥
त्वया प्रपञ्चिताः सर्वे पन्थानः स्यात्पदाङ्किताः ।
भारती भवतोऽन्येषां किमेकान्ता त संसती (?) ॥ ६ ॥
अन्तर्बहिश्च वस्तूनि भवन्मार्गानुगानि चेत् ।
तदा प्रपद्यतां लोकः का यास्था वास्तवे पथि ? ॥ ७ ॥
अन्यायैकजुषो मन्दान् वीक्ष्य मङ्गलशालिनः ।
भवान्तरं भवन्तं च पुण्यं चास्मि प्रपन्नवान् ॥ ८ ॥
पापैकबद्धकक्षोऽपि लक्ष्म्या यत्कोऽपि वर्द्धते ।
त्वदङ्घ्रिभक्तिलेशस्य विलासः स विजृम्भते ॥ ९ ॥
त्वयि भक्तेस्ततः शक्तिर्यदन्यायेऽपि सम्पदः ।
भिषजः कोऽनुभावोऽस्तु पथ्यलेहिनि देहिनि ॥ १० ॥
भवद्भक्त्यैकनिष्ठेन बाह्यानुष्ठानविद्विषा ।
तदकृत्यं कृतं किञ्चित् प्रकम्पे यत् स्मरन्नपि ॥ ११ ॥
प्रकाशनं पुरोऽन्येषु कथाऽपीयं महीयसी ।
स्वस्य दुश्चरितान्यस्मि विज्ञातुं नात्मनाप्यलम् ॥ १२ ॥
श्रोत्रशूलं महापापकारि यद्वाऽन्यदुच्यते ।
अस्मत्पापप्रकाराणां विदुरो न भवानपि ॥ १३ ॥
त्वद्भक्तिलेशमात्रेण काचिद् यदि परंगतिः ।
अन्यथा नित्यमग्नोऽस्मि देव ! सन्तमसाम्बुधौ ॥ १४ ॥

स्वतन्त्रो देव ! भूयासं सारमेयोऽपि वर्त्मनि ।
मा स्म भूवं परायत्तस्त्रिलोकस्यापि नायकः ॥ १५ ॥
स्वामिन्ननन्तफलकल्पतरोऽभि**राम**—
**चन्द्रा**वदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

[ ७६ ]

मैत्री-प्रमोद-कारुण्यमाध्यस्थ्यमहितोदयम् ।
स्मरामि क्लेशनाशाय जिनेशस्य पदद्वयम् ॥ १ ॥
भवामि दीनः प्रत्यर्थं भूयसामीश ! जन्मिनाम् ।
निश्शेषहेतोरेकस्य हताशो न पुनस्तव ॥ २ ॥
लक्ष्मीलेशकृतो नीचानप्युपासितुमुत्सहे ।
तवोपास्तौ पुनर्मन्दः सर्वसम्पद्विधायिनः ॥ ३ ॥
त्वत्पथेनास्तु मैत्री मे पूर्णमन्यैर्जगज्जनैः ।
प्रमोदो विरतौ भूयाद् दूरे तिष्ठन्तु सद्गुणाः ॥ ४ ॥
भीतार्त्तदीनैः किं लोकैः कृपा स्वात्मनि जृम्भताम् ।
कृतं क्रूरैरुपेक्षास्तु कामिनीनेत्रकर्मसु ॥ ५ ॥
पत्तिस्तेऽहं पतिस्त्वं मे सैषा मे भावना सदा ।
एकत्वभावना तेषां येषां त्वं नासि नायकः ॥ ६ ॥
त्रिलोकैकपतिर्नाथ ! यस्य मे शरणं भवान् ।
सोऽहं हास्यः कथं न स्यां नास्ति मे शरणं ब्रुवन् ॥ ७ ॥

विश्वस्माद्विश्वतोऽन्यत्वं त्वत्तः पुनरनन्यताम् ।
य एव भावयेन्नाथ ! स एव शिवमश्नुते ॥ ८ ॥
अहं ममेति सम्मोहो येषां जीर्णस्तवोक्तिभिः ।
कृतिनस्ते न बाध्यन्ते स्वस्वकीयविपत्तिभिः ॥ ९ ॥
स्वाम्यं स्वतां च गच्छन्तस्ते विषीदन्ति किं बुधाः ।
भवद्वावाक्यसुधासारैर्येषामार्द्रं सदा मनः ॥ १० ॥
यत्पूर्वं पूजितो नासि न ध्यातो न च संस्तुतः ।
तेनास्मि पाप्मना प्राप्तस्त्रातः ! क्रूरेषु दासताम् ॥ ११ ॥
नास्म्यलं याचितुं किञ्चिल्लज्जमानः स्वपाप्मभिः ।
तथापि बोधिमाधेयाः कथञ्चित् क्वापि जन्मनि ॥ १२ ॥
तत्कर्म न कृतं किञ्चिदत्र जन्मनि शोभनम् ।
बोधिमात्रेऽपि येनाशां हताशः करवाण्यहम् ॥ १३ ॥
न नाम संयमं प्राप्य न कृतं संयमोचितम् ।
तत् किञ्चन कृतं देव ! यत्पापस्यापि नोचितम् ॥१४॥
एकोऽहं देव ! दोषाणामशेषाणां महाखनिः ।
निवेदिते यथावस्तु साम्प्रतं यद् विधेहि तत् ॥ १५ ॥
स्वामिन्ननन्तफलकल्पतरोऽभिराम-
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥



[ ७७ ]

स्वातन्त्र्यश्रीपवित्राय परमब्रह्ममूर्त्तये ।
साधिताशेषसाध्याय नमो भगवतेऽर्हते ॥ १ ॥

त्रातस्त्वं त्राणमाधारः सम्पत्तिः प्राभवं गतिः ।
त्वमेव देव ! विश्वस्य विश्वस्याप्यस्य जीवितम् ॥ २ ॥

प्रशान्तपावनाकारे त्वयि येषामदेवधीः ।
येषां हुताशसङ्कल्पः पार्वणे श्वेतरोचिषि ॥ ३ ॥

न प्रसीदसि रागान्धे न कुप्यसि विरागिणि ।
शुभाशुभे तथापिस्तस्त्वत्तो रक्तविरक्तयोः ॥ ४ ॥

इदं ध्यानमयं योगः सा श्रद्धा सा च भावना ।
यदन्तः सततं त्रातस्त्वदाज्ञापालनव्रतम् ॥ ५ ॥

कामधेनुर्वशे तस्य कल्पद्रुस्तस्य किङ्करः ।
त्वं भवाम्भोधिमग्नस्य यस्य हस्तावलम्बनम् ॥ ६ ॥

कामाः काममभी तस्य पांशुदेश्याः सुमेधसः ।
शाश्वतानन्दमाशंसुर्यस्यासि त्वमधीश्वरः ॥ ७ ॥

तस्यास्य जन्मनः कुर्मो निजस्य कतिशो बलिम् ।
एकान्तश्रद्धतां प्राप यत्र नस्त्वयि मानसम् ॥ ८ ॥

तव स्तवनयोग्यायां यदि किञ्चित् फलं ततः ।
त्वदन्यस्य गुणान् स्तोतुमाकाले स्यामवागहम् ॥ ९ ॥

तथा न चूडारत्नस्य जङ्घालैः किरणाञ्चलैः ।
शोभते भालभूर्भूम्ना त्वत्प्रणामकिणैर्यथा ॥ १० ॥

अमूर्द्धा तत्र भूयासं वासवस्यापि जन्मनि ।
प्रणामः क्रियते यत्र भवतोऽन्यस्य कस्यचित् ॥ ११ ॥
जानामि यद् विधाताऽसि नोपकारापकारयोः ।
त्वामेव सेवितुं देव ! स्पृहयालुस्तथाप्यहम् ॥ १२ ॥
न ते कोऽपि न कस्यापि महेश ! स भवान् भवान् ।
भूर्भुवःस्वस्तथाप्येतत् त्वत्पादाङ्कितमानसम् ॥ १३ ॥
ममाऽपवित्रो मूर्द्धाऽयं त्वदन्यनतिकल्मषैः ।
त्वत्प्रणामहुताशेन विशुद्धिं लभतां मुहुः ॥ १४ ॥
मुक्तिशुक्तिनिपेयस्य परब्रह्मरसस्य नः ।
सौहित्यसम्पदं देव ! प्रसीद भव दक्षिणः ॥ १५ ॥

स्वामिन्ननन्तफलकल्पतरोऽभिराम-
चन्द्रावदातचरिताञ्चितविश्वचक्र ! ।
शक्रस्तुताङ्घ्रिसरसीरुह ! दुःस्थसार्थे
देव ! प्रसीद करुणां कुरु देहि दृष्टिम् ॥ १६ ॥

[ ७८ ]

श्रीविजयसिंहाचार्यविरचितं

## श्रीनेमिजिनस्तवनम् ।

नेमिः समाहितधियां यदि दैवयोगा-
च्चित्ते परिस्फुरति नीलतमालकान्तिः ।

तेषां कुठार इव दूरनिबद्धमूल-

दुष्कर्मवल्लिगहनं सहसा च्छिनत्ति ॥ १ ॥

जय त्वं देवेश ! त्रिभुवनपते ! शान्तहृदय !

त्रिलोकीसङ्कल्पद्रुमवरकृपाकार ! वरद ! ।

समुद्धर्तुं मिथ्याजलधिलहरीतः क्षणमितो

मयि द्रोणीदीर्घां जिन ! सकरुणां निक्षिप दृशम् ॥ २ ॥

पूजापत्रचयैर्निरन्तरलसत्पत्रावलीमण्डितो

नानावर्णसुगन्धिपुष्पनिकरैः सर्वत्र यः पुष्पितः ।

पादान्ते परिणामसुन्दरफलैः सम्भूषितः सर्वतो

नेमिः कल्पतरुः सतामविकलं देयात् तदग्र्यं फलम् ॥३॥

आश्चर्यं भुवनैकभूषण ! भवान् कल्पद्रुमः पण्डितैः

सिक्तो भक्तिजलेन तो(ते)षु कुरुते थो(क्षे)माङ्कुरं यत् किल ।

एतस्मादपि चित्रमेतदपरं नेमे ! दुरापं सुरै-

रुच्चैर्यत् तदपि प्रशान्तमतिभिर्नम्रैः फलं प्राप्यते ॥ ४ ॥

उद्यन्मोहमहान्धकारतरणिस्त्रैलोक्यचिन्तामणि-

र्नित्यानन्दपदक्रयाणविपणिर्लोकाग्रभूषामणिः ।

निर्वाणैकपुरप्रयाणसरणिः सज्ज्योतिरेकारणी

दिश्यान्नेमिजिनः स किङ्करसुरश्रेणिः सतां मङ्गलम् ॥ ५ ॥

धन्यैः कैश्चन धीरसंस्तुतगुणः पापैः पुनर्नन्दित-

स्तुल्या तेषु तव प्रवृत्तिरिति ते श्लाघ्यैव नीरागता ।

तेषां यत् तु शुभाशुभेन घटना तत्रासि हेतुः कथं

को जानात्यथवा जगत्त्रयपते ! तत्त्वं जिन ! त्वादृशम् ॥६॥

देव ! त्वं गतबन्धनः प्रविदलन्निःशेषकर्मस्थितिः
पूर्वस्वीकृतभग्नदुष्टफलकः पोतस्तथाप्यद्भुतम् ।
त्वामाश्रित्य गतागतैर्विरहितं संसारवारांनिधिं
तीर्णाः केऽपि तरन्ति केचन पुनश्चित्रं तरिष्यन्ति च ॥७॥
रामाक्रान्ततनुस्तथा बहुमरुत्संसर्गतश्चञ्चलः
किञ्चान्तर्ज्वलति प्रकाममपरं कुग्राहसत्त्वाकुलः ।
अम्भोधिश्चुलुकाकृतिः कथमसौ त्रैलोक्यविस्तारिण-
स्ते साम्यं लभते सुवृत्तविलसन्मुक्तालयो यद्यपि ॥ ८ ॥
मूर्तिस्ते जगतां महार्त्तिशमिनी मूर्त्तिर्जनानन्दिनी
मूर्त्तिर्वाञ्छितदानकल्पलतिका मूर्त्तिः सुधास्यन्दिनी ।
संसाराम्बुनिधिं तरीतुमनसां मूर्त्तिर्दृढा नौरियं
मूर्त्तिर्नेत्रपथं गता जिनपते ! किं किं न कर्तुं क्षमा ? ॥९॥
किं तत्रास्ति निरन्तरं न भवतः सङ्गः कुरङ्गीदृशां
किं वा तत्र विभो ! पयोधरपरिष्वङ्गोऽपि नाल्हादकः ? ।
यन्मामत्र विहाय निर्वृतिमना नाथोज्जयन्ते गतः
पायाद् वोऽभिहितः स भोजसुतया देवः शिवानन्दनः ॥१०॥
अत्यन्तं यदि जीवितादपि विभो ! नीरागता वल्लभा
तत् किं सिद्धवधूसमागमविधौ त्वं खिद्यसेऽहर्निशम् ? ।
यद्येतद् द्वितयं प्रियं वद मया कस्तेऽपराधः कृतो ?
जल्पन्ती गणितोग्रसेनतनया नो येन सोऽस्तु श्रिये ॥११॥
श्रीमन्नीलतमालकज्जलघनच्छायः सुधाशीतलो
व्यालोलक्षणदीर्घिकः प्रतिपदं हेमाम्बुजैः पूजितः ।

त्वं संसारमरौ निरन्तरमहादुःखाकुले देहिनां
मार्गः स्वर्गपुरस्य नाथ ! विततः किंवाऽपवर्गस्य च ॥१२॥
शुक्लध्यानसरो विनीलनलिनाकारोऽपवर्गद्रुम-
च्छायाबन्ध इवैककेवलिदृशोर्मध्ये स्फुरत्तारकः ।
नीलाश्मप्रभवत्तदेकममलं पात्रं परं ज्योतिषः
कुर्याद् योगबलच्छविः सुकृतिनां नेमिर्विशुद्धं पदम् ॥१३॥
आकर्णायतयोर्विनीलनलिनश्वेताम्बुजाप्तश्रियोः
किञ्चिन्मन्थरयोर्मनाग् मसृणयोरुद्वृत्तसत्तारयोः ।
कारुण्यामृतसारिणीसरलयोः संसन्धयोः सर्वदा
नेमेर्यामि बलिं दृशोऽस्तु वसुधाश्वेतच्छटाच्छाययोः ॥१४॥
त्रैलोक्यालम्बदण्डः परमपदगृहारोहनिःश्रेणिदण्डः
कन्दर्पाघातदण्डो भवजलधिपतेर्देहिनां सेतुदण्डः ।
दोर्दण्डः पातु नेमेर्नरकपुरमहाद्वाररोधैकदण्डः
सद्धर्माधारदण्डो हरिनिबिडकरात् कर्षणान्दोलदण्डः ॥१५॥
एते मूढधियो वदन्ति किमपि स्वामिन् ! मदीयं मन-
स्त्वेवं कल्पयते त्वमेव भुवने देवाधिदेवः परम् ।
यत्रैतानि जगन्ति जातविविधव्यावर्त्तनोद्वर्त्तन-
व्यापाराणि परिस्फुरन्ति सततं विज्ञानरूपे त्वयि ॥१६॥
रागद्वेषविसंस्थुलेन मनसा यत्किञ्चिदासेवितं
जन्मन्यत्र परत्र वा गतिवशात् तैस्तैरुपायैः स्तुमः ।
तत् सर्वं जिनचन्द्र ! सर्वगमहाज्योतिःस्वरूपे त्वयि
प्रत्यासन्नमुपागते हृदि कथं बध्नाति नित्यस्थितिम् ॥१७॥

यस्यते शशिभास्करप्रभृतयः सूक्ष्माणुगः सर्वगं
यल्लोकत्रयभास्करद्युति पुनः सूक्ष्मं न यद्वीक्ष्यते ।
यत्कर्मेन्धनदाहदारुणमिदं निर्वाणगं देहिनां
तज्ज्योतिर्जगदेकवन्द्य ! गुणिभिस्त्वं योगिभिर्गीयसे ॥१८॥
यत्रैष स्मरभिल्लभल्लिनिकरः कल्पान्तकालानल-
स्पर्द्धिक्रोधदवानलः पुनरियं यस्मिन् जरा राक्षसी ।
यत्रायाति पुरो महाभयकरः पञ्चत्वपञ्चानन-
स्तेषां तद् भवकाननं भयकरं त्राता न येषां भवान् ॥१९॥
देवाकृष्य करेण केसरिपदं दन्ती कपोलस्थलीं
कण्डूयत्यहिरेष बभ्रुपुरतो मार्गं निरुध्य स्थितः ।
व्याघ्रं व्यात्तविशालवक्त्रकुहरं जिघ्रत्यजस्रं मृगो
यत्रैवं पशवः प्रशान्तमनसस्तामर्थये त्वद्भुवम् ॥२०॥
चेतस्तावदपारनिर्मलगुणाम्भोधौ निमग्नं मुदा
चक्षुस्त्वद्वदनावलोकनवशाद् बाष्पाम्बुपूरप्लुतम् ।
नो वाचामिह मादृशामहरहः प्राप्तोऽप्यनल्पैनसा
न ध्यातो न विलोकितो न च जिन ! स्तोत्रैः स्तुतः स्वेच्छया२१
निःसङ्गोऽपि निरुत्सुकोऽपि निरहङ्कारोऽपि निर्वागपि
त्यक्त्वा शेषममत्वबुद्धिरपि यत्त्वं वीतरागोऽपि सन् ।
त्वं स्वामित्वमनिन्दितो गुरुरसि त्वं मे पिता जीवितं
मिथ्यास्मिन्नपि चेन्ममास्ति गदिते त्वन्मे प्रमाणं भवान् ॥२२॥
सम्यग्ज्ञानविहीनमूढमतयस्तत्त्वानभिज्ञा वयं
तत्त्वप्रीतिमतो नरस्य नियतं मुक्तिश्चरित्रात्मनः ।

हेतुः सर्वसमीहितस्य भवतः पादप्रसादः परं
तस्माद् देव ! भवे भवे मम भवेत् त्वत्पादसेवासुखम् ॥२३॥
इति जगति दुरापाः कस्यचित् पुण्यभाजो
बहुसुकृतसमृद्ध्या सम्भवन्त्येव वाचः ।
जिनपतिरपि यासां गोचरे विश्वनाथो
दुरितविजयसिंहः सोऽस्तु नेमिः शिवाय ॥ २४ ॥

---

[ ७९ ]

श्रीजिनवल्लभसूरिप्रणीतं

## श्रीपार्श्वजिनस्तोत्रम् ।

पायात् पार्श्वः पयोदद्युतिरुपरि फणिस्फारफुल्लत्फणालीं
बिभ्रद् विस्फूर्जदूर्जस्वलमणिकिरणासूत्रितेन्द्रायुधां वः ।
संरूढप्रौढकर्मद्रुमवनगहनप्लोषपुष्यद्विशुद्ध-
ध्यानाग्निज्वालमालानुकृतिसकृतया सप्तधा प्रोल्लसन्ती ॥१॥
सद्भक्तिव्यक्तियुक्तत्रिदशपतिनमन्मौलिमन्दारदाम-
श्च्योतत्किञ्जल्ककल्कव्यतिकरकबरोदारपादारविन्द ! ।
दृष्ट्या पीयूषसृष्ट्या दधदखिलजनव्रातमातङ्कमुक्तं
भव्यानव्याजमव्याद् भवदवदवथून्मन्थितान् पार्श्वनाथः ॥२॥
सम्पत्पूर्णं तु किन्तु प्रमदमयमथो निर्मितं शर्मणे हो
रोहत्कल्याणवल्लिप्रचयमुत भवन्नाकिलोकावतारम् ।

इत्थं सन्देहदोलां दधदधिकमभात् पञ्चकल्याणकेषु
त्रैलोक्यं यस्य स स्याज्जिनपतिरपतिः सर्वकल्याणकृद् वः ॥३॥
श्रीमान् यः पापतापप्रशमहिमरुचिः सप्तभिः पन्नगेन्द्र-
स्फारोत्फुल्लस्फटाभिः स्फुटफलितमणिप्रांशुरश्मिच्छटाभिः ।
भाति भ्रान्तिच्छिदायै जगति सुनयसत्तत्त्वसत्सप्तभङ्गी-
सङ्ख्याव्याख्यानबद्धक्षण इव स जिनः श्रागनिष्टं पिनष्टु ॥४॥
भक्तिप्राग्भारनम्रामरविसरशिरःश्रेणिचञ्चत्किरीट-
स्पष्टोच्चैःकोटिकाषोज्ज्वलचलननखादर्शसङ्क्रान्तकायम् ।
सेवासज्जं यदग्रे त्रिजगदपि विभात्युग्रसंसारशत्रु-
त्रासान्निर्भीतदेशश्रितमिव स विभुर्व्यस्यतु व्यापदं वः ॥५॥
उन्मीलल्लीलमुद्यल्ललितमुदियदस्तोकबिब्बोकमुच्चैः
साचिप्राञ्चत्कटाक्षच्छटमधिकभवद्विभ्रमारेचितभ्रु ।
स्वःस्त्रैणं नाक्षिपद्यं स्मरपरिचिदिति व्यक्तश्रृङ्गारभावं
भव्याधिव्याधिबन्धं हरतु स भगवान् भग्नकन्दर्पदर्पः ॥६॥
दैन्यादन्योन्यवृत्त्यानुकृतपरतया त्रासतो हासतो वा
देव ! प्राहुर्नमस्ते इति पदमपि ये केऽपि तेऽपि क्रमेण ।
स्वःकान्तोन्मुक्तमुक्तावलिललितकटाक्षच्छटालक्ष्यलक्ष्या
मङ्क्षु स्युर्मोक्षलक्ष्मीकुचकलशतटीतारहारप्रकाशाः ॥७॥
स्फूर्जन्मोहप्ररोहच्छिदुरपरशुना सद्य उद्दामधाम्ना
नाम्नाम्नातेन यस्य त्रिजगति निखिलोपद्रवा विद्रवन्ति ।
नन्द्याद् वन्दारुवृन्दारकनिकरनमन्मस्तकस्तोमशस्त-
श्रस्तास्तोकप्रसूनस्तबकितचरणोपान्तपार्श्वः स पार्श्वः ॥ ८ ॥

दृब्धं विमुग्धमतिना **जिनवल्लभेन**
ये स्पष्टमष्टकमदः समुदः पठन्ति ।
भूयोऽनुभूय भवसम्भवसम्पदं ते
मुक्त्यङ्गनास्तनतटे सततं लुठन्ति ॥ ९ ॥

---

[ ८० ]

**श्रीअभयदेवसूरिविरचितं**

## श्रीमहावीरस्तोत्रम् ।

जइज्जा समणो भयवं महावीरे जिणुत्तमे ।
लोगनाथे सयंबुद्धे लोगंतिअविबोहिए ॥ १ ॥
वच्छरं दिण्णदाणोहे संपूरियजणासए ।
नाणत्तयसमाउत्ते पुत्ते सिद्धत्थराइणो ॥ २ ॥
चिच्चा रज्जं च रिट्ठं च पुरं अंतेउरं तहा ।
निक्खमित्ता अगाराओ पव्वइए अणगारियं ॥ ३ ॥
परीसहाण नो भीए भेरवाण खमाखमे ।
पंचहा समिए गुत्ते बंभयारी अकिंचणे ॥ ४ ॥
निम्ममे निरहंकारे अकोहे माणवज्जिए ।
अमाए लोभनिम्मुक्को पसंते छिन्नबंधणे ॥ ५ ॥
पुक्खरं व अलेवे अ संखो इव निरंजणे ।
जीवे वा अप्पडिग्घाए गयणं व निरासए ॥ ६ ॥

वाएवा अपडिबद्धे कुम्मो वा गुत्तइंदिए ।
विप्पमुक्को विहंगुव्व खग्गिसिंगव्व एगगे ॥ ७ ॥
भारंडे वाऽपमत्ते य वसहेवा जायथामए ।
कुंजरो इव सोंडीरे सिंहो वा दुद्धरिस्सए ॥ ८ ॥
सागरो इव गंभीरे चंदो वा सोमलेसए ।
सूरो वा दित्ततेउल्ले हेमं वा जायरूवए ॥ ९ ॥
सव्वंसहे धरित्ति व्व सायरिंदु व्व सच्छहे ।
सुट्ठु हुअहुआसव्व जलमाणे य तेयसा ॥ १० ॥
वासी चंदणकप्पे य समाणे लेट्ठुकंचणे ।
समे पूयावमाणेसु समे मुक्खे भवे तहा ॥ ११ ॥
नाणेणं दंसणेणं च चरित्तेणमणुत्तरे ।
आलएणं विहारेणं मद्दवेणज्जवेण य ॥ १२ ॥
लाघवेणं च खंतीए गुत्तीमुत्ती अणुत्तरे ।
संजमेण तवेणं च संवरेणमणुत्तरे ॥ १३ ॥
अणेगगुणमयाइण्णे धम्मसुक्काण झायए ।
खाइक्खवएण संजाए अणंतवरकेवली ॥ १४ ॥
वीयराए य निग्गंथे सव्वन्नू सव्वदंसणे ।
देविंददाणविंदेहिं निव्वत्तियमहामहे ॥ १५ ॥
सव्वभासाणुगाए य भासाए सव्वसंसए ।
जुगवं सव्वजीवाणं छिंदिउं भिंतगोयरे ॥ १६ ॥
हिए सुहे अ निस्सेसकारए पाव्वपाणिणं ।
महव्वयाणि पंचेव पण्णवित्ता सभावणे ॥ १७ ॥

संसारसायरे बुड्डजंतुसंताणंतारए ।
जाणव्व देसियं तित्थं संपत्ते पंचमिं गइं ॥ १८ ॥
सेसिवेआयले मिच्चे अरुये अयरामरे ।
कम्मप्पवंचनिम्मुक्के जए वीरे जए जिणे ॥ १९ ॥
से जिणे वद्धमाणे अ महावीरे महायसे ।
असंखदुक्खखिण्णाणं अम्हाणं देउ निव्वुइं ॥ २० ॥
इअ परमपमोआ संथुओ वीरनाहो
परमपसमदाणा देउ तुल्लत्तणं मे ।
असमसुहदुहेसुं सग्गसिद्धीभवेसुं
कणयकयवरेसुं सत्तुमित्तेसु वा वि ॥ २१ ॥
पयडीव सइ पहाणं
सीसेहिं जिणेसराण सुगुरूणं
वीरजिणथयं एवं
पढउ कयं अभयसूरिहिं ॥ २२ ॥

---

[ ८१ ]

## श्रीजिनदत्तसूरिविरचितं

# श्रीअजितशान्तिजिनस्तवनम् ।

---

शक्रः सहस्रनयनोऽपि गुणावसानं
द्रष्टुं क्षमोऽस्ति न ययोर्जगदेकपत्त्योः

वाचस्पतिप्रभृतयोऽपि ययोरशेषान्

वक्तुं गुणानिह नहि प्रभविष्णवः स्युः ॥ १ ॥

स्तोतुं तयोर्जडमतिः किमहं क्षमोऽस्मि

निर्भरनिर्मलगुणानसमानशेषान् ।

त्वत्पादकम्पितफलप्रदपादप्राप्तेः

पूर्वं प्रसूनमिति भाविफलं तदग्रे ॥ २ ॥

अजितमजितं रागेणागःप्रणाशनपण्डितं

स्फुटमनिकटीभूतः श्रीणां स यो न विनौति तम् ।

सुरजनवन्धूनेत्रानन्दक्षणक्षणदाकरं

करणवशगो न स्वं नान्यं प्रवेत्ति स मूढधीः ॥३॥

विनमदमरराजीमौलिमालाग्रभाग-

प्रवरमरकतालीभृङ्गसंसर्गशोभि ।

यदमलपदपद्मद्वन्द्वमद्वन्द्ववन्द्यं

प्रतिदिनमनवद्यं मौलिनाऽहं वहामि ॥ ४ ॥

जिनवरमजितं करोमि भक्त्या

कृतकृतिविनुतिं कृपाकृपाणी ।

कृतकुमतभिदं हृदन्तराले

नयविनययुतोऽहमेव देवम् ॥ ५ ॥

वन्दे शान्तिं दत्तविश्वैकशान्तिं

भ्रान्तं भूयस्तैर्न यैराश्रितोऽसौ ।

संसारेऽस्मिन् दुर्निवारान्तरारि-

च्छेदच्छेकं मूर्त्तिमत्कल्पवृक्षम् ॥ ६ ॥

कासश्वासाङ्गह्रासादशननखमुखाक्षिक्षयग्रन्थिशोषा-
तीसारश्लेष्मापित्तज्वरपवनकटीकण्ठविष्टाग्रहाश्च ।
ज्वालावालेयलूताश्रवणजठरजाऽपानकुष्ठाङ्गदाहा-
न स्युस्तस्यामया योऽजितमतिविनयान्नौति शान्तिं च भक्त्या।७।
तृष्णोष्णे न पयो न मारिरपि न द्वीपी न दन्ती च नो
सिंहो न ज्वलनो न पन्नगभवा भीतिर्न भूतास्तु न ।
शाकिन्यो न विनायका न तु विषं नारातयो नाजयो
न क्षेत्राधिपगोत्रपाः प्रतिभयं कुर्वन्ति तौस्तौति यः ॥८॥
यज्जन्मस्नात्रकृत्यक्षणमिलदमरश्रेणिराजैः सहर्षं
कुम्भैः सच्छातकुम्भैरमृतघृतपयःपूरपूर्णैरपूर्णम् ।
स्वर्णाद्रौ कर्ममुद्राभिदभिमतपदप्राप्तुमेवाप्तकामैः
स्नात्रं चित्रं पवित्रं निजनिजपरिषत्सङ्गतैः संव्यधायि ॥९॥
स्नात्रं विधाय विधिना सुकृतार्थता नः
स्वर्गाधिपत्यपदवी सुरता च नीताः ।
इत्थं प्रमोदभरनिर्भरभाज्यमान-
गात्रा मुदा ननृतुरिन्द्रगणाः सदाराः ॥ १० ॥
शुचिसमयगमुत्थस्थूलकालाम्बुदाली-
स्तनितमधरयन्तो ध्वानतः किञ्चिदुच्चैः ।
मदमलिनकपोलालीनमत्तालिमाल-
द्विरदपतितुरङ्गक्काणमेके च चक्रुः ॥ ११ ॥
उत्फुल्ललोचनलसल्लघुलास्यलीला-
सस्मेरसस्मरमुखप्रजिताब्जभासः ।

पीनोन्नतस्तनभरैर्विनताङ्गभागा-

श्चञ्चद्वलित्रयविराजिततुच्छमध्याः ॥ १२ ॥

त्रिदशपतिपुरन्ध्र्यो हावभावाङ्गभङ्ग-

प्रभवकिरणकेलीकीलिताशेषलेखाः ।

यदतिरुचिररूपं प्रेक्षणाक्षेपवत्यः

सदृगभिनयनृत्यं यत्पुरो हीत्यकार्षीः(र्षुः) ॥ १३ ॥

अमानबाधारहितं जिनाजित-

ममानबाधारहितो जनोऽजितः ।

विनत्य शान्तिं भवतीरराजितं

विनत्य शान्तिर्भवतीरराजितः। । १४ ॥

इत्युद्दाममकामकामितफलान्यादातुकामः शमी

सानन्दं पठति स्तवं शमशठोऽकुण्ठः सदा कर्मठः ।

या व्याजेन विनाऽनयोस्स जिनयोः पक्षादिपर्वस्वमुं

स्वर्लब्ध्या जिनदत्तनम्रजनता शर्मास्तकर्मा भवेत् ॥ १५ ॥

**इति श्रीमदजितशान्तिजिनस्तवनम् ।**

वाचनाचार्यधुर्यस्मर्यश्रीश्रीश्रीज्ञानविमलगणिप्रवराणां पं०

श्रीवल्लभगणिनाऽलेखि । श्राविकायशोदापठनार्थम् ।

[ ८२ ]

श्रीधर्मसूरिप्रणीतं

# श्रीपार्श्वजिनस्तवनम् ।

कस्तूरीतिलकं भुवः परिभवत्राणैककल्पद्रुमः
श्रेयःकन्दनवाम्बुदस्त्रिजगतीवैडूर्यरत्नाङ्गदः ।
विघ्नाम्भोजमतङ्गजः कुवलयोत्तंसः स्ववंशश्रिया
नेत्राणाममृताञ्जनं विजयते श्रीपार्श्वनाथः प्रभुः ॥ १ ॥
उत्सर्पन्नयमङ्गलैकनिलय ! त्रैलोक्यदत्ताभय !
प्रध्वस्तामय ! विश्वविश्रुतदय ! स्याद्वादविद्यालय ! ।
उद्दामातिशय ! प्रसिद्धसमय ! प्रक्षीणकर्मोच्चय !
प्रोन्मुक्तस्मय ! भव्यकैरववनीचन्द्रोदय ! त्वं जय ॥ २ ॥
ये मूर्तिं तव पश्यतः शुभमयीं ते लोचने लोचने
या ते वक्ति गुणावलीं निरुपमां सा भारती भारती ।
या ते न्यञ्चति पादयोर्वरदयोः सा कन्धरा कन्धरा
यत्ते ध्यायति नाथ ! वृत्तमनघं तन्मानसं मानसम् ॥ ३ ॥
किं स्नात्रैरलमङ्गरागविधिभिः कार्यं किमभ्यर्चनैः
पर्याप्तं स्तुतिभिः कृतं प्रणतिभिः पूर्णं कलोद्गीतिभिः ।
वक्त्रेन्दौ तव चेच्चकोरयुवतिप्रीतिं दृशोर्बिभ्रति
स्वान्तं चेत्तव पादपङ्कजयुगे धत्तेऽलिलीलायितम् ॥ ४ ॥

कान्तिः कापि कपोलयोर्विमलयोः श्रीः कापि सौम्ये मुखे
च्छाया कापि विशालयोर्नयनयोर्भा काऽपि कण्ठेऽनघे ।
शोभा काऽप्युरसि स्थिरे सरलयोर्बाह्वोः किमप्यूर्जितं
त्रैलोक्यैकशरण्ययोश्चरणयोस्ते देव ! किं ब्रूमहे ॥ ५ ॥
किं पीयूषमयी किमुन्नतिमयी किं कल्पवल्लीमयी
किं सौभाग्यमयी किमक्षरमयी किं विश्वमैत्रीमयी ।
किं वात्सल्यमयी किमुत्सवमयी किं लब्धिलक्ष्मीमयी
दृष्ट्वेत्थं विमृशन्ति ते सुकृतिनो मूर्त्तिं जगत्पावनीम् ॥ ६ ॥
स्वामिन् ! दुर्जयमोहराजविजयप्राविण्यभाजस्तव
स्तोत्रं किं कमठोरुदर्पदलने श्रीपार्श्व ! विश्वप्रभो ! ।
तिग्मांशोर्यदि वा स्फुरद्ग्रहमहःसन्दोहरोहद्द्रुहः
खद्योतद्युतिसंहतिश्रुतिपदे वर्त्तेत किं कोविदः ॥ ७ ॥
सश्रीकान् तव वक्त्रदुग्धजलधेरुद्भूतमत्यद्भुतं
मोहोच्छेदकतत्त्वसप्तकवचः पीयूषमित्यादृतः ।
विश्वेभ्यः फणभृद्विभुः फणिमणिव्याजात् प्रफुल्लत्फणा–
पात्रीभिः पृथुभिर्विभाति परितः स्वामिन् ! प्रयच्छन्निव ॥८॥
किं मन्त्रैर्मणिभिः किमौषधगणैः किं किं रसस्फातिभिः
किं वा संवननैः किमञ्जनवरैः किं देवताराधनैः ।
जन्तूनामिह पार्श्वनाथ इति चेन्नित्यं मनोमन्दिरे
कल्याणी चतुरक्षरा निवसति श्रीसिद्धविद्याऽद्भुता ॥९॥
भास्वन्तं परमेष्ठिनं स्मररिपुं बुद्धं जिनस्वामिनं
क्षेत्रज्ञं पुरुषोत्तमं गणविभुं सौम्यं कलाशालिनम् ।

योगीन्द्रं विबुधाधिपं फणपतिं श्रीदं गिरामीश्वरं
ज्योतीरूपमनन्तमुत्तमधियस्त्वामेव संवेदते ॥ १० ॥
रूपादौ विषये विदन् विगुणतां त्वं न्यायविद्यागुरु-
र्ब्रह्माद्वैतमुदाहरन्निह भवान् मीमांसकग्रामणीः ।
भावानां परिभावयन् क्षणिकतां बौद्धाधिपस्त्वं विद-
स्त्वं कर्मप्रकृतीः पृथक् पुरुषतः कैवल्यमाशिश्रयः ॥११॥
त्वं कारुण्यनिधिस्त्वमेव जनकस्त्वं बान्धवस्त्वं विभु-
स्त्वं शास्ता त्वमचिन्त्यचिन्तितमणिस्त्वं देवता त्वं गुरुः ।
त्वं प्रत्यूहनिवारकस्त्वमगदङ्कारस्त्वमालम्बनं
तत् किं दुःस्थमुपेक्षसे जिनपते! श्रद्धालुमेनं जनम् ॥१२॥
शिष्यस्ते तव सेवकस्तव विभो ! प्रेष्यो भुजिष्यस्तव
द्वाःस्थस्ते तव मागधस्तव शिशुस्ते देव ! सौस्नातिकः ।
पत्तिः पार्श्वजिनेश ! ते नुत(ननु) तवायत्तोऽस्मि मामादिश
स्वामिन् ! किं करवाणि पाणियुगलीमायोज्य विज्ञापये ॥१३॥
स्वःश्रीरिच्छति चक्रवर्त्तिकमलाभ्येति स्थितिः सेवते
कीर्त्तिः श्लिष्यति संस्तुते सुभगतापीशाति नीरोगता ।
नित्यं वाञ्छति खेचरत्वपदवी तीर्थेशलक्ष्मीरपि
त्वत्पादाब्जरजःपवित्रिततनुः सप्रश्रयं वीक्षते ॥ १४ ॥
नो कीर्त्तिं त्रिदिवाधिपत्यमपि नो नो चक्रवर्त्तिश्रियं
सौन्दर्यं न तु पाटवं न विभवं नो विष्टपप्राभवम् ।
नो सर्वौषधिमुख्यलब्धिनिवहं नो मुक्तिमभ्यर्थये
किं तु त्वच्चरणारविन्दयुगले भक्तिं जिन ! स्थेयसीम् ॥१५॥

इत्थं भूमिभृदश्वसेनतनय ! श्रीपार्श्व ! विश्वप्रभो ! ।
श्रीवात्मात्मज ! सुप्रवर्त्तितनय ! श्रीधर्मसूरिस्तुत ! ।
ये कुर्वन्ति तव स्तवं नवनवं प्रीत्युल्लसन्मानसा–
स्तेभ्यस्त्वं नतवत्सलो निजपदं दद्यास्त्रिलोकीविभो !॥१६॥

---

[ ८३ ]
श्रीजिनपतिसूरिप्रणीतं
यमकमयं
## श्रीचतुर्विंशतिजिनस्तवनम् ।

श्रीनाभेय। जिनेश ! त्वं नन्द्यायतशितांशुकः ।
यथा कुमुद्वतीनेता नन्द्यायतशितांशुकः ॥ १ ॥
उपाध्वमजितं भक्त्या कं दधानमनेकपम् ।
प्रगतोद्बोधितज्ञानकन्दधानमनेकपम् ॥ २ ॥
श्रीसम्भव ! प्रपन्ना ये समयं ते सदादरात् ।
ते संसारवनान्मुक्तिं समयन्ते सदा दरात् ॥ ३ ॥
येऽभिनन्दन ! ते तीर्थराज ! पादसभाजनाः ।
विलसन्ति चिरं तेऽत्र राजपादसभाजनाः॥ ४ ॥
पूजिताङ्घ्रिद्वयी मुक्त्यै कान्ता राजीवमालया ।
सुमते ! तव लूनांहःकान्तारा जीवमालया ॥ ५ ॥
पद्मप्रभः सुदृष्टीनां भूरिशोभातपोदयः ।
हन्यात् तमांसि पूषेव भूरिशो भातपोदयः ॥६॥

सुपार्श्व ! त्वच्छ्रुतं श्रुत्वा दर्पकोपकमानकम् ।
मुञ्चन्ति जन्तवः शान्तदर्पकोपक्रमानलम् ॥ ७ ॥
भवांश्चन्द्रप्रभेन्द्रेण यैरभाजि समुन्नतः ।
तैः कर्मपादपः प्राप्तायैरभाजि समुन्नतः ॥ ८ ॥
सुविधे ! त्वद्विधिं प्राप्य प्रनाद्यन्त्यसमाहिताः ।
ये ते श्रेयःश्रियं श्रस्तप्रमाद्यन्ति समाहिताः ॥ ९ ॥
सेवन्ते शीतल ! त्वां ये देव ! सम्पन्नकेवलम् ।
अपि मुक्तिर्भवेत् तेषां देवसम्पन्न केवलम् ॥ १० ॥
श्रीश्रेयांस ! तनूभाजां परमोक्षगतिर्भवान् ।
अनन्तान् हन्त्वविश्रान्तं परमोक्षगतिर्भवान् ॥ ११ ॥
वासुपूज्य ! नवस्वर्णनीरजारूढसत्क्रमः ।
हर त्वं विहरन्मोहं नीरजा रूढसत्क्रमः ॥ १२ ॥
विमल ! त्वां प्रति स्वं ये रञ्जयन्ति मनो भवम् ।
अपि दुर्जयमुच्चैस्तेऽरं जयन्ति मनोभवम् ॥ १३ ॥
जग्मिवांसमनन्त ! त्वां नमस्यन्ति महापदम् ।
ये ते विश्वत्रयीलक्ष्मीनमस्यन्ति महापदम् ॥ १४ ॥
नाश्रितस्तव सिद्धान्तो येनावीतनयस्ततः ।
वरं धर्माजिनधर्मा ये नावीतनयस्ततः ॥ १५ ॥
श्रीशान्ते ! देहिनां देहि सारङ्गविदधद्धृतिम् ।
शर्मकर्मततेरङ्कसारङ्ग ! विदधद् धृतिम् ॥ १६ ॥
कुन्थुनाथः सुपन्थानं विधुतारो वृषादृतः ।
पुंसा तन्यात् पिनाकीव विधुतारो वृषादृतः ॥ १७ ॥

येन त्वं नाश्रितः कर्मवनवैश्वानरोपमः ।
सोऽरनाथः कुधीर्भव्यावनवैश्वानरोपमः ॥ १८ ॥
नाङ्घ्रिपद्मस्तुतः सिद्धिप्रतिपन्नसदारुणः ।
येन ते भिद्यते मल्ले ! प्रतिपन्नसदाणः ॥ १९ ॥
श्रीसुव्रतजिनाधीशमक्षमालोपशोभितम् ।
विरञ्चिमिव सेवध्वमक्षमालोपशोभितम् ॥ २० ॥
देव्योऽपि तद्गुणोद्गानासह्या मन्दरसानुगाः ।
गायन्ति त्वां नमे ! भक्त्या सहामन्दरसानुगाः ॥ २१ ॥
तृष्णातापा त्वया वर्षे शमिता दानवारिणा ।
श्रीनेमे ! जिन ! ताराध्यशमितादानवारिणा ॥ २२ ॥
पार्श्व ! देव्यः सदाक्लृप्तमहाहारतरङ्गिताः ।
नाटयन्ति चरित्रं ते महाहारतरङ्गिताः ॥ २३ ॥
वीरो जिनपतिः पातु तन्वानः काञ्चनश्रियम्
बिभ्रन्नम्रेषु निःसीमां तन्वा नः काञ्चन श्रियम् ॥ २४ ॥
गर्भजन्मव्रतज्ञानश्रेयःकल्याणकेष्वयम् ।
जिनश्चिनोतु भव्यानां श्रेयः कल्याणकेष्वयम् ॥ २५ ॥
भूत्यै भवन्तु जन्तूनां सत्पक्षाहितमानसाः ।
*हंसा इव जिनोत्तंसाः सत्पक्षाहितमानसाः ॥ २६ ॥
श्रयध्वं शासनं जैनं प्रौढपाठीनधीवरम् ।
वोढारमिव गङ्गायाः प्रौढपाठीनधीवरम् ॥ २७ ॥
डिम्बमम्बा ह्रियादुद्यत्कलकण्ठीरवासिता ।
सिद्धबुद्धासिता कीर्त्या कलकण्ठीरवासिता ॥ २८ ॥

स्तवस्तव जिनैकोऽपि तनोति सुरसम्पदम् ।
पुंसां नाथ ! प्रतिक्षिप्तातनोऽतिसुरसं पदम् ॥ २९ ॥
वासवस्तुतपदो महामहा भक्तदत्तविलसं (यं) महापदः ।
वागपोहिततमस्तमा जिनस्वामिनो विदधतां सुखश्रियम् ॥३०॥

**इति श्रीचतुर्विंशतिजिनस्तुतयः । कृतिरियं जिनपतिसूरीणाम् ॥**

---

[ ८४ ]

### श्रीदेवेन्द्रसूरिप्रणीतं

## श्रीयुगादिजिनस्तवनम् ।



जय देवाधिदेवाऽऽधिव्याधिवैधुर्यनाशन ! ।
सर्वदा सर्वदारिद्र्यमुद्राविद्रावणक्षम ! ॥ १ ॥
अगण्यपुण्यकारुण्यपण्यापण ! **वृषध्वज** ! ।
जय सन्देहसन्दोहशैलदम्भोलिसन्निभः ॥ २ ॥
स्फुरत्कषायसन्तापसन्तापशमनामृत ! ।
जय संसारकान्तारदावपावकपावन ! ॥ ३ ॥
सदा सदागमाम्भोजविबोधनदिनप्रभो ! ।
नत्वा न त्वा भवे भावि भाविनः पतनं खलु ॥ ४ ॥
ये देवदेव ! गम्भीरनाभे ! नाभेय ! भूरिभिः ।
त्वद्गुणैः स्वं नियच्छन्ति ते मुक्ताः स्युर्महाद्भुतम् ॥ ५ ॥

देव ! त्वन्नामसन्मन्त्रो येषां चित्ते चकास्ति न ।
मोहसर्पविषं तेषां कथं यातु क्षयं क्षणात् ? ॥ ६ ॥
परिस्पृशन्ति ये नित्यं त्वदीयं पदपङ्कजम् ।
तेषां तीर्थेश्वरत्वादिपदवी न दवीयसी ॥ ७ ॥
नमः सद्दर्शनज्ञानवीर्यानन्दमयाय ते ।
अनन्तजन्तुसन्तानत्राणप्रवणचेतसे ॥ ८ ॥
एवं युगादितीर्थेशं ये स्तुवन्ति सदा नराः ।
देवेन्द्रवृन्दवन्द्यास्ते प्राप्नुवन्ति महोदयम् ॥ ९ ॥



[ ८५ ]

श्रीजिनेश्वरसूरिप्रणीतं

## यमकाङ्कितं

# श्रीचतुर्विंशतिजिनस्तवनम् ।



ऋषभनाथ ! भनाथनिभानन ! प्रसृतमोहतमोहननक्षम ! ।
दिश सुवर्णसवर्णसुवर्णरुक् परमकाममकामवि र्णरुक् ॥१॥
सुरुचिरं रुचिरं रुचिरञ्जितैर्वरसुरैरसुरैश्च यदर्चितम् ।
अजितदेव ! तदेव तव क्रमद्वयमधीशमधीशमनस्तवै ॥२॥
सुमनसं भवसम्भवसम्भवत्सुमहसं महसंहतिकारणम् ।
स्तुत जितारिजितारिनृपाङ्गजं सुमहितं महितं जिनसम्भवम् ॥३॥
त्वमभिनन्दन ! नन्दन ! संवरक्षितिभृतोऽतिभृतोऽतमसंवर ! ।
वितर मङ्गलमङ्गलसत्प्रभ ! प्लवगलक्षण ! लक्षणशोभितम् ॥ ४ ॥

सुजिनपञ्चम ! पञ्चमरागजिन्मधुरनिःस्वन ! निःस्वनरार्थकृत् ।
इन ! नमो न न मोहमपास्यते वसुमते सुमते ! सुमतेऽत्र ते ॥५॥
अरुणसुप्रभसुप्रभ ! सुप्रभो ! भुवि नतामर ! तामरसाङ्कभृत् ! ।
धरधराधिपनन्दन ! नन्दनस्तनु सुखानि सुखानिरसि श्रियः ॥६॥
शिवसुपार्श्वसुपार्श्व ! तमस्तमस्तपनकल्प न कल्पविलङ्घनः ।
कनककेतकविग्रह ! विग्रहच्छिदुर ! मेदुरमेधय मे सुखम् ॥७॥
अपरिदेवन ! देव ! नदे वनस्फुरदघस्मरघस्मर सेवनः ।
किरत मोहतमोह शशिप्रभस्मिततुषारतुषारकरप्रभः ॥८॥
अनवमं नवमं नवमङ्गलं विदधतं दधतं च रुचिं शुचिम् ।
जिनमिह स्मरत स्मरतक्षणं सुविधिमार तमारतलक्षणम् ॥९॥
दृढरथाङ्गज ! नन्दजनं दरप्रशमनं शमनं शमनस्तमः ।
दशमतीर्थप ! रागपरागतशमव शीतल ! शीतलले शमम् ॥१०॥
देवः श्रीमद्विष्णुविष्णुप्रसूतः कामं कामं ध्वंसमानः समानः ।
धर्मं दद्याद् धाम धामव्रजस्य श्रीश्रेयांसः श्रीसनाथः स नाथः ॥११॥
विद्यां दद्यादप्रमादप्रमादक्षत्व्याधिक्षप्रसादप्रसाद ! ।
शोणाश्मश्रीसप्रभाव प्रभावस्तीर्थस्वामी वासुपूज्यः सुपूज्यः ॥१२॥
त्वममदा मम दारितसन्नमन्नृभवलक्षवलक्षबलक्षमः ।
शिवरमां वरमां कृतवर्मभूः (?)नय विभो ! विमलो विमलोज्ज्वलाम् १३
अमदनं मदनम्रसुरासुरव्रजनविभ्रमविभ्रमविभ्रमाम् ।
जिनमनन्तमनन्तमनन्तकप्रभुमनन्तमनङ्गजमार्चितः ॥१४॥
कुलिशविद्रुममन्दममन्दिरं पिदधतं दधतं महिमाद्भुतम् ।
महत धर्ममधर्ममतच्छिदं गुरुमहोदमहोदमभूषितम् ॥१५॥

मदनशासनशासनशासनः × × × ×
सुषमधीश्वर शान्तिरशान्तिहृद् रचयतादचिरादचिरासुतः ॥१६॥
रुचिरजातिरजातिमृतिक्षितिः क्षममनाममनाममनागपि ।
विबुधबन्धुरबन्धुरसौ रजः किरतु कुन्थुरमन्तुरमं तुद (तु !) ॥१७॥
प्रवररोचिररोचिररोचितप्रवरमोक्षरमोक्षतकेवलः ।
विसमदः समदः समदः परं नतिमतोऽतिमतो नयतु प्रभुः ॥१८॥
नरतमालतमालदलप्रभासततमा नतमानवदानवा ।
हरतु मल्लिरमाररमारजस्त्रिजगतः शरणं शरणं श्रियः ॥१९॥
निबिडमञ्जनमञ्जनसप्रभ ! क्षपदमोक्षदमोक्षदयामृतैः ।
सुमुनिसुव्रत ! सुव्रतसज्जनाम्बुजसुमित्रसुमित्र ! सुमित्रभूः ॥२०॥
अकलिलः कलिलक्षविलक्षणः सकलमुत्पलमुत्पललक्षणः ।
गवि पदं विपदं विपदन्तकृन्नमिरमन्दरमं ददतां जिनः ॥२१॥
सुकविराजिविराजितसंसदा श्रुतमसन्तमसन्तमसं तदा ।
अशिवदं शिवदंव शिवाङ्गजं महत वै हतवैरनृपाङ्गजम् ॥२२॥
कलिकुमार्गकुमार्गनिरर्गल–द्विपरिपो ! ऽपरिपो ! परिपोषक ! ।
सुमहसोमहसोज्झित ! पार्श्व ! मां त्वमय विस्मय ! विस्मयकृद्वचः २३
भृशमदभ्रमदभ्रमदभ्रमप्रथमनः सुमनःसुमनः स्तुतः ।
असुमतः सुमतः सुमतोऽवदातपरमः परमश्वरमो जिनः ॥२४॥
सुमहितानि हितानि वितन्वतां जिनपतेरमृतेरमृतेशितुः ।
च्युतिजनिव्रतकेवलकेवलप्रमदमोक्षदमोक्षमहांसि नः ॥२५॥
अवतु सज्जनसज्जनयप्रदस्थिरतरा गतरागरिपुर्जिनाः ।
प्रभवतो भवतो भवतोऽवतो तमतरो मतरो मतरोदकृत् ॥२६॥

त्वमसमानसमानसमापयन् जिनसमक्षयमक्षयमक्षयः ।
दलितमानतमानवदानवाक्षतभवाय भवाय मे ॥२७॥
इति **जिनेश्वरसूरि**भिराद्रितैर्जिनवरा नवरागभिदः स्तुताः ।
प्रपठतां शठतां त्यजतां सतां स्तवमिमं ददतां वरसिद्धिताम् ॥२८॥
*भुवि भविक्रमविक्रमदं जिनव्रजमदम्भमदम्भमदं भजे ।
कमतमानसमानसमानसपरमहंसमहंतसमहंसदा ॥२९॥
परमभङ्गसभङ्गमहःप्रदं नमत रङ्गतरङ्गततेः पदम् ।
गमसुधामसुधाम सुधामयं श्रुतमुदारमुदारमुदा रदम् ॥३०॥
सुकमलाकमलाकमलाशिनी तमतमामतमामतमाशिनी ।
शिवरदावरदावरदायिनी सतनुभातनुभा तनु भारति ! ॥३१॥

---

[ ८६ ]

## श्रीजिनेश्वराचार्यसूत्रितं
## यमकालङ्कारमयं
# श्रीपार्श्वजिनस्तवनम् ।



देववर्माङ्गजं पिष्टदुष्टाङ्गजं कृष्णरम्याङ्गजं कर्मवल्ल्या गजम् ।
निर्जरैः संस्तुतं श्रेयसे संस्तुतं भीतिनिर्दारकं स्तौमि निर्दारकम् ॥१॥
देहिकां लोचनं पाप्मतो मोचनं कामसङ्कोचनं कायगोरोचनम् ।
दुर्गतित्रोटकं दुर्मतिच्छोटकं धूतविस्फोटकं व्यापदां स्फोटकम् ॥२॥
नीलरत्नावलीविग्रहं विग्रहं ध्वंसमानं स्फुरत्कुग्रहं कुग्रहम् ।
पार्श्वनाथं स्तुवे कामदं कामदं देवदेवं मुदा भामदं भामदम् ॥३॥

उत्करं यो व्रते दत्तविद्रावणं सर्वदा सर्वदारिद्र्यविद्रावणम् ।
तं महामो महामोहसंत्रासकं त्रासकं विद्विषां पार्श्वमत्रासकम् ॥४॥
शर्मदं कर्मदन्तीन्द्रपञ्चाननं स्तौमि राकाशशाङ्कात्रजैत्राननम् ।
श्रीजिनं श्रीजिनं नादिनां वादिनां शुद्धबुद्ध्या सुराचार्यसंवादिनाम्॥४॥
सारवक्षःस्तटं रत्नराजिस्फुटं सद्गुणैरुद्भटं तेजसाऽत्युत्कटम् ।
कीर्त्तिभाजं नमामो नमामोदकं तीर्थराजं स्मराम स्मराम प्रभुम् ॥६॥
नागराजध्वजं प्रह्वशक्रव्रजं देहिनां दर्शितप्राञ्चमुक्तिव्रजम् ।
संश्रयामो जिनं सन्मतं सन्मतं श्र्यश्वसेनस्य वाऽऽनन्दनं नन्दनम् ॥७॥
मोहनं मोहनद्या वहं भिन्दते दर्पकन्दर्पकन्दं समुच्छिन्नते ।
साध्वसं साध्वसं तोषदं शोषदं विघ्नते विघ्नतेस्त्वा नमस्तीर्थराट् ! ॥८॥
जीवराजीवराजीवराहस्करो पुष्पकोदण्डकोदण्डनिर्जित्वरः ।
धूततीर्थाधितीर्थाधिनाथः सुखं रात्वसौ भाग्यसौभाग्यवृद्धिप्रदः ॥९॥
भीमदं भीमदं संहरन्तं नृणां सत्क्रमं सत्क्रमं विक्रमं बिभ्रतम् ।
सूरसं सूरसङ्काशतेजःपदं शुभ्रभाः शुभ्रभाः कीर्त्तिमर्चे जिनम् ॥१०॥
यः विजिग्ये तपःकामठं कामठं दुर्गतिद्वारसम्पातकम्पातकम् ।
तं नमामो मुनीपावनं पावनं तीर्थपं क्रोधविध्यापनं ध्यापनम् ॥११॥
जगद्भावलक्षं वलक्षं यशोभिः प्रभाराशिवाशंशिवासं जिताशम् ।
सुधामाङ्गमव्याधिमाधिच्छिदं नमामोऽनमामोदमीशं दमीशम् ॥१२॥
वरीयःसमाधिः समाधिप्रमोषस्त्रिलोकीमहोदो महोदोषशोषः ।
नमद्वृक्षमेशक्षमेशः स पार्श्वस्तनोतु प्रमोदं प्रमोदश्चितं नः ॥१३॥
शमीशः शमीशः कुबोधान्यकान्ते महीयोमहीयो भृशं व्यातनोतु ।
समेऽतः समेतः श्रिया कष्टकूपप्रपातात् प्रपातात् प्रभुः पार्श्वनाथः॥१४॥

मलानामलानाय बोभूयमानः शमानाशमानाय मालोयमानः ।
घनानां घनानां रुचिं प्रास्यमानः स्वकान्त्या स्वकान्त्या
नितोऽव्याज्जिनो माम् ॥१५॥

सुखाने ! सुखानेकधाम्नां कधाम्नां भवाने भवानेतृकोऽपि च्छिदेऽर्हन्।
प्रमाद प्रमादक्षयाय क्षयाय व्रजस्य व्रजस्य प्रधानस्य लब्ध्यै ॥१६॥

क्षमाद क्षमादस्वपादप्रसादभ्रमादभ्रमादप्रणाश प्रणादम् ।
महाना महानागदंकार ! सार ! प्रभो ! मे प्रभोमे दिश त्वं जिनेन्द्र !॥१७॥

मनोभूषणं भूषणं विश्वविश्वे महःपूषणं पूषणं मोहवृत्ते ।
समध्यासितं ध्यासितं नम्रदेवं रमाराजितं राजितं नौमि देवम् ॥१८॥

द्युसन्मौलिसन्मौलिपृष्टाङ्घ्रिपद्मः सुकल्याणकल्याणसिंहासनस्थः ।
समाधानमाधानदक्षो मतक्षो रमा रातु मारातुरत्वच्छिदेऽर्हन् ॥१९॥

योगतो योगतो निर्वृतिं निर्वृतिं नीरतो नीरतोषप्रदस्तीर्थपः ।
साधितः साधितव्याधिनाशोऽवतादानतो दानतोशाब्धिभिर्वै बुधैः॥२०॥

इति जिनेश्वरसूरिनुतो गुणै-
रमलसत्क्रम ! देहि शिवालयम् ।
त्वमिह पार्श्व ! कृतप्रणतप्रभा
रम ! लसत्क्रम ! देहि शिवालयम् ॥२१॥



[ ८७ ]

श्रीजिनप्रभसूरिप्रणीतः

## श्रीचतुर्विंशतिजिनस्तवः ।

( श्लेषमयः )

यं सततमक्षमालोपशोभितं सेवतेऽमरालीशः ।
कमलासनः स्वयम्भूः स श्रीमान्नाभिभूर्जयति ॥ १ ॥

अहितासननिष्णातः पुरुषोत्तमसंश्रितः ।
विनतानन्दनो विश्वविनेताऽवतु वो जिनः ॥ २ ॥

---

श्रीजयचन्द्रसूरिकृता

अवचूरिः ।

कमलासनो...सनोति–ददाति । 'षणूयी दाने' इत्यस्य । इन्द्रः । सर्वातिशयसूचनी प्रथमार्यापक्षे स्वयम्भूः–ब्रह्मा । कमलासनं यस्य स तथा । हंसः । सेवत इति सण्टङ्कः ॥ १ ॥

हिंसादिप्ररूपणपराणां परेषां शाक्य–साङ्ख्याऽक्षणपादादीनां अहितानां असने–निराकरणे निष्णातः–निपुणः । विनतानां–प्रणतानां आनन्दनः–मोददः । विश्वं विनयति–शास्तीत्येवंशीलो विश्वविनेता । पक्षे अहीनां–सर्पाणां तासने–क्षयनयने दक्षः । पुरुषोत्तमं–विष्णुं संश्रितः । विनता–सुपर्णी तस्या नन्दनो-गरुड इत्यर्थः । विश्वेषां सर्वेषां वीनां–पक्षिणां नेता–प्रभुः ॥ २ ॥

श्रीमान् कैरवबन्धुरविलोचनो गारुडच्छविवपुर्वः ।
शम्भवजिनोऽस्त्वहीनस्थितिभाक् तार्क्ष्यध्वजः प्रीत्यै ॥ ३ ॥

मुदेऽभिनन्दनः स्ताद् वः सुभद्राभोगभाजनम् ।
सद्धर्मसंयुगरतो भवजैत्रः कपध्विजः ॥ ४ ॥

हर्षितकोकविनिवहस्तुत्योदयजनयितः कृतान्तस्य ।
श्रीसुमते ! जीयाश्चिरमिन ! त्वमुच्चैरुषाहन्तः ! ॥ ५ ॥

---

अवचूरिः ।

कैरवबन्धुरे विलोचने–नयने यस्य स तथा सुवर्णच्छविशरीरः । समां स्थितिंःआचारं चैत्यतरु–प्रदक्षिणा–सङ्घप्रणामादिकां भजते यः स तथा । तार्क्ष्य –अश्वः ध्वजो–लाञ्छनं यस्य । पक्षे श्रियः पतिः। कैरवबन्धुरवी–चन्द्रसूर्यौ विलोचने यस्य स तथा। मरकतकान्तिकायः। अहीनां इनः–शेषनागराजः तत्र स्थितिं–स्थानं भजते यः स तथा। तार्क्ष्यो–गरुडो ध्वजः–वाहनं यस्य ॥ ३ ॥

शोभनानां–भद्राणां यः आभोगः–विस्तारः तस्य भाजनं–आस्पदम् । सन्तम्–शोभनम् । देशविरतिरूपं धर्मं संयुनक्ति इति सद्धर्मसंयुक् जनेषु इति गम्यते । अविद्यमानं रतं–कन्दर्पो यस्य स तथा । उष्ट्रमुखादित्वात् विद्यमानलोपः संसारजेता। वानरलाञ्छनः। पक्षे सुभद्रा–अर्जुनभार्या तस्या यो भोगः–सेवनं तस्य स्थानं तत्कारित्वात् एवं उक्तिः । सद्धर्मणा–प्रधानधनुषा गाण्डीवाभिधानेन संयुगे–सङ्ग्रामे रतो–रतिमान् । हरजेता–किरातरूपधारिणः शम्भोः तेन रणे पराजितवान् अर्जुनः ॥ ४ ॥

हर्षिता–हर्षं प्रापिता कुः–पृथ्वी येन स तथा। तस्यामन्त्रणम्। 'राद्धसिद्धकृतेभ्योऽन्तः' ( अभि. का २ श्लो. १५६ ) इति निघण्टुवचनात्। कृतान्तः–सिद्धान्तः तस्य हे जनयितः !–निष्पादक! पक्षे हर्षितः कोकसंज्ञानां वीनां–पक्षिणां निवहो येन । कृतान्तस्य–यमस्य पितः!–सूर्य ! रात्रिविनाशक ! ॥ ५ ॥

पद्मप्रभः सौमनसं धर्मं बिभ्रत् सदाशये ।
उमाविभूषितः पातु प्रद्युम्नः श्रीधराङ्गजः ॥ ६ ॥

विधुरविधिप्रणस्नेही पृथ्वीतनयः सुवर्णवर्णतनुः ।
भवतु सुपार्श्वो भयदप्रतीपचर्यः श्रिये वक्रः ॥ ७ ॥

चन्द्रप्रभ ! श्वेतरुचे ! तावकी मूर्त्तिरस्यति ।
तापं प्रजाया विश्वस्यास्ततमादधती *शशम् ॥ ८ ॥

## अवचूरिः

सुमनसां अयं सौमनसः शुद्ध इति यावत् तं धर्मं सदाशये-चित्ते धरन् । यशोऽलङ्कृतः । प्रकृष्टं द्युम्नं-बलं यस्य स तथा । श्रीधरः-प्रभोः पिता । पक्षे पौष्पं चापं धरन् । सदा-निरन्तरम्-शये-करे हस्ते । उमाविभुना-ईश्वरेण उषितः-दग्धः । 'उष दाहे' इत्यस्मात् क्ते । 'ऊष रुजायाम्' इत्यस्मात् क्ते ऊषितः । कन्दर्पः । विष्णुतनयः श्रीनन्दनत्वात् ॥ ६ ॥

मन्देषु-विशिष्टमतिषु च स्नेही तत्कृपाकारित्वात् भगवतः । पृथ्वी भगवतो माता । भयदानां रोगादीनां प्रतीपा-प्रातिकूला चर्या-विहारो यस्य स तथा । तस्मिन् विहरति तेषामभावात् । पक्षे चन्द्रसूर्यबृहस्पतीनां मित्रम् । ज्योतिःशास्त्रप्रसिद्धत्वात् । मङ्गलः । कुङ्कुमवर्णः । भयकारिणी वक्रा चर्या यस्य स तथा । वक्रगामित्वात् वक्रः ॥ ७ ॥

सितकान्ते ! निराकृताज्ञाना । तन्वती शम् ।-सौख्यम् । पक्षे चन्द्रः ध्वस्तान्धकारा । शशं-लाञ्छनं धरन्ती ॥ ८ ॥

---

* आदधती शशम् । पक्षे आदधती हे ईश ! शम् ।

नारीणां हृदि निवसस्यनिरुद्धगुरुप्रथोज्ज्वलशरीर ! ।
रामेय ! मकरकेतो ! सुविधे ! वृषभासनविदग्ध ! ॥ ९ ॥

जनतापापहृत्कुल्याञ्चितश्रीरमृतप्रदः ।
हरिस्तोमाभिनन्द्यो वः शीतलोऽव्याद् घनागमः ॥ १० ॥

## अवचूरिः

अरीणाम्–भगवदाज्ञालोपकारित्वात् मिथ्यादृष्टीनां हृदि निवासं न वितनोषि । अस्खलितप्रौढकीर्ते ! शुक्लवर्णत्वात् श्वेतकाय ! । रामाभगवन्माता तस्या अपत्यम् । 'ङ्याप्त्यूङः' ( सिद्ध० ६।१।७० ) इत्यनेन एयणि रामेय ! । मकरलाञ्छन ! । पुण्यप्रकटननिपुण ! । एतान्यामन्त्रणपदानि । पक्षे स्त्रीणां चित्ते निवससि । अनिरुद्धोऽनङ्गसुतः । 'अनिरुद्धः सुतस्तस्य' ( ) ततस्तस्य गुरुः पितृत्वात् । ततो निरुद्धगुरुरिति प्रथा–कीर्तिर्यस्य स तथा । अथवा अनिरुद्धेन गुर्वी पृथा यस्येति तस्य सम्बोधनम् । उज्ज्वलः- शृंगारो रसः स शरीरं यस्य स तथा मन्मथत्वात् । तस्य । श्रीनन्दनः । मकरध्वजः । वृषभासन–ईश्वरस्तेन विशेषेण दग्धः ॥ ९ ॥

प्रजापापहारकः । कुलीनैः पूजित !–स्तुत ! । अष्टमहाप्रातिहार्यादिका श्रीर्यस्य स तथा । 'महानन्दोऽमृतं सिद्धिः' ( अभि० का. १, श्लो० ७४ ) इतिवचनात् अमृतप्रदः–सिद्धिदः । इन्द्रसमूहस्य पूज्यः । घनः परतीर्थैः छेत्तुमशक्यत्वात् । निबिडः आगमः–समयो यस्य स तथा । पक्षे लोकतापविनाशकः । कुल्यासु–नदीषु अञ्चिता समवया उदकरूपा श्रीर्यस्य । कुल्याभिः अञ्चिता–अङ्गीकारतः पूजिता श्रीर्यस्येति वा स तथा । नीरदायकः मण्डूकगणस्पृहणीयः वर्षाकालः ॥ १० ॥

प्रीयाद् वः काञ्चनरुचिराजीवाध्यासिनी नलिनहस्ता ।
विष्णुं प्रमोदयन्ती श्रीश्रेयांसस्य सा मूर्त्तिः ॥ ११ ॥

तिरस्कुर्वन् कायकान्त्या सिन्दूरं महिषध्वजः ।
समवर्ती वासुपूज्यः सूर्यानन्दी सुखाय वः ॥ १२ ॥

विमलः सौम्योऽशं मे भोगासक्तः स हेलया हन्यात् ।
हरितालसमानरुचिर्यः श्यामापतिमतोषयत ॥ १३ ॥

---

अवचूरिः ।

सुवर्णवर्णा । जीवानां आधिं मनोव्यथां अस्यति इति–क्षिपतीत्येवंशीला या सा तथा । कमलं हस्ते लक्षणत्वेन यस्याः सा । तथा विष्णुं भगवत्पितरं नन्दयन्ती । प्रसिद्धा । काञ्चनकान्तिकमलोपवेशिका । कमलकामलकरा नारायणं श्रीः ॥ ११ ॥

अतिशायिरत्नकान्तित्वात् सिन्दूरमधःकुर्वन् इत्यर्थः । महिषलाञ्छनः । मध्यस्थः । सूरीणां–विदुषां आनन्दनशीलः । पक्षे भृशं असितकान्तित्वेन असिं–कृपाणं क्षिपन् । महिषवाहनो–यम सूर्यसुतत्वात् सूर्यानन्दनशीलः ॥ १२ ॥

अभीमः दुःखं मम सांसारिकसौख्येष्वसक्तः । प्रसिद्धः । वेगेन । हन्तु । हरितालेन पीतत्वेन समाना रुचिर्यस्य स तथा, सुवर्णकान्तिरित्यर्थः । श्यामाख्या भगवतो माता तस्याः पतिः–भर्ता श्रीकृतवर्मा तं निजपितरमित्यर्थः । पक्षे बुधः–सोमस्यापत्यमिति व्युत्पत्तेः । फलाभिधया निजप्रियया सह–साकं सौख्यासक्त इत्यर्थः । हरिता नीला । आ–समन्तात् 'लस श्लेषणे' इत्यस्मात् शाने लसमाना–लसनशीला रुचिर्यस्य सः तथा । कोऽर्थः ? 'साहित्ये कालनीलयोरैक्यम्, इतिकृत्वा श्यामाङ्ग इत्यर्थः । श्यामा–रात्रिस्तस्याः पतिं चन्द्रमसम् तत्पुत्रत्वात् तदानन्दकारित्वं बुधस्य ॥ १३ ॥

वर्या जनसुहृद्रूपः पातु वो धारयन् क्षमाम् ।
भूरिभोगविरोचिष्णुरनन्तो विष्णुना श्रितः ॥ १४ ॥

पाठान्तरे—

मञ्जुलाङ्गलसच्छायश्चन्द्रगौरसुरादृतः ।
जीयादनन्तः श्रीज्येष्ठो भीमतालोपलक्षितः ॥ १५ ॥

---

अवचूरिः ।

**प्रधानाम् । प्रशस्यः सुहृत् सुहृद्रूपः प्रशस्तार्थे रूपम् प्रत्ययः । ततः षष्ठीसमास । क्षान्तिम् ॥ अनेकभोगविमुखः । इन्द्रेण श्रितः । पक्षे–प्रधानाञ्जनसमानरूपः । ननु सिततरकान्तित्वात् शेषनागराजस्य इदं विशेषणमनुपपन्नम् । नैवम् । सितत्वेनाऽसितत्वेन च तस्य द्विधापि शास्त्रे प्रसिद्धत्वात् । कथमेतद् ? इत्युच्यते 'स च श्यामोऽथवा शुक्लः सितपङ्कजलाञ्छनः' (अभि. कां.४, श्लो. ३७४) इति निघण्टुवचनप्रामाण्यात् इति । पृथिवीम् ।अनेकफणाविराजमानः । शेषाहिः नारायणेन श्रितः तत्पृष्ठशायित्वात् तस्यैवमुक्तिः ॥ १४ ॥**

**मञ्जुला-मनोरमाऽङ्गस्य लसन्ती छाया-कान्तिर्यस्य । नन्वेतावता भगवतः कान्तेः शोभनत्वमवगतम् सामान्येन । परं अर्हतां पञ्चवर्णसम्भवेन च वर्णविशेषावगतिः । इत्याह 'चन्द्रगौर' इति 'चन्द्रौ स्वर्णकर्पूरौ' ( ) इति वचनात् चन्द्रगौरः–कनककान्तिरित्यर्थः देवाश्रितः–कमलाप्रधानः रौद्रताभावराजितः । पक्षे चारुहलसशोभः 'अवदातगौरशुभ्रवलक्षधवलार्जुनाः' एकार्थाः (अभि. का. ६ श्लो.२९) इतिवचनात् चन्द्र इव गौरः सितः–श्वेतवर्ण इत्यर्थः । मदिरासक्तः प्रियमधुत्वात् तस्य । बलभद्रः–कृष्णाग्रजत्वात् श्रियो ज्येष्ठः भीमो यस्तालः स ध्वजे यस्य स तथा ॥ १५ ॥**

सदयो ध्यानगरीयानमोदयद्दीपयच्च भानुकुलम् ।
यो वैदेहीहितकृत् स श्रीरामो जयति धर्मः ॥ १६ ॥

नयज्ञपुरुषाधारो वहन्नवसुधाधरम् ।
अहीनः कोऽपि पायाद्वः श्रीशान्तेर्विस्तरो गिराम् ॥ १७ ॥

रुचिताम्रं सद्धात्रीधवनतमाश्रितमशोकपुन्नागैः ।
विभ्राजिमृदुलताढ्यं स्तुवेऽवनं पद्युगं कुन्थोः ॥ १८ ॥

---

अवचूरिः ।

दयासहितः । ध्यानेन गरीयान् । भानुसंज्ञितस्य निजपितुः कुलं प्रमोदितवान् दीपितवांश्च । वै–निश्चितम् । देहिनां ईहितकारकः । श्रियाभिरामः । पक्षे प्रधानाऽयोध्यासंज्ञा नगरी । तत्सम्बन्धिनो जनान् प्रमोदयन् अदीदिपच्च सूर्यवंशं, सूर्यवंशित्वात् तस्य । वैदेही–सीता तस्या हितकारी ॥ १६ ॥

गणधरादीनां विश्रामभूमित्वात् आधारः, प्रधानसुधास्वादत्वं वहन्। सर्वगुणसम्पूर्णः कश्चिदपूर्वः वाणीप्रपञ्चः। पक्षे अहीनः–शेषस्तस्य नवीनत्वमाह 'नयज्ञपुरुषाधारः' विष्णुविश्रामभूमिः। न धारयन् वसुधाभारम् ॥ १७ ॥

कान्त्यारुणम्। प्रधानपरिवृढैर्नतम्। गतशोकपुरुषकाण्डैराश्रितम्। शोभनशोभम्। सौकुमार्येण समृद्धम्। रक्षकम्। पक्षे रुचिरचूतम्। शोभनामलकीधवानां नतत्वात् वनमपि नतमुच्यते 'अक्ष्णा काणः' इतिवत्। अशोकपुन्नागैः वृक्षविशेषैः सहितम्। पक्षिविराजमानम्। मृद्वीभिर्लताभिराढ्यम्। वनमिति विशेष्यम् ॥ १८ ॥

अवामनतरङ्गौको गभीरस्तिमिराजितः ।
श्रिये समकरो वः स्तादरनाथो महोदधिः ॥ १९ ॥

मल्लिर्महाबलोऽनलसख्यातिप्रथित उच्चकै रयवान् ।
विदधदहिंसोपचयं पुनातु हरिणादृतो भव्यान् ॥ २० ॥

कृतभूतनयादेश उच्चैरक्षोभयावहः ।
सौमित्रिर्नन्दतात् पद्मानन्दनो मुनिसुव्रतः ॥ २१ ॥

---

अवचूरिः ।

अनुकूलः सन्तो ये नतास्तेषां भक्तिरागस्य स्थानम् । अतुच्छः । अज्ञानेन अजितः । निरुपमहस्तः-सश्रीहस्तः आविषमहस्तो वा । तेजो धारयन् । महानां-उत्सवानां उदधिर्वा । पक्षे उच्चकल्लोलानां स्थानम् । पर्वतमीक्षेपकः । मत्स्यशोभितः । मकरैः सहितः । महान् समुद्र इति विशेष्यम् ॥ १९ ॥

अतिशायिबलः । अमदकीर्त्तिप्रख्यातः । भाग्यवान् । कुर्वन् जीवदयापोषम् । इन्द्रेण प्रतिपन्नः । पक्षे वायुः अग्निमैत्र्या अतिविख्यातः । वेगवान् सर्प सपोषम् । मृगं प्रतिपन्नम् तस्य हरिणवाहनत्वेन, पृषदश्वत्वात् ॥ २० ॥

सम्पादितसद्भूतनयोपदेशः, कृतजन्तुनयादेशो वा । स्थिरलक्ष्म्यावहः । सुमित्रस्य राज्ञोऽपत्यम् । पद्मा भगवतो जननी । पक्षे कृतसीतादेशः । रक्षसां भयावहः । सुमित्राया अपत्यं लक्ष्मण इति विशेष्यम् । पद्मोऽष्टमबलदेवः ॥ २१ ॥

असमानननक्रमकरं समाश्रयं जलपतत्त्रिवर्गाणाम् ।
नमिनाथं सज्जनदत्तरङ्गमानमत भुवनपतिम् ॥ २२ ॥
श्रेयः संवरदस्य श्रीनेमेर्लीला तनोतु वः ।
पिप्रतो जगतिं गोभिर्यादवोल्लासवर्द्धिनी ॥ २३ ॥
अमृतकरः पार्श्वजिनो हरिणाङ्कितविग्रहः कलानिलयः ।
नन्द्यात् तमालसत्तमरुचिरच्छविरौषधीभर्ता ॥ २४ ॥
धत्ते योजनलक्षोच्चैर्मानं योगधुरन्धरः ।
कल्याणगोत्रः श्रीवीरः सोऽस्तु सन्नन्दनः श्रिये ॥ २५ ॥

---

अवचूरिः ।

निरुपममुखचरणपाणिम् उपलक्षणत्वात् सर्वाङ्गसुभगम् । जडेषु पततां हीयमानानाम् धर्मार्थकामानां आधारम् । राजाद्यवस्थायां युक्त्या तन्निषेवणात् । सत्प्राणिक्लृप्तानुरागम् । जगत्पतिम् । पक्षे महान्तो विसदृशा वा नक्रमकरा-जलचरजन्तुविशेषा यत्र । जलपक्षिसमूहानां आधारम् । अमन्दाः स्वनन्तः कल्लोला यत्र । भुवनं-जलं तत्पतिं समुद्रमिति विशेष्यम् ॥ २२ ॥

शिवसुखं कर्म । पालयन्तीति । विश्वम् । वाग्भिः । पक्षे शम्बरं-जलम् तद्दोऽम्बुदस्तस्य । पूरयन्ती भुवं जलैः या दवानलवृद्धिच्छेदिनी ॥ २३ ॥

शिवकरः । अहिना लाञ्छितवपुः कलानां स्थानम् । तमालो वृक्षविशेषस्तद्वद्रुचिरच्छविः । अच्छा-स्वच्छा विगतरोगा धीर्यस्य स तथा । भर्ता-स्वामी । पक्षे चन्द्रः-मृगाङ्कितततनुः । षोडशोऽंशः-कला । रजना-लसत्तमा रुचिरा च्छविर्यस्य । औषधीनां पतिः-भर्त्ता इति तत् कर्मणि द्वितीया शस ॥ २४ ॥

रोचनविषयग्रामा समुद्रसहिता समानगोपचिता ।
अवनी पारगतानां पुनातु वः पञ्चकल्याणी ॥ २६ ॥

मुक्तिश्रीमृगलोचनास्तनघनाश्लेषक्रियालङ्कृताः
श्लेषालङ्क्रियया स्तुता इति मया सार्वाश्चतुर्विंशतिः ।

भीरुत्वोद्भवमाजिनप्रभवति क्रूरापि दूरान् महा–
मोहक्ष्माभृदनीकिनी मयि यथा कुर्युस्तथानुग्रहम् ॥ २७ ॥

*बभूव भद्रैकरतोऽस्तमन्युः शिवालयं प्राप्य महासुखी यः ।
महेश्वरस्तीर्थकृतां समूहः सना कपालादत एष जीयात् ॥२८॥

## अवचूरिः ।

यो भगवान् जनलक्षकृतं मानं–पूजां धत्ते । योगे–रत्नत्रये धुरन्धरः । उत्तमान्वयः । कल्याणं सुकृदभिधानो वा । सतामानन्दनः । पक्षे योजनलक्षप्रमाणम् । उच्चैर्मानं धत्ते । यः अगेषु धुरन्धरः । कल्याणं–सुवर्णं गोत्रः–पर्वतः सुवर्णाचलो–मेरुरिति विशेष्यम् । शोभननन्दनवनः ॥ २५ ॥

रोचन इति कर्तर्यमः विषयग्रामः–शब्दादिगणः रुच्यः स यस्याम् । सहर्षरसाहिता भक्ता असमाना गोपा–इन्द्रास्तैश्चिता–व्याप्ता । यद्वा समुदिति पृथग् विशेषणम् । जगतां हर्षदायकत्वात् रसेभ्यो हिता तत्समये तद्वृद्धिभवनात् असमानगोपाचितेति पृथग्-प्रीतिरक्षणादिकारिणी । पक्षे रुचिरस्थानदेशग्रामा । आब्धियुक्ता । समा-समग्रा नगैः–शैलैः उपचिता ॥२६॥

सुखैकनिरतः राजाद्यवस्थायाम् भद्रा एकरता यस्येति वा सुखा-दित्वात् कस्य परनिपातः निरस्तक्रोधः । सिद्धिं सम्प्राप्य महा-सुखीबभूवेति सम्बन्धः । महास्वामी नाकपालः–इन्द्रस्तेनादृतः । पक्षे

सत्तारकं मेघविरुद्धमस्तु सन्मङ्गलं सद्बुधजीवकाव्यम् ।
मोहारिभञ्जिष्णुपदं जिनेन्द्रश्रुतं मुदे मन्दतमोवियुक्तम् ॥२९॥
जगद्द्रुहामृद्धिभरस्य दाता शयस्फुरद्भासुरह्लादिनीकः ।
प्रकर्षदो मोरसभावितानां पिपर्तु वंशं वरदो महेन्द्रः ॥३०॥

---

अवचूरिः ।

भद्रो-वृषभो भद्रा-गङ्गा वा तत्र रतः । ध्वस्त ऋतुस्तन्निरासकत्वात् । शिवा-गौरी तस्यां लयं-रतिम् । महेश्वरः-शम्भुरिति विशेष्यम् । सदा कपालं प्रतिपन्नः ॥२८॥

सतां तारकम् । मे-मम अघं-विरुद्धं तद्ध्वंसित्वात् । सद्भिः बुधैर्जीवैः काव्यं वर्णनीयम् । मोहरिपुभञ्जनशीलानि पदानि यस्य । अमन्दाऽज्ञानावियुक्तम् । पक्षे शोभनतारकम् । मेघैः विशेषेण रुद्धम् । मङ्गल-बुध-जीव-काव्या ग्रहाः जीवकाव्यौ-गुरुशुक्रौ । चन्द्रमसा-चन्द्रेण हारीणि भानि यस्मिन् । जिष्णुपदं-व्योमेति विशेष्यम् । शनिराहुभ्यामवियुक्त-सहितम् ॥ २९ ॥

विश्वद्रोहिणां ऋद्धिभरस्य च्छेदकः 'दांवक् लवने' ( ) इतिधातुः शये-हस्ते स्फुरन्ती-भासुरा ह्लादिनी-वज्रं यस्य स तथा । प्रहर्षदा उमा-कीर्त्तिः कान्तिर्वा यस्य । भक्तिमतां । वासवः । पक्षे जगद्रुहो-वृक्षाः । 'अदीर्घाद् विरामैकव्यञ्जने' (सिद्ध० १।३।३२) इति दस्य द्वित्वम् । आशये लक्षणया मध्ये-स्थाने वा । ह्लादिनी-विद्युत् । मोरा-मयूराः उणादौ ओरप्रत्ययान्तो मोरशब्दः । तेषां सभायां भाविताः-प्राप्ताः । शम्वरदो-जलदः । स पिपर्तु-पालयतु ॥ ३० ॥

॥ इतिश्री जिनप्रभसूरिकृतस्तवावचूरिः श्रीजयचन्द्रसूरिकृता ॥

[ ८८ ]

## श्रीजिनप्रभसूरिप्रणीतः

# श्रीऋषभदेवाज्ञास्तवः ।

नयगमभंगपहाणा विराहिआराहिआवि सपमाणा ।
भवसिवदाणसमाणा जिणवरआणा चिरं जयतु ॥१॥
इक्कु च्चिय तुह आणा दुहं सुहं देइ सामियाणंतं ।
इक्कावि मेहवुट्ठी विसं व अमिअं व पत्तगुणा ॥२॥
भमिओ भवो अणंतो तुह आणाविरहिएहिं जीवेहिं ।
पुण भमियव्वो तेहिं जेहि न अंगीकया आणा ॥३॥
जो न कुणइ तुह आणं सो आणं कुणइ तिहुअणस्सावि ।
जो पुण कुणइ जिणाणं तस्साणा तिहुअणे देव ! । ॥४॥
तं पुण्णं पडिपुण्णं तं मइनिउणं अणोवमं सामि ! ।
जेण जिणनाह ! सम्मं जाणिज्ज जहट्ठिआ आणा ॥५॥
नरयगई वि हु सग्गो तुह आणाभाविआण भविआणं ।
सग्गोवि नरयअहिओ जिणवरआणाविमुत्ताणं ॥६॥
तुह आणाभट्ठाणं तिलोयलच्छीइ नाह ! न हु सुक्खं ।
आणाजुत्ताण पुणो न देइ दुक्खं दरिद्दंपि ॥७॥
तुह जिणवरिंद ! आणा विराहिआ जं पमायदोसेण ।
भवं भमंतेण मए तं मिच्छा दुक्कडं होउ ॥८॥
निउणमईगम्माणा ववहारेणं न निज्जए सम्मं ।
निच्छयओ पुण नियमा तुह जिण ! भणिअं पमाणं मे ॥९॥

मिच्छत्ततावतत्तो पत्तो तुह आणतरुवरच्छायं ।
ता तत्थ कुण पसायं सामी विस्सामदाणेण ॥१०॥

इइ विण्णत्तो जिणपहु !
जिणपहसूरीहि जगगुरू पढमो !
विण्णत्तीइ पसायं
निब्विग्घं कुणउ अम्हाणं ॥११॥

[ ८९ ]

श्रीजिनप्रभसूरिप्रणीतः

## श्रीपार्श्वनाथलघुस्तवः ।

( नवग्रहश्लेषः )

दोसावहारदक्खो नालीयायरवियासगोपसरो ।
रयणत्तयस्स जणओ पासजिणो जयउ जयचक्खू ॥१॥

अवचूरिः ।

दोषादीनां–भूतादीनां अपहारे–दूरीकरणे दक्षः-समर्थः । 'नाली०' न अलीके–असत्यवचने आदरं विकाशयितुं गोप्रसरः–वाक्समूहो यस्य स तथेति । 'रय०' रत्नत्रयस्य–ज्ञानदर्शन–चारित्र-

टिप्पनकम्

१ गौः–वाणी किरणं च । २ पक्षे रत्नात्मजः–यमः । ३ पक्षे जगच्चक्षुः–सूर्यः ।

कयकुवलयपडिबोहो हरिणं[४] कियविग्गहो कलानिलओ ।
विहिआरविंदमहणो[५] दिअराओ[६] जयइ पासजिणो ॥२॥

## अवचूरिः ।

रूपस्य जनकः– उत्पादकः इत्यर्थः । पार्श्वजिनो जयतु 'जयचक्खू' जगच्चक्षुः–विश्वलोचन इत्यर्थः । अथ जगच्चक्षुः–आदित्यः प्रथमग्रहो जयतु । क्रियासम्बन्धः । स च कथम्भूतः ? 'दोसा.' इति पदम् । दोषायाः–रात्रेः अपहारे दक्षः रात्रिच्छेदकत्वात् इति । 'नाली०' नालीकाकरविकाशी–कमलखण्डविकाशो गोप्रसरः–किरणप्रचारो यस्येति । तथा 'रयण०' इति रत्नात्मजस्य–रत्नादेवीसूनोः यमस्य जनकः–पिता जयति ॥ १ ॥

कृतः कुवलयस्य–पृथ्वीमण्डलस्य प्रतिबोधो येन स तथेति । 'हरि०' हरिणा–सर्पेण अङ्कितो विग्रहो–देहो यस्य स तथा । सर्पलाञ्छनधारित्वात् । 'कलानिलओ' इति स्पष्टम् । 'विहि०' विहितं –कृतं अरिवृन्दस्य–वैरिसमूहस्य मथनं येन स तथा 'दिअराओ' इति दितरागः–खण्डितरागः इत्यर्थः । जयति पार्श्वजिनः । अथवा 'दिअराओ' द्विजराजः–चन्द्रः स च कृतकुवलयप्रतिबोधः हरिणाङ्कितविग्रहः कलानिलयः विहितारविन्दमथनो जयति ॥२॥

कान्त्या निर्जयन्–तिरस्कुर्वन् असिम्–खड्गलताम् , दूरम्–अत्यर्थम् । पृथ्वीनन्दनः–पृथ्वा आनन्दकृत् । अक्रूरः–स्वच्छतरात्मनः परिणामधारकत्वात् । 'जय०' जगज्जन्तूनां अमृतमिव वाक्यं यस्य स तथेति । सुमङ्गलः– शोभनकल्याणवान् जयति प्रभुपार्श्वजिनः ।

---

४ हरिः–सर्पः तेनाऽङ्कितः । ५ आरं–अरिसम्बन्धि वृन्दम् । ६ छिन्नरागः । पक्षे द्विजराजः–चन्द्रः ।

कंतीई[1] णिज्जिणिंतो[2] सिंदूरं[3] पुहइनंदणो[4] कूरो ।
जयजंतु[5] अमयवक्को सुमंगलो[6] जयइ पासजिणो ॥३॥

उप्पलदलनीलरुई हरिमंडलसंथुओ इलाणंदो ।
रयणिअरदारओ मह बुहो पसीइज्ज पासपहू ॥४॥

## अवचूरिः ।

अथवा सुमङ्गलः—शोभनो मङ्गलग्रहः, कान्त्या शरीरेण निर्जयन् सिन्दूरं रक्तवर्णत्वात् । ' पुहविनंदणो ' वसुधासुतः । क्रूरग्रहत्वात् । ' जयजन्तुअमय० ' इति जगज्जन्तूनां अमतो विश्वजनानां अनभीष्टः, वक्रः वक्रगतित्वात् ॥ ३ ॥

नीलनीरजकान्तिः हरिमण्डले संस्तुतः—इन्द्रमण्डलैः कृतः संस्तवः यस्य सः इन्द्रविहितवर्णनः । इलाया—धराया आनन्ददायित्वात् 'आयुर्वै घृतम् ' इति यावत् ' कारणे कार्योपचारात् ' इति । रजोनिकरदारकः—पापप्रकरप्रदलनः ' महबुहो ' महाबुधः सर्वज्ञत्वात् । प्रसीदतु पार्श्वप्रभुः ।

अथवा ' मह ' इति मम बुधो—ग्रहभेदः प्रसीदतु—प्रसादपरो भवतु । ' उप्पल० ' इति नीलवर्णत्वात् । ' हरिमण्डल० ' हरिमण्डलेन सूर्यमण्डलेन सह संस्तवः—परिचयो यस्येति सदा दिनकरमण्डलस्थायित्वात् इति भावः । अथवा उचितो नित्यसंहितत्वात् । इलानंदो ' इला नामेति बुधस्त्री तस्या आनन्दः प्राग्वत्, रजनीकरः—चन्द्रः तस्य दारकः—सुत इत्यर्थः ॥४॥

## टिप्पनकम् ।

१ कान्त्या—शरीरदीप्त्या । २ असिम्—खड्गम् । ३ दूरम्—अत्यर्थम् । नन्दनः हर्षदः । ४ अक्रूरः—स्वच्छान्तरात्मा । ५ जगज्जन्त्वमृतवाक्यः । ६ कल्याणवान्

नाहिअवायविअड्ढो नायत्थो नायरायकयपूओ ।
सिरिपासनाहदेवो देवायरिओ सिवं दिसउ ॥५॥
रायावट्टसमुज्जलतणुप्पहामंडलो महाभूई ।
असुरेहिं नमिज्जंतो पासजिणिंदो कई जयउ ॥६॥

## अवचूरिः ।

न अहितवादविदग्धः, ज्ञायस्थः–सदाचारे स्थितः (ज्ञातार्थः) नागराजकृतपूजः इति पदं व्यक्तम् । श्रीपार्श्वनाथदेवो देवैः आवृतः–पूजितः देवावृतः सुखं दिशतु । अथवा देवाचार्यो–गुरुः सुखं दिशतु, स च नास्तिकवादाविदग्धः तदुपयोगित्वात् लोकायतमतस्य । नाके–स्वर्गे आकाशे वा तिष्ठतीति वा नाकस्थः, नागराजपूज्यः–शक्रार्चित इत्यर्थः ॥ ५ ॥

राजावर्त्तः–अत्र नीलोत्पलविशेषः तद्वत् समुज्ज्वलं तनुप्रभा-

## टिप्पनकम् ।

अथो मङ्गलः ग्रहः कान्त्या सिन्दूरम् । रक्तवर्णत्वान्मङ्गलस्य । जगज्जन्तूनां अमत.–अनभीष्टः वक्रो यस्य सः । 'भौमे वक्रे उपप्लवाः स्युः' ।

रजोनिकरनिवारकः । महाबुधः । सूर्यमण्डलासन्नः । इला–बुधपत्नी तन्नन्दनः । उत्पलदलनीलरुचिः । उभयोरपि साम्यम् नीलवर्णत्वात् श्रीपार्श्वजिनस्य बुधस्य च । रजनिकरः–चन्द्रः तस्य दारकः–पुत्रः ।

नास्तिकानां । अहित । नाकस्थः न्यायस्थः नाको–नागः । देवाचार्यः देवैरादृतः । राजावर्त्तः–नीलोत्पलविशेषः रावटो मणिर्वा । रौप्य इवोज्ज्वलः । महर्द्धिकः । कं–ज्ञानं वेत्तीति कावित् । पक्षे कविः–शुक्रः । मघाजन्मा 'शुक्रो मघाभवः काव्यः' (अभि० का० २ श्लो० ३३) इतिहेमः ।

तिमिरासिसमारूढो संतो दुक्खावहो जयम्मि थिरो ।
बहुलतमासरिससिरी जयचक्खुसुओ जयउ पासो ॥७॥
कवलीकयदोसायरमायंडरहं अहोतेणुविमुक्कं ।
लोआभरणीभूअं पासजिणं सत्तमं सरह ॥८॥

अवचूरिः ।

मण्डलं यस्य स तथा । महाभूतिः–महार्चिः करः । असूरैः उपलक्षणत्वाद् भवनपतिभिर्नम्यमानः पार्श्वजिनेन्द्रः कविर्जयतु । कं–ज्ञानं वेत्तीति कवी । अथवा कविः–शुक्रः, स च राज्ञो रूप्यस्य आवर्त्तोद्रवः तद्वत् समुज्ज्वलं तनुप्रभामण्डलं यस्य स तथा । यतः ' कविस्त्वत्यन्तधवलः ' (भुवनदीपके श्लो २४) अथ कविना कथं राज्यशब्देन रूप्य–चन्द्रपर्यायवाचित्वादिति ब्रूमः । मघाभूतिः–मघासु भूतिः–जन्म यस्य स तथा । असुरैः–दैत्यैः नमस्यमानो यतोऽसुरगुरुत्वात् इति स जयति ॥ ६ ॥

तिमिरं–अज्ञानं अस्यति–क्षिपतीति शीलं–स्वभावं शं–सुखं अर्थाद् अत्र मोक्षसुखलक्षणं तत्र आरूढः–प्रपन्नः सन्तोऽत्र शमी अष्टादशदोषरहितत्वात् । 'दुक्खावहो' दुःखापहः शरीरिणां शारीरमानसदुःखविघातीति । 'जयम्मि थिरो' जगति–लोके स्थिरः–स्थैर्यवान् । बहुलतमा–अतिशयेन प्रचुरा असदृशी–निरुपमा श्रीः–ज्ञानादिका लक्ष्मीर्यस्य स तथा 'जयचक्खू' जगच्चक्षुरिव चक्षुः । श्रुतं–सिद्धान्तो यस्य स तथा । जयति पार्श्वः । अथवा स्थिर इति शनैश्चरः स च तिमिराशिः–मीनराशिस्तं समारूढः सन् दुःखावहो भवति । जगति बहुलतमा कृष्णपक्षनिशा तया सदृशी श्रीः अत्र श्रीः–शोभा यस्य स तथा । तथा जगच्चक्षुः–सूर्यसूनुर्जयति ॥ ७ ॥

दोषाणां आकरा दोषाकरा एवंविधा माया सा कवलीकृता–ग्रासीकृता येन स तथा तं क० । ' डरहं ' भयघ्नं समस्तभया-

दुरिआइं पासनाहो सिहावमालिअनहो भुवणकेऊ ।
दूरं तमरासीओ सत्तमठाणट्ठिओ हरउ ॥९॥

१ दोषाणां आकरः माया च, पक्षे चन्द्रसूर्यमण्डलम् ।
२ सम्बोधने

अवचूरिः ।

पहारित्वात् । अहो इत्यत्र स्मरणवर्ता सम्बोधने 'तनुविमुक्कं'–औदारिकशरीरम् । राद्धंगपञ्चकरहितम् 'लोणेति' लोकस्य चतुर्दशरज्ज्वात्मकस्य आभरणीभूतं–अलङ्कारभूतं पार्श्वजिनसत्तमं सर्वजिनोत्तमत्वात् । अथवा हे लोकाः ! सत्तमं शोभनं राहुग्रहं स्मरत । किंविशिष्टम् ? 'कवलीकृत०' ग्रासीकृतचन्द्रसूर्यमण्डलमित्यर्थः । 'अहोतणुविमुक्कं' अधस्तनुविमुक्तं शिरोमात्रधारकत्वात् । भरणीभूतं–भरणीनक्षत्रजातम् ॥ ८ ॥

दुरितानि–पापानि पार्श्वनाथो हरतु–दूरीकरोतु । किंवि० ? शिखाभिः किरणैः 'वमालि' त्ति व्याप्ता नखा यस्य स तथोक्तः । तथा भुवनकेतुः–जगतो ध्वजप्रायः । पुनः किं०? दूरं–दूरवर्ती । कस्मात्? तमोराशितः' मिथ्यादिमोहादितमःपुञ्जात् अत एव सत्तमे–श्रेष्ठे स्थाने–अक्षये स्थितः । अथवा भुवने–जगति केतुः–नवमग्रहो भुवनकेतुः स विघ्नानि–दुरितानि दूरं यथा भवति तथा हरतु । स च शिखया–चूडया 'अवमालिय'त्ति व्याप्तम् नभो येन सः । तथा स हि शिखावान् उदयते तथा तथा तमोराशितो–राहुसंश्रितराशेः सप्तमे स्थाने स्थितः । तथा ज्योतिषां सप्तमगृहगो यो विधुतुन्दाक्रान्तवेश्मनः केतुः इति गमयन्नाह ॥ ९ ॥

इति नवग्रहस्तुतिगर्भं जिनप्रभसूरिभिर्गुम्फितं स्तवनं तव पार्श्व ! पठति यः तमशुभा अपि ग्रहा न पीडयन्ति । चन्द्रादीनां शुभ-

इअ नवगहथुइगब्भं जिणपहसूरिहिं गुंफिअं थवणं ।
तुह पास ! पढइ जो तं असुहा वि गहा न पीडंति ॥१०॥

अवचूरिः ।

त्वेऽप्यथाष्टमद्वादशादिस्थानवशादशुभत्वं, शुभस्तु तृतीयएकादशादि-स्थानवशात् पीडयन्त्येवेति अशुभा इत्युक्तामिति । इति स्तवावचूरिः॥

लिखितेयं श्रीविक्रमपुरे वरे संवत्सरार्कमुनिरातिशशिवर्षे फागुण-वदि ८ दिने ॥

टिप्पनकम् ।

तिमिर–अज्ञानं अस्यतीति तिमिरासी–मोक्षः तस्य शं–सुखं आरूढः । शान्तः । अतिशयेन प्रवरा–असदृशी श्रीः–जिनलक्ष्मीरूपा यस्य सः । जगच्चक्षुरिव श्रुतं–शास्त्रं यस्य सः । पक्षे स्थिरः–शनिः। शेषोक्तः मीनराश्यारूढः सन् दुःखावहः स्यात् । कृष्णपक्षनिशासम-देहः । सूर्यसुतः ॥ ७ ॥

कवलीकृतो दोषाणां आकरो माया च येन । दग्धम् । अहो सम्बोधने । देहमुक्तं–श्रेष्ठम् । पक्षे हे लोकाः ! सत्तमसं–राहुम् । भर-ण्या जातम् । ग्रस्तचन्द्ररविरथम् । अधःशरीरविमुक्तम् ॥ ८ ॥

किरणैर्व्याप्तनखः । पक्षे चूडाव्याप्ताकाशः भुवनस्य ध्वजप्रायः दूरवर्ती तमोराशितः सप्तमः । अत एव मोक्षे स्थितः । एवं भुवने केतुः–नवमो ग्रहः दुरितं हरतु इति । राहुसंश्रितराशेः सप्तमस्थानस्थितः

'राहुच्छाया स्मृतः केतुर्यत्र राशौ भवेदयम् ।
तस्मात् सप्तमके केतू राहुः स्याद् यत्र चांशके ॥

इति ज्योतिषसार–भुवनदीपक (श्लोक २२)वचनप्रामाण्यात् ॥९॥

'इय०' सुगमम् ।

[ ९० ]

## श्रीजिनप्रभसूरिप्रणीतं

# श्रीगौतमस्तोत्रम् ।



जम्मपवित्तियसिरिमगहदेस अवयंसगुव्वरगामं ।
गोयमगुत्तं सिरिइंदभूइगणहारिणं नमिमो ॥ १ ॥

वसुभूइकुलविभूसण ! जिट्ठाउडुजाय ! कंचणच्छाय ! ।
पुहवीउअरसरोरुहमराल ! तं जयसु गणनाह ! ॥ २ ॥

समचउरंसागिइमय ! संघयणं वज्जरिसहनारायं ।
कलयं ते कावि सिरी देहे तुह सत्तकरतुंगे ॥ ३ ॥

सह दसदिएहिं जण्णं मज्झिमपावाइ तुह कुणंतस्स ।
माणो बि हु बोहिफलो अहेसि तुह वीरदंसणओ ॥ ४ ॥

वेयपयत्थे तुह जीवसंसए जिणवरेण विच्छिन्ने ।
निक्खंतो तं पहु ! लहु पंचहिं सह खंडिअसएहिं ॥ ५ ॥

वइसाहसुद्धइक्कारसीइ पुव्वण्हदेसकालंमि ।
महसेणवणे पण्णासवच्छरंत्ते सि पव्वइओ ॥ ६ ॥

गिहिभावे जं तुमए सम्मं आराहिओ महावीरो ।
तेणब्भासेण तमेव सेवसे समणभावेवि ॥ ७ ॥

पण्णासलिले खित्तो जिणेण तिपइक्कतिल्लबिंदू ते ।
वित्थरिओ तह तक्खण दुवालसंगप्पणयणेण ॥ ८ ॥

इगवीससयक्खरसूरिमंतसवणाउ झत्ति संजाया ।
आमोसहि–विप्पोसहिपमुहा तुह लद्धिरिंछोली ॥ ९ ॥
तुह अंगं फरिसिय जं फासइ पवणो जलासयाण जलं ।
तं पीऊण मणुस्सा उविंति छम्मासमारुग्गं ॥ १० ॥
तंबंपि होइ हेमं निट्ठीवणकाइआविलित्तं ते ।
तिहुयणअच्छेरकरं जयइ अहो जोगमाहप्पं ॥ ११ ॥
नूणं विसिट्ठफलयं थावरतित्थाउ जंगमं तित्थं ।
इअ अट्ठावयमुज्झिय ते रिसिणो तं चिअ लीणा ॥१२॥
कोडिन्नदिन्न–सेवालि–तावसा तिजुअ पनरस सया य ।
अप्पा य तप्पिआ पहु ! इग पायसपडिगहेण तए ॥१३॥
अक्खीणमहाणसलद्धिणो अ तुह नामगहणमित्तेण ।
अज्जवि लहंति भविआ मणचुंबिअरिद्धिसिद्धीओ ॥ १४ ॥
पहु ! अन्ने दायारा संतं चिअ वत्थु विअरिउं पइणो ।
तं पुण सदिक्खिआणं विअरसि केवलमसंतंपि ॥१५॥
परिसाइ तिसट्ठिअहिअतिसयपासंडिवयणविण्णासा ।
तुह वयणनीरपूरे इक्कंमिवि तणमिव तरंति ॥१६॥
इअरछउमत्थसुअमयपसमत्थं चेव वत्थुवित्तीए ।
आणंदोहिवइअरे तुह खलिअं सुव्वए नूणं ॥१७॥
अम्हारिसावि विगुणा जं गणहरसद्दमुव्वहंति जए ।
सो तुम्ह कहिअगणहरमंतनिवेसस्स महिमलवो ॥१८॥
तीसं वरिसंते पहु ! केवललच्छि सयंवरमुविंतिं ।
तमुविक्खित्था तं वीरभत्तिभंगप्पसंगभया ॥१९॥

सिद्धे जिणंमि केवलमिओहरीहिं जिणुव्व तं महिओ ।
दीवा पवत्तिओ किं न दीवओ तप्पहं भयइ ? ॥२०॥
कत्तिअसिअपाडिवए केवलमहिमा सुरेहि तुह विहिआ ।
तेणज्जवि तम्मि दिणे दीसइ ऊसवमई पुहई ॥२१॥
तुह छत्ततलं अप्पं सित्तं जो झाइ अमयबिंदूहिं ।
सो संतिपुट्ठिकित्तीण भायणं होइ अणुदिअहं ॥२२॥
मोहतमोहं हरिउं बारसवरिसाइ केवलपहाहिं ।
अणुगहिअ जणं मुणिमणकमलाइं पयासिय रविव्व ॥२३॥
बाणवइवासजीवी निसिरिअ सगणं सुहम्मसामिम्मि ।
मासं पाओवगओ रायगिहे तं गओ सिद्धिं ॥२४॥
नमिरसुररायसेहरचुंबिअपय ! संथुओसि इअ भयवं ! ।
जिणपह ! मुणिंद ! गोयम ! मह उवरिं पसीअ अविसामं ॥२५॥

---

[ ९१ ]

श्रीजिनप्रभसूरिप्रणीतं

## मन्त्रगर्भितं

# श्रीगौतमस्वामिस्तोत्रम् ।

ॐनमस्त्रिजगन्नेतुर्वीरस्याग्रिमसूनवे ।
समग्रलब्धिमाणिक्यरोहणायेन्द्रभूतये ॥ १ ॥
पादाम्भोजं भगवतो गौतमस्य नमस्यताम् ।
वशीभवन्ति त्रैलोक्यसम्पदो विगतापदः ॥ २ ॥

तव सिद्धस्य बुद्धस्य पादाम्भोजरजःकणः ।
पिपर्त्ति कल्पशाखीव कामितानि तनूमताम् ॥ ३ ॥
श्रीगौतमाऽक्षीणमहानसस्य तव कीर्तनात् ।
सुवर्णपुष्पां पृथिवीमुच्चिनोति नरश्चिरम् ॥ ४ ॥
अतिशेषेतरां धाम्ना भगवन् ! भास्करीं श्रियम् ।
अतिसौम्यतया चान्द्रीमहो ते भीमकान्तता ॥५॥
विजित्य संसारमायाबीजं मोहमहीपतिम् ।
नरः स्यान्मुक्तिराज्यश्रीनायकस्त्वत्प्रसादतः ॥ ६ ॥
द्वादशाङ्गीविधौ वेधाः श्रीन्द्रादिसुरसेवितः ।
अगण्यपुण्यनैपुण्यं तेषां साक्षात्कृतोऽसि यैः ॥ ७ ॥
नमः स्वाहापतिज्योतिस्तिरस्कारितनुत्विषे ।
श्रीगोतमगुरो ! तुभ्यं वागीशाय महात्मने ॥ ८ ॥
इति श्रीगौतम ! स्तोत्र—
मन्त्रं ते स्मरतोऽन्वहम् ।
श्रीजिनप्रभसूरेस्त्वं
भव सर्वार्थसिद्धये ॥ ९ ॥

---

[ ९२ ]

श्रीसोमतिलकसूरिकृतं

## ज्ञानपञ्चमीस्तवनम् ।

श्रीशैवेयं यादवविशालकुलकुवलयैकहिमरश्मिम् ।
गौसम्भारविभासितवस्तुस्तोमं नमस्कृत्य ॥ १ ॥

विश्वप्रकाशकारणतरणिज्ञानस्तवेन संयुक्तम् ।
भक्तिभरभावितात्मा वक्ष्येऽहं पञ्चमीस्तवनम् ॥ २ ॥
क्रमतो मतिश्रुतावधिसुमनःपर्यायकेवलाख्यानि ।
ज्ञानानि पञ्च केवलिकथितानि सुदुर्लभानि नृणाम् ॥ ३ ॥
यस्मादेतेषु पुनस्त्रिकालमुपकारकरणकौशल्यात् ।
तद्वेदिभिर्गुरुतरं श्रुतं स्मृतं भव्यसत्वानाम् ॥ ४ ॥
तस्मादनवरतमिदं श्रयणीयं शुद्धबुद्धिभिः सम्यक् ।
अविशिष्टज्ञानानामवाप्तिहेतोर्विशिष्टानाम् ॥ ५ ॥
उत्पत्त्यादित्रिपदीरूपं त्रिजगद्धितं त्रिजगदीशैः ।
गदितं तृतीयनेत्रोपमं श्रुतं प्रकटितत्रिजगत् ॥ ६ ॥
प्रकृतिपरोपकृतिभरैः प्राकृतमयमिदमकारि गणभृद्भिः ।
नहि जलधिर्विपुलतरस्तरीतुमलमन्तरेण तरीम् ॥ ७ ॥
सर्पत्सदर्पकन्दर्पसर्पगरलोर्मिभिर्भ्रमि याद्भिः ।
अमरत्वमभिलषद्भिर्यदमृतमिव पीयते भविकैः ॥ ८ ॥
किञ्च यदोमित्यक्षरमिवाक्षरं लिप्सवः पदं विशदम् ।
करणत्रितयविशुद्ध्या विधिवद् ध्यायन्ति शुद्धधियः ॥ ९ ॥
सुहृदयहृदयाकाशप्रचारिणा खरसमीरणेनेव ।
येनाहन्यन्त घनान्यघानि घनमण्डलानीव ॥ १० ॥
स्वस्वचरित्राकर्णनरसिकाश्चलितासनाश्चलाभरणाः ।
यस्मै विस्मितहृदयाः स्पृहयन्ति सुराः कृताञ्जलयः ॥ ११ ॥
यस्मात् समुल्लसाऽतुलफलमिव कल्पपादपादवनौ ।
धर्मः कर्मक्षयकृन्निरुपमशर्मप्रदानपटुः ॥ १२ ॥

यस्य पुरो नमतां परभावाः स्फूर्तिं भजन्ति भूवलये ।
अभिशरभं राभसिका मदोत्कटाः करटिनो ननु के? ॥ १३ ॥
शिवमौलिरनुत्तरमुखकमलग्रीवेयकानयग्रीवः ।
सुरदशनोदरहृदयः पर्यन्तार्णवविशालकटिः ॥ १४ ॥
सुरगिरिनाभिश्च नभो वलयाञ्चितभुजपदादिकावयवः ।
यत्र त्रिभुवनपुरुषः सङ्क्रामत्यात्मदर्श इव ॥ १५ ॥
भवतस्तदवतु भवतो भजन्तु भव्याश्च तदभवन्तोऽपि ।
कृत्यानि तेन कुर्वन्त्यनिशं तस्मै नमस्यन्तु ॥ १६ ॥
जानीत ततः स्वहिताहितं विहायाहितानि कृत्यानि ।
तस्य स्मरताजस्रं तस्मिन् यूयं यतध्वं च ॥ १७ ॥
यन्मनसीदं ज्ञानं मिथ्यात्वं नैव तं पराभवति ।
किं रविविमानमभितः प्रसरन्ति तमांस्यपि कदाचित् ? ॥१८॥
श्रयत श्रुतप्रवहणं यद् यत् संस्मृत्य संसृतिसमुद्रम् ।
अतिलङ्घ्य लेभिरे प्राक् परमपदं द्वीपवदनेके ॥ १९ ॥
यस्येदं हृदि वसति प्रकटितविकटप्रभावसम्भारम् ।
मन्त्र इव तस्य न पुरः स्फुरन्ति विपदः कदाचिदपि ॥ २० ॥
जगति तदस्ति न किञ्चिन्न साध्यते........त्रिकालविदः ।
वचनैर्विरोधरहितैरासिद्धेर्वीतरागस्य ॥ २१ ॥
तस्मादाराधयताध्ययनेनाऽध्यापनेन वाचनया ।
धर्मकथया तथाऽनुस्मरणेनाऽन्वहं तपसा ॥ २२ ॥
कर्मापनयत पुस्तकपुस्तिकाकारणैस्तदर्चाभिः ।
तद्गोपनोपकरणध्यानविधानैर्भवोपचितम् ॥ २३ ॥

एवं श्री नेमिनाथं मनसि सुमनसः संस्तुवन्तः स्मरन्तः
पञ्चम्यां पञ्चबाणाखिलविशिखमुखध्वंसवज्रोपमानम् ।
ज्ञानस्तोत्रं पवित्रं सुतपसि निरता ये पठन्ति प्रकामं
तेषां ज्ञानं न दूरे निवसति सुगतिः पञ्चमं पञ्चमी वा ॥२४॥

[ ९३ ]

धर्मघोषसूरिविरचितः

## भावि[1]चतुर्विंशतिजिनस्तवः ।

देवेन्द्रवन्दितान् भाविचतुर्विंशतिमर्हतः ।
भाविशं**धर्मकीर्त्ति**श्रीविद्यानन्दशिवान् स्तुवे ॥ १ ॥
प्रथमः पद्मनाभोऽर्हन् जीवः श्रेणिकभूपतेः ।
जीयाज्जीवः सुपार्श्वस्य द्वितीयः सूरदेवकः ॥ २ ॥
तृतीयोऽर्हन् सुपार्श्वाख्यो जीवः पोट्टिलकस्य तु ।
तुर्यः स्वयम्प्रभाभिख्यो जीवो जीयाद् दृढायुषः ॥ ३ ॥
पञ्चमः कार्त्तिकजीवः सर्वानुभूतिनामकः ।
जिनो देवश्रुतो नाम जीवः शङ्खस्य षष्ठकः ॥ ४ ॥
उदयाख्यो जिनो भावी नन्दजीवस्तु सप्तमः ।
जिनो जीवः सुनन्दस्याऽष्टमः पेढालनामकः ॥ ५ ॥
जयतात् केकल(शी)जीवो नवमः पोट्टिलो जिनः ।
जीवो रेयलिनामुस्तु (?) शतकीर्त्तिर्दशमोऽर्हन् ॥ ६ ॥

---

१ मतान्तरमिदं प्रवचनसारोद्धारादितः

जीवः सत्यकिसंज्ञस्यैकादशः सुव्रतो जिनः ।
कृष्णस्य शार्ङ्गिणो जीवोऽममाख्यो द्वादशो जिनः ॥ ७ ॥
बलदेवस्य जीवोऽर्हन् निष्कषायस्त्रयोदशः ।
रोहिणीश्राविकाजीवो निष्पुलाकश्चतुर्दशः ॥ ८ ॥
निर्ममः सुलसायास्तु जीवः पञ्चदशो जिनः ।
रेवतीश्राविकाजीवश्चित्रगुप्तस्तु षोडशः ॥ ९ ॥
जीवो गवालिनामाऽस्ति समाधिः सप्तदशोऽर्हन् ।
जीवो मार्गलिसंज्ञस्याष्टादशः संवराभिधः ॥ १० ॥
जीवो द्वैपायनस्यैकोनविंशोऽर्हन् यशोधरः ।
जीवः कर्णस्य विंशस्तु विजयाख्यो जिनेश्वरः ॥ ११ ॥
जीवस्तु नारदस्यैकविंशो मल्लाभिधो जिनः ।
अम्बडस्य तु जीवोऽर्हन् द्वाविंशो देवनामकः ॥ १२ ॥
त्रयोविंशो जिनोऽनन्तवीर्योऽव्यादमरस्य तु ।
जीवः स्वातेर्जिनो जीयाच्चतुर्विंशोऽत्र भद्रकृत् ॥ १३ ॥
इत्याख्या जीवसंज्ञाभिः संस्तुता भाविनो जिनाः ।
विश्राणयन्तु मे शीघ्रं श्रेयः संश्रेयसीं श्रियम् ॥ १४ ॥

---

[ ९४ ]

## श्रीपार्श्वनाथस्तवनम् ।

जय जय जिणिंद ! तिअसिंदविंदवंदिअपयारविंदजुअ ! ।
सिरिपासनाह ! मणवंछिअत्थसंपायणसमत्थ ! ॥ १ ॥

सामि ! न याणामि अहं अहेसि तुह कित्तिअं न लायण्णं ।
नयणाइं ठंति तुह नामधारए पत्थरेवि परं ॥ २ ॥
नयणा निरत्थया ते जयदमयंजण ! न जेहि दिट्ठोऽसि ।
वायावि वंचिआ सा सुरसंथुअ ! जेहि न हु थुणिओ ॥ ३ ॥
हिअयं हिअयाणंदं न हिअयाणंदं न जं तुमं झाइ ।
सवणा वि असवणा ते न हु तुह गुणाण पवणा जे ॥ ४ ॥
नाह ! सिरं तं असिरं तिहुअणनमिअस्स जं न ते पणयं ।
भालंपि भग्गभग्गं तुह पयपीढे न जं लग्गं ॥ ५ ॥
अकयत्था ते हत्था जे तुह कमकमलसेवअसमत्था ।
पायावि बहुअपाया गंतूण न वंदिआ जेहिं ॥ ६ ॥
जम्मो वि सो अरम्मो न जम्मि सम्माणिओ तुमं सामि ! ।
लच्छी वि सा अलच्छी तुहुच्छवे जा न सुच्छाहा[1] ॥ ७ ॥
किं बहुणा नाह ! इहं तुह सेवावज्जिअस्स जं किंचि ।
तं सव्वंपि निरत्थयमणत्थसत्थप्पयाणाओ ॥ ८ ॥
ता विण्णत्तो ससिकरसधम्मकित्तिभर ! पास ! तित्थयर ! ।
तुह सेवाए सहलाणि हुंतु मह लोअणाईणि ॥ ९ ॥



[ ९५ ]

## श्रीपार्श्वनाथस्तवनम् ।

पूर्वं पामरपुङ्गवेन सकलं साम्राज्यमासादितं
यस्माद् भोगपरंपरापरिचयो जातो बहूनामपि ।

1. सच्छाया

सोऽयं सर्वजनीनकल्पविटपी चिन्तामणिः कामधुक्
श्रीपार्श्वो भवतादजागृहगतो नित्यं मुदे देहिनाम् ॥१॥
कासश्वासभगन्दरोदरगलग्रन्थिव्यथाविह्वला
दुष्टाष्टादशकुष्टजातिगलितक्षेत्रा अपि प्राणिनः ।
यन्नामाक्षरकीर्तनामृतरसैः कल्या भवन्ति ध्रुवं
श्रीपार्श्वं तमहं नमामि तरसा शङ्खेश्वरावस्थितम् ॥२॥
नष्टा कष्टपरम्परा परिभवो दूरे न दैन्यं क्वचिद्
रोगः शान्तिमुपैति याति कुमतिर्नैवास्ति तेषां भयम् ।
निर्वाणाध्वनि सार्थवाहमसमं ध्यायन्ति ये मानवा
वामेयं प्रकटप्रभाववसतिं श्रीस्तम्भनावस्थितम् ॥ ३ ॥
भूपाला भुवि पार्श्वनाथ ! भगवन् ! राज्योन्नतिं सेवकाः
स्वामित्वं सकलार्थसाधककतमं निःस्वा धनानि प्रभो ! ।
रोगार्त्तास्तदभावमापुरपरे सर्वार्थकामान्नरा–
स्त्वत्तः साधुजनाः शिवं प्रशमिनो जावालिदुर्गस्थितेः॥४॥
यः पूज्यो जगतां नमन्ति सुधियो यं येन मोहो जितो
यस्मै संस्पृहयन्ति चारुमतयो यस्माच्छुभं देहिनाम् ।
यस्यानन्तचतुष्टयं निरुपमं यस्मिन् स्थितं सद्गुणैः
स श्रीपार्श्वजिनेश्वरो वितरताच्चारूपसंस्थः शिवम् ॥ ५ ॥
भोगिस्कन्धनिबद्धपादयुगलं स्फूर्जत्फणाडम्बरं
कायोत्सर्गजुषं शिरीषनगरप्रासादलब्धोदयम् ।
ध्यानस्थं कमठोपसर्गविगमे कैवल्यलक्ष्मीयुतं
श्रीपार्श्वं जगतां विदारितरुजं पश्यन्ति धन्या जनाः॥६॥

अद्यापि प्रकटप्रभावभवनं पञ्चालदेशाक्षिते-
श्चूडारत्नपदे सुरेश्वरनतं श्रीवर्द्धमाने पुरे।
वन्दे पार्श्वजिनेश्वरं जितरिपुं भिन्नेन्द्रनीलद्युतिं
चैत्ये वीरविभोर्भवार्त्तिशमनं श्रीजैत्रमल्लाह्वयम् ॥ ७ ॥

कामक्रोधमदाविवेकविषयव्यासङ्गलुप्तात्मनां
नोत्तारो भववारिधेस्तनुभृतां श्रीपार्श्वनाथप्रभोः।
पादाः स्युर्यदि यानपात्रमनघं नोऽनन्तकालेष्वपि
द्वीपस्थस्य फणीन्द्रशेखरशिखारत्नप्रभाभासिनः ॥ ८ ॥

देव! श्रीकलिकुण्डमण्डनमणिर्वाणारसीभूषण!
स्वामिन्! श्रीमथुराधिनाथ! भगवन्! नागह्रदालङ्कृते!
कामान् श्रीफलवर्द्धिबद्धवसते! सम्पूरय प्राणिनां
शश्वच्छ्रीजिणहाधिमन्त्रिवसतिश्रीपुण्ड्रपार्श्वप्रभो! ॥९॥

श्रीनागाष्टकुलावचूलतिलकं पद्मावतीसेवितः
यः पार्श्वं प्रणवादिबीजसहितं ह्रींकारसंवेष्टितम्।
नित्यं ध्यायति निश्चलेन मनसा वीतस्पृहो मानव-
स्तस्यै....वमेव यान्ति विपदः सिध्यन्ति सर्वाः श्रियः१०।

इत्थं भक्तिवशीकृतेन रचितं स्तोत्रं पदं सम्पदां
मिथ्यात्वद्रुमभङ्गकुञ्जरपते! रोलम्बरामद्युतेः।
श्रीपार्श्वस्य विभोर्मयापि कुधिया कल्याणकामैर्मुदा
भव्यैर्धर्मवरैः सदैव गुरुणा घोषेण पापठ्यताम्॥११॥

---

[ ९६ ]

# श्रीवीरजिनस्तवनम् ।

जय श्रीसर्वसिद्धार्थ ! सिद्धार्थनृपनन्दन ! ।
सुमेरुधीर ! गम्भीर ! महावीर ! जिनेश्वर ! ॥१॥
योऽप्रमेयप्रमाणोऽपि सप्तहस्तप्रमोपितः ।
पूर्णेन्दुवर्ण्यवर्णोऽपि स्वर्णवर्णसवर्णकः ॥२॥
सदृशं कौशिके सक्रे सर्पे च क्रमसंस्पृशि ।
पीयूषवृष्टिसृष्टया यं दृष्टया दिष्टया विदुर्बुधाः ॥३॥
विष्टपत्रितयोत्सङ्गरङ्गदुत्तुङ्गकीर्त्तिना ।
सनाथं येन नाथेन विश्वं विश्वम्भरातलम् ॥४॥
यस्मै चक्रे नमः सेवाहेवाकोत्सुकमानसैः ।
वीराय गतवैराय मर्त्यामर्त्यासुरेश्वरैः ॥५॥
यस्माद द्वेषादयो दोषाः क्षिप्रं क्षीणाः क्षमाखनेः ।
दोषा पूषमयूखेभ्य इव हर्यक्षलक्षणात् ॥६॥
यद्देहद्युतिसन्दोहसन्देहितवपुर्दधौ ।
रविः खद्योतपोतद्युत्याडम्बरविडम्बनाम् ॥७॥
भविनां यत्र चित्तस्थे स्युर्धीवृद्धिसिद्धयः ।
तं वर्द्धमानमानौमि वर्द्धमानसुभावनः ॥८॥
इति यस्ते वास्तवं पठति वीर ! जिनचन्द्र ! जातरोमाञ्चः ।
यात्यपवर्गं स द्रुतमखर्वगर्वारिवर्गजयी ॥९॥

[ ९७ ]

# सर्वजिनस्तवनम् ।

नम्राखण्डलमौलिमण्डलमिलन्मन्दारमालोच्छलत्–
सान्द्रामन्दमरन्दपूरसुरभीभूतक्रमाम्भोरुहान् ।
श्रीनाभिप्रभवप्रभुप्रभृतिकाँस्तीर्थङ्करान् शङ्करान्
स्तोष्ये साम्प्रतकाललब्धजननान् भक्त्या चतुर्विंशतिम् १

नन्द्यान्नाभि**सुतः** सुरेश्वरनतः संसारपारं गतः
क्रोधाद्यैरजितं स्तुवेऽह**मजितं** त्रैलोक्यसम्पूजितम् ।
सेनाकुक्षिभवः पुनातु विभवः श्रीशम्भवः **शम्भवः**
पायान्मा**मभिनन्दनः** सुवदनः स्वामी जनानन्दनः ॥२॥

लोकेशः **सुमति**स्तनोतु नमति श्रेयःश्रियं सन्मतिं
दम्भद्रौ **कलभं** मदेभशरभं संस्तौमि पद्मप्रभम् ।
श्रीपृथ्वीतनयं **सुपार्श्व**मभयं वन्दे विलीनामयं
श्रेयस्तस्य न दुर्लभं शशिनिभं यः स्तौति **चन्द्रप्रभम्** ३

बोधिं नः **सुविधे** ! विधेहि सुविधे ! कर्मद्रुमौघप्रधे !
जीयादम्बुजकोमलक्रमतलः श्रीमान् जिनः **शीतलः** ।
श्री**श्रेयांस** ! जय स्फुरद्गुणचयः श्रेयःश्रियामाश्रयः
सम्पूज्यो जगतां श्रियं वितनुतां श्री**वासुपूज्यः** सताम् ४

मोक्षं वो **विमलो** ददातु विमलो मोहाम्बुवाहानिलो
**ऽनन्तो**ऽनन्तगुणः सदा गतरणः कुर्यात् क्षयं कर्मणः ।
**धर्मो** मे विपदं छ्यताच्छिवपदं दद्यात् सुखैकास्पदं
**शा**न्तिस्तीर्थपतिः करोत्विभगतिः शान्तिं कृताघक्षितिः ५

कुन्थुर्मेघरवो भवादवतु वो मानेभकण्ठीरवो
भक्त्या नम्रनरामरं जिनवरं प्रास्तस्मरं नौम्यरम् ।
श्रीमल्लेखनतक्रमोज्झिततमो मल्लेऽस्तु तुभ्यं नमो
विश्वार्च्यो भवतः स पातु भवतः श्रीसुव्रतः सुव्रतः ॥६॥
लोभाम्भोजतमेश्वरोपम ! नमे ! धर्मे धियं धेहि मे
वन्देऽहं वृषगामिनं प्रशमिनं श्रीनेमिनं स्वामिनम् ।
श्रीमत्पार्श्वजिनं स्तुवेऽस्तवृजिनं दान्ताक्षदुर्वाजिनं
नौमि श्रीत्रिशलाङ्गजं गतरुजं मायालतायां गजम् ॥८॥
इत्थं धर्मवचोवितानरचितं वर्यं स्तवं मुद्युतः
सद्धर्मद्रुमसेकसंवरमुचां भक्त्याऽर्हतां नित्यशः ।
श्रेयःकीर्त्तिकरं नरः स्मरति यः संसारमाकृत्य सो–
ऽतीतार्त्तिः परमे पदे चिरमितः प्राप्नोत्यनन्तं सुखम्॥८॥
( कमलबन्धकाव्यं कविनामगर्भम् )

[ ९८ ]

यमकमयाः

## चतुर्विंशतिजिनस्तुतयः ।

जिनं यशःप्रतापारतपुष्पदन्तं समं ततः ।
संस्तुवे यत्क्रमौ मोहं पुष्पदन्तं समन्ततः ॥ १ ॥

---

अवचूरिः ।

सामान्येन जिनसिद्धान् स्तौति-अर्हतं पुंडरीकादिसिद्धं वा समं-सश्रीकं भक्ताभक्तेषु तुल्यं वा ततः तम् 'आद्यादिभ्यः' ( ७-२ –८४ ) इति द्वितीयार्थे तस्प्रत्ययः। सम्यग् बध्नीत ॥ १ ॥

प्रातस्तेऽङ्घ्रिद्वयी येन सरोजास्य ! समा नता ।
त्वयाऽस्तु जिनधर्माब्जसरोऽजाऽस्य ! समानता ॥ २ ॥
वन्दे देव ! च्युतोत्पत्तिव्रतकेवलनिर्वृतिम् ।
विश्वार्चित ! च्युतोत्पत्तिव्रतके बलनिर्वृतिम् ॥ ३ ॥
चतुरास्यं चतुःकायं चतुर्द्धा वृषसेवितम् ।
प्रणमामि जिनाधीशं चतुर्धावृषसेऽवितम् ॥ ४ ॥
जिनेन्द्रानञ्जनश्यामात् कल्याणाब्जहिमप्रभान् ।
चतुर्विंशतिमानौम्यकल्याणाब्जहिमप्रभान् ॥ ५ ॥
विलोक्य विकचाम्भोजकाननं नाभिनन्दनम् ।
द्रष्टुमुत्कायते कोऽपि काननं नाभिनन्दनम् ॥ ६ ॥
भवानीश ! सदा यस्याजित ! निष्कोप ! नाथति ।
अहितो न हि तं स्वाभिजितनिष्कोपनाथति ॥ ७ ॥

---

## अवचूरिः ।

सह मया–श्रिया या सा समा । हे अज !–अजन्मन् ! । त्वया समानता ॥ २ ॥ च्युतोत्पत्तिः–गतजन्मा । व्रतस्य कं–सुखं तस्य ईः–श्रीः यस्य । बला–पुष्टा निर्वृतिर्यस्य । ततो द्वन्द्वः । च्युतम्–च्यवनम् ॥ ३ ॥ वृषभैः–इन्द्रैः, देवानां चतुर्धात्वेन तत्स्वामिनामपि चातुर्विध्यम् । यद्वा देवानां वृषाणः 'ते लुग् वा' ( ३–२–१०८ ) इति देवपदलोपः । सह इया–श्रिया यः स से, अवितः–कान्तिमान् ततो द्वन्द्वः ॥ ४ ॥ अब्जं–रक्तोत्पलमत्र ग्राह्यम् । चन्द्रः ॥ ५ ॥ श्रमणभावत्वेन लुञ्चितकेशम् । विकासितं वा । कनति वा–शोभते यत् तत् अम्भोजं कन् ततो बहुव्रीहिः ॥ उत्सुकः स्यात् ॥ ६ ॥ नाथ इव आचरति–योगक्षेमकारी भवति । दहप्रभया । पीडयति ॥ ७ ॥

सनातनाय सेनाङ्गभव ! शं भव शम्भव ! ।
भगवन् ! भविकानामभव ! शम्भवशम्भवम् ॥ ८ ॥
दुष्कृतं मे मनोहंसमानस ! स्याऽभिनन्दन ! ।
श्रीसंवरधराधीशमानसस्याभिनन्दन ! ॥ ९ ॥
अज्ञानतिमिरध्वंसे सुमते ! सुमतेन ! ते ।
क्रियते न नमः केन सुमतेऽसुमतेन ते ॥ १० ॥
त्वां नमस्यन्ति येऽङ्कस्थपद्म ! पद्मप्रभेश ! ते ।
त्रैलोक्यस्य मनोहारिपद्म ! पद्मप्रभेशते ॥ ११ ॥
सद्भक्त्या यः सदा स्तौति सुपार्श्वमपुनर्भवम् ।
सोऽस्तजातिमृतिर्याति सुपार्श्वमपुनर्भवम् ॥ १२ ॥
सहर्षा ये समीक्षन्ते मुखं चन्द्रप्रभाऽङ्ग ! ते ।
विदुः सकलसौख्यानां मुखं चन्द्रप्रभाङ्ग ! ते ॥ १३ ॥
सदा स्वपादसंलीनं सुविधे ! सुविधेहि तम् ।
येन ते दर्शनं देव ! सुविधे सुविधेहितम् ॥ १४ ॥

---

अवचूरिः ।

शाश्वताय सुखाय । प्लुतविवक्षणात् अकाराभावे मलुक् । हे अजन्मन् ! ॥ ८ ॥ छिन्द्धि ॥९॥ शुद्धमते !–शोभनमते ! । रविरिवाचरति ॥ १० ॥ मनोहारिणी पद्मा–श्रीः यस्या नाथो भवति ॥११॥ न पुनः भवः संसारस्य जन्मनो वा यस्य । मोक्षम् ॥ १२ ॥ अङ्ग इति कोमलामन्त्रणे । मुखं–उपायं चारित्राद्यात्मकं, तन्मूलत्वात् स्वर्गापवर्गादिसौख्यानाम् ॥ १३ ॥ शोभनाविधे ! सुष्ठु विधया–प्रकारेण ईहितं वाञ्छितं–चेष्टितं वा क्रियाद्वारेण समाचरितम् ॥ १४ ॥

यथा त्वं शीतल ! स्वामिन् ! सोमः सोमो मनोऽहरः ।
भव्यानां न तथा भाति सोमः सोमो मनोहरः ॥ १५ ॥
तं वृणोति स्वयंभूष्णुश्रेयांसं बहु मानतः ।
जिनेशं नौति यो नित्यं श्रेयासं बहुमानतः ॥ १६ ॥
वाक्यं यस्तव शुश्राव वासुपूज्य ! सनातनम् ।
भवे कुर्यात् तमोदाववाः सुपूज्य ! सनाऽतनम् ॥१७॥
कस्य प्रमोदमन्यत्र विमलात् परमात्मनः ।
हृदयं भजते देवाद्विमलात् परमात्मनः ॥१८॥
दृष्ट्वा त्वाऽनन्तजिद् ! भावपराजितमनो भवम् ।
भविनां नाथ ! नोऽभ्येत्यपराजितमनो भवम् ॥१९॥
श्रीधर्मेण क्षमारामप्रकृष्टतरवारिणा ।
सनाथोऽस्मि कृच्छ्रवल्लीं प्रकृष्ट तरवारिणा ॥२०॥
त्वया द्वेधारिवर्गो यत् पदौ श्रीशाऽऽन्ति नाथते ।
शरणं तद्भवी ध्वस्तापदौ श्रीशान्तिनाथ ! ते ॥२१॥

---

अवचूरिः ।

सोमः-शीतलः । सह उमया-कीर्त्या । सोमः-अरौद्रः । सोमः-गौरशरीरयुक्तः ॥ १५ ॥ अप्रार्थितमपि स्वयं भवनशीलम् श्रेयः-भद्रम् यस्य तम् । बहु-अत्यर्थम् । मा-लक्ष्मीः । नतो-नम्रः । आन्तर० प्रीतितः ॥ १६ ॥ सनातनं-नित्यम् अतनं-गमनम् ॥ १७ ॥ परं-प्रकृष्टम् । आत्मनः ॥ १८ ॥ भावपरैः-आन्तरवैरिभिः हरम् ॥१९॥ प्रकृष्टेन-प्रकर्षेण । प्रकृष्ट-विनाशय इत्यर्थः । तरवारिः-खड्गविशेषः ॥ २० ॥ बाह्य आन्तरश्च । आन्ति-बबन्धे । नाथते-इच्छति ॥२१॥

वीतरागं स्तुवे कुन्थुं जिनं शम्भुं स्वयम्भुवम् ।
सरागत्वात् पुनर्नान्यं जिनं शम्भुं स्वयम्भुवम् ॥२२॥
विजिग्ये लीलया येन प्रद्युम्नो भवताऽदरः ।
भविनां भवनाशाय प्रद्युम्नो भवतादरः ॥२३॥
स स्यान्मल्ले ! नमल्लेखो मल्लस्य प्रतिमल्लते ।
क्रमौ मनसि यो मोहमल्लस्य प्रतिमल्ल ते ॥२४॥
विधत्ते सर्वदा यस्ते समुव्रत ! समुन्नतिम् ।
समास्वादयति स्वामिन् ! स सुव्रत ! समुन्नतिम् ॥२५॥
दृष्ट्वा समवसृत्यन्तर्नमीशं चतुराननम् ।
पश्येत् कोऽजितखं धीमानमीशं चतुराननम् ॥२६॥
श्रीनेमिनाथमानौमि समुद्रविजयाङ्गजम् ।
हेलानिर्जितसम्प्राप्तसमुद्रविजयाऽङ्गजम् ॥२७॥

---

अवचूरिः ।

जिनं–विष्णुम्, शम्भु–शिवम्, स्वयम्भुवं ब्रह्माणम् ॥ २२ ॥ कामः । अदरः–निर्भयः । प्रकृष्टेन त्यक्तं द्युम्नं–द्रव्यं येन स त्वम् । भवतात्–भव । हे अर !–जिन ! ॥ २३ ॥ नमन्तः–नमनशीला लेखा–देवा यस्य स तथा 'मदेच् हर्षे' मदनं–मत् 'कुत्सम्पदादिभ्यः' क्विप्प्रत्ययः। मदं–हर्षं लाति–ददाति 'क्वचित्' ( ५ । १ । १७१ ) मल्लस्य–हर्षदस्य । यद्वा मल्लस्य–अहङ्कारलावकस्य प्रतिमल्लते–धारयति ॥ २४ ॥ सह शोभनैः सः । समुत्–सहर्षः ॥ २५ ॥ जितखं जितेन्द्रियम् । अजितखं–अजितेन्द्रियम् । अं–विष्णुम्, ईशं–हरम्, चतुराननं–प्रजापतिम् ॥ २६ ॥ सम्प्राप्तः आसमुद्रं विजयो येन अङ्गजेन स हेलया निर्जितो नेमिना ॥ २७ ॥

शिवार्थी सेवते ते श्रीपार्श्व! नालीककोमलौ ।
न क्रमावनिशं नम्रपार्श्व ! नाऽलीक! कोऽमलौ ॥२८॥

वरिवस्यति यः श्रीमन्महावीरं महोदयम् ।
सोऽश्नुते जितसम्मोहमहावीरं महोदयम् ॥२९॥

श्रीसीमन्धरजिनस्तुतिः—

श्रीसीमन्धरतीर्थेशं सादरं नुतनिर्जरम् ।
योऽज्ञानं विदधे भस्मसादरं नुत निर्जरम् ॥३०॥

पञ्चदशक्षेत्रजजिनस्तुतिः—

ये वन्दन्तेऽर्हतो भारतैरावतविदेहकान् ।
प्राप्यते प्रवरोदर्का तै रा बत विदेहकान् ॥३१॥

सप्ततिशतजिनस्तुतिः—

सप्ततिशतं जिनानामुत्कृष्टपदवर्तिनाम् ।
वन्दे मनुष्यलोकेऽहमुत्कृष्टपदवर्तिनाम् ॥३२॥

---

**अवचूरिः ।**

नम्रः पार्श्वो यस्य सः सं० । असत्यरहित ! अमलौ–निर्मलौ ॥ २८ ॥ महान् उदयो यस्य तम् । अश्नुते–प्राप्नोति । महोदयं–निर्वाणम् ॥ २९ ॥ नुत–स्तुत । निर्जरं–जरारहितम् । नुतनिर्जरं–प्रणुतसुरम् ॥ ३० ॥ भरतैरावतविदेहकेषु भवान्, भरतैरावतविदेहकेषु नाकन्ति–शोभन्ते 'क्वचित् डः' (　　) प्रवरोदर्का–शुभायतिफला पुण्यानुबन्धिपुण्यफला इत्यर्थः । रा–लक्ष्मीः । बत इत्यामन्त्रणे । विदेहकान्–विदेहान् ॥ ३१ ॥ सर्वोत्कर्षतो युगपत् एककालभाविनाम् । उत्कृष्टपदे–प्रधानपदे ॥ ३२ ॥

नन्दीश्वरद्वीपचैत्यस्तुतिः—

श्रीमन्नन्दीश्वरद्वीपेऽप्रतिमाः प्रणुताऽच्युताः ।
द्विपञ्चाशति चैत्येषु प्रतिमाः प्रणुताऽच्युताः ॥३३॥

शाश्वताऽशाश्वतबिम्बस्तुतिः—

यद्यात्मनिच्छसि स्थानमकृत्रिममकृत्रिमम् ।
जैनबिम्बव्रजं तद्भेऽम कृत्रिमकृत्रिमम् ॥३४॥

त्रिकालजिनस्तुतिः—

ये जिनेन्द्रान् नमस्यन्ति साम्प्रतातीतभाविनः ।
दुष्कृतात् ते विमुच्यन्ते साम्प्रतातीतभाविनः ॥३५॥

साधारणजिनस्तुतिः—

परात्मानो जिनेन्द्रा यैर्नीयन्ते मानसं प्रति ।
पदं यान्ति जगन्माननीयं ते ऽमानसं प्रति ॥३६॥

आगमस्तुतिः—

सोऽस्तु मोक्षाय मे जैनो नयसङ्गत आगमः ।
अपि यं बुध्यते विद्वानयसङ्गत आगमः ॥३७॥

---

## अवचूरिः ।

अप्रतिमाः–प्रधानाः । प्रणुताच्युताः–नतेन्द्राः । अच्युताः–शाश्वताः । प्रणुत–स्तुत ॥ ३३ ॥ अकृत्रिमं–कौटिल्यरहितम् प्रशस्तभावमित्यर्थः । 'अम शब्दभक्त्योः । भज–सेवस्व ॥ ३४ ॥ परमात्मस्वरूपाः । ते भव्याः अमा–निश्रीका न सम्प्रत्यपि । अपिर्गम्यः । यद्वा अमाना–अपरिमिता सा–लक्ष्मीर्यत्र तद् अमानसं पदं तत् प्रतियान्ति ॥ ३५ ॥ नयैः–नैगमादिभिः सङ्गतः समन्तात् अनुगतः । गमाः–सदृशपाठाः यत्र स आगमः । अपिः भिन्नक्रमे । विद्वानपि–सुधीरपि । अयः–शुभावहं दैवं तस्य संयोगात् ॥ ३७ ॥

श्रुतदेवतास्तुतिः—

त्वन्नामाऽज्ञानभिद् **धर्मकीर्त्तये** श्रुतदेवते ! ।
यन्न कोऽपि तदग्रे स्वकीर्त्तये श्रुतदेऽवते ॥३८॥

सर्वसम्यग्दृष्टिदेवदेवतास्तुतिः—

यक्षाम्बाद्याः सुराः सर्वे वैयावृत्यकरा जिने ।
भद्रं कुर्वन्तु सङ्घाय वै यावृत्यकराजिने ॥३९॥

---

[ ९९ ]

## श्रीपार्श्वदेवस्तवनम् ।

---

विध्वस्ताखिलकर्मजालविलसत्सज्ज्ञानसद्दर्शनं
ज्योतीरूपमरूपगन्धमरसं स्पर्शादिभिर्वर्जितम् ।
सिद्धावस्थमवस्थितातुलसुखं वर्यैकवर्यात्मकं
निस्सीमातिशयप्रभावभवनं श्रीपार्श्वनाथं स्तुवे ॥१॥

काऽयं ते जिनराज ! राजकिरणग्रामाभिरामः स्तवः
क्वाऽहं प्रातिभसौरभस्फुरदुरुप्रज्ञाविहीनः प्रभो ! ।

---

अवचूरिः ।

अज्ञानभेदस्वभावं कीर्त्तये समुत्कीर्त्तयन्तं प्रयुञ्जे-आह्वयामि । अवते-चदते न कोऽपीति योगः स्वकीर्त्तये-निजस्फूर्त्तये ॥ ३८ ॥ या-श्रीः तस्या वृत्यं-आश्रयणं तस्य कं-सुखं तेन राजिते ॥ ३९ ॥

१ त्रिलोकोत्सवः ।

किन्तु त्वद्गुणराशिरक्तहृदयस्तत्र प्रवृत्तोऽस्म्यहं
शक्याशक्यविचारणासु विकलः प्रायो हि रागी जनः ॥२॥
विध्वस्तामय ! निर्जितेन्द्रियहय ! प्रक्षीणकर्माश्रय !
श्रीलीलालय ! निर्मितस्मरजय ! स्याद्वादविद्यामय ! ।
मिथ्यात्वप्रलय ! प्रहीणविषय ! स्फूर्जत्त्रिलोकीदय !
श्रीपार्श्व ! स्मयरोषदोषकुनयध्वंसिन् ! सदा त्वं जय ॥३॥
किं कारुण्यमयी किमुत्सदमयी किं विश्वमैत्रीमयी
किं वाऽऽनन्दमयी किमुन्नतिमयी किं सौख्यरेखामयी ? ।
इत्थं यत्प्रतिमां समीक्ष्य भविनश्चेतश्चिरं तन्वते
स श्रीपार्श्वजिनस्तनोतु विशदश्रेयांसि भूयांसि नः ॥४॥
आधिव्याधिविरोधिवारिधियुधि व्यालस्फटालोरगे
भूतप्रेतमलिम्लुचादिषु भयं तस्येह नो जायते ।
नित्यं चेतसि 'पार्श्वनाथ' इति हि स्वर्गापवर्गप्रदं
सन्मन्त्रं चतुरक्षरं प्रतिकलं यः पाठसिद्धं पठेत् ॥५॥
त्वं देवः शरणं त्वमेव जनकस्त्वं त्वं गुरुस्त्वं सुहृत्
त्वं बन्धुस्त्वमसि प्रभुस्त्वमसवस्त्वं मे गतिस्त्वं मतिः ।
तत् किं पार्श्वविभो ! पुरःस्थितमपि त्वं सेवकं किङ्करं
मामद्यापि लसद्दयारसिकया दृष्ट्यापि नो वीक्षसे ? ॥६॥
शस्योऽयं समयः क्षणोऽयमनघः पुण्या त्वियं शर्वरी
श्लाघ्योऽयं दिवसो लवोऽयममलः पक्षोऽयमर्चास्पदम् ।
मासोऽयं विशदः समाः स्फुटमिमाः श्रीपार्श्व ! विश्वप्रभो !
यत्र त्वद्वदनं व्यलोक्यत मया निःशेषसौख्यावहम् ॥७॥

धन्योऽहं कृतकृत्य एष नृभवस्तीर्णो भवाम्भोनिधि-
विंध्वस्तान्तरवैरिवारविषयो लब्धस्त्रिलोकोदयः[1] ।
श्रीमत्पार्श्वविभो ! सदा त्रिजगतीविश्रामभूरप्यहो
यस्त्वं हंस इवाऽधुना विदधसे मन्मानसे संस्थितिम् ॥८॥
इत्थं त्वा सितधर्मकीर्त्तिभवनं स्तुत्वेदमभ्यर्थ्यते
श्रीमत्पार्श्वजिन ! त्वयापि हितदा यस्मै कृते तत्यजे ।
प्राज्यं राज्यमनिर्बला च कमला शुद्धान्तबन्ध्वादिकं
विद्यानन्दपदाय स स्पृहयति त्यस्मै मदीयं मनः ॥९॥

---

[ १०० ]

## श्रीमहावीरकलशः ।

( अपभ्रंशमयः )

यस्तेजोऽस्तरवी रेखपवी रेकाद्रिभेदने !
महावीरऽत्र सम्मोहजयवीरे नतोऽस्म्यहम् ॥१॥
पुण्णिमचंदसधम्मकित्तिवरविज्जाणंदं
नमिअ जिणिंदं भत्तिजुत्तपणमिरदेविंदं ।
पयडिस्सं सिरिवद्धमाणजिणजम्मणमहिमं
जिम्ह सुरगिरिसिरउवरि रइअ सुरवरिहि सुरम्मं ॥२॥
अत्थित्थ खत्तिअकुंडगामे मणभिरामे पुरवरे
वरसिद्धत्थराओ पवरकाओ सुरवरो विव सुरपुरे ।

---

१ त्रिलोकोत्सवः

तस्सासि तिसला केलिकुसला कोमलंगि सुगेहिणी
जियरूवदेवी सव्वदेवीलोअमाहि सिरोमणी ॥३॥
अह पाणयाओ सुहलयाओ चविउ वीरजिणेसरो ।
आसाढविअसे छट्ठिदिवसे नाणतेअदिणेसरो ।
अवयरिउ गब्भे सुहपगब्भे तीइ चउदस सुविणए
गयसीहपमुहे लच्छिभिमुहे दरिसयंतो रमणए ॥४॥
ता तिजयसामिणि हंसगामिणि वहइ गब्भ सुहरिसिआ
जिम साइसलिलह बिंदु निम्मलसुत्तिमुत्तिअसरिसिआ ।
चित्तमासह सुद्धतेरसि लहिय मज्झिमरत्तयं
पसवेइ नंदणु सीलसंदणु सकललोअपवत्तयं ॥५॥
अह उड्ढलोअह पुव्वदाहिणपच्छिमुत्तररुअगओ
अट्ठट्ठ कुमरिअ चउरविदिसिहि चउर मज्झिमरुअगओ ।
आवित्तु विरयहि जम्मि वीरह सूइकम्म सुदिक्खिआ
पवणब्भदप्पणकलसवीअणचमरदीवयरक्खिआ ॥६॥
अह ओहिनाणिण जम्मु जाणिण जिणह आसण उट्ठिओ
चउरंगनामं तिअपणामं करिवि जाणुदुगट्ठिओ ।
पंजलिअ कहियं सक्कथययं सक्क हरिणिगमेसिणं
जिणमहिमकारणि घंटताडणि आइसइ निदेसिणं ॥७॥
पालगविहियविमाणिं लक्खजोयणपमाणि
आरूहिउ आगम्म थुणवि जणणिं बहुमाणिं ।
'अवसोअणि पडिमुत्ति मुत्तु करि गहिउ जिणेसरु
इगरूविण धारिंतु छत्तु अवरेण सुरेसरु ।

तिहुअणमंतभिमंतिऊण चंदणलेवेण य
नासइ तह तुह देव ! देवसमरियपयपंकय ! ॥४॥
अइघणदाढादंतपंतिवेयणविहुरीकय-
लोअलक्खसुहकरणपवणसत्तक्खरसंपय !।
अत्तिं नित्तह हूंति तं न रविकूकडडुंबह
तह तुह नामिण टलइ नाह ! तक्खणि जप्पंतह ॥५॥

---

अवचूरिः ।

अष्टावष्टौ तथैवाष्टौ विन्यस्याक्षरमण्डलम् ।
तथाष्टशतजापेन ज्वरमेकान्तरादिकम् ॥ ४ ॥
रिपु-चोर-महिपाल-शाकिनी-भूत-स्तम्भवाम् ।
अरण्य-पशुजां भीतिं हन्ति बद्धं भुजादिषु ॥ ५ ॥
पुष्पमालां जपित्वा च मन्त्रेणाष्टशतेन च ।
प्रक्षिप्ता पात्रकण्ठेषु भूतादीन् स्तम्भयेद् ध्रुवम् ॥ ६ ॥
गुग्गुलस्य गुटीनां च शतमष्टोत्तरं हुतम् ।
दुष्टमुच्चाटयेत् सद्यः शान्तिं च कुरुते गृहे ॥ ७ ॥
देवस्या**जितसिंहस्य** नीलवर्णस्य संस्तवात् ।
लभन्ते श्रेयसीं सिद्धिं कदयो वाञ्छितैः सह ॥ ८ ॥
श्रीअश्वसेनपदपङ्कजभास्करस्य
पद्मावतीधरणराजनिषेवितस्य ।
वामाङ्गजस्य पदसंस्तवनाल्लभन्ते
भव्याः श्रियं सुभगतामपि वाञ्छितानि ॥ ९ ॥

अनुक्तमिदमक्षरं वारत्रयं ताम्बूलदले श्रीखंडेन लिख्यते, लिखित्वा रविवारे विंटी कृत्वा कनिष्ठांतरेण कृत्वा ग्रन्थिर्याति ॥ ४ ॥

" ॐ समयलूणी " अनेन सप्तवारं सूचीशकलमभिमन्त्र्य भित्त्यादौ क्षिप्यते दंतपीडा याति। "सूर्यडुंबकूकडउ एक भाणइं जीमइं आंखि रोग टलइ।" अनेन वार २१ उंज्यते नेत्रपीडा याति ॥५॥

| | | | |
|---|---|---|---|
| ३ | १ | ४ | ३ |
| +६ | ५ | ६ | ८ |
| १३ | ६ | ९ | ८ |

रविदिण सोवणदेविमंति कुसमुट्ठिभिमंतिय
छिंदिय छिंदिय सत्तवार रंघिणि जह जंति अ ।
तिण्णि तेल मेलेवि तुल्ल मारिअ जण बाणिहिं
मंतिअ तह पुग **आदिनाह** ! निसुणिअ तुह वाणिहिं ॥६॥

नवमीदिण गुरुदिन्नपवर हाहू नवमंतिइं
त्रिगडू टंकणखार गयगवल्ली गद झत्तिइं ।
सैंधव हरडिलुद्दवचाहिंगू जइ नासइ
विसहरविष तह **आदिदेव** ! तुह नामिइ नासइ ॥ ७ ॥

---

## अवचूरिः ।

"ॐ सर्गद्वारे तिहां छइ मांडवी कटमांडवी सोवन्नाची भिराडी:रूपाची कुहाडी अमुकातणी रांघिणी तोडि घालि बडइ वेगि जः जः जः रांघिणी बडइ वेगि जः बापुसुवर्णदेव्याकी शक्ति फुरइ " गोमयगुंहलिकायां पादौ धारयित्वा दर्भमुष्ट्या-वार ७ उंजित्वा तीक्ष्णकुठारिकयाऽग्रतोऽग्रतो वार ७ दर्भः छिद्यते रवौ रांघिणी निवर्तते ॥ एरंडितैल, तिल तैल, सरसवतैल, समभाग मेलिजे, बाण कुणहनइं लागु हुइ तेणइं बाणइ ते तैल अभिमंत्री तिहां खरड कीजइ रांघिणिर्याति। अभिमंत्रण मन्त्र ए जाणिवो ॥ ६ ॥ 'हाहू नबहितनु स्सेफातनुरक्तनयः हनूंसकेनी तई नस्म स्वाहा ' रजोहरणेन २१ ऊंज्यते विषधरविष यात्येव । वृश्चिकादीनामपि । सुंठि, पीपरि, मिरी, टंकणखार, धूंसउ ए सघलां समभागे मेली जिहां डंक हूइं तिहां दीजइं अथवा दसमइं दुआरिं गदचारिइं सर्पविषं याति । सैंधव, हरडइं, लोद्र, दक्षिणी हिंग, वज ए समभागि मेली पुरुष मूत्रिइं, अथवा व्याघ्रमूत्रइं नास दीजइ सर्पविष जाइ, अनुक्तमपीदम् । कविष्टवटिका पानीयेन डंके दीयते खर्जूरकविषं यात्येव ॥ ७ ॥

रक्खसदंडमनाममंति जर जाइ दुरुत्तर
पाळूतंतिइ रत्ति जह चेव सउत्तर ।
ईसरनेत्त भुअंगवल्लि वायसमल रक्खणि
तीयजरं तेणेक्क सत्तमिरि अंजणि नित्तणि ॥ ८ ॥

तुलछीदलनवमिरिअयोगि एगंतर नासइ
पुण पूगीफलभंगराजि नवि आयइ पासइ ।
सीसकवेअण दूरि जंति धवली एकक्खरि
तह तुह कामिअकामकुंभ ! पयतलि जगभित्तरि ॥ ९ ॥

' ॐ नमो जूर्नालिअजारि ' इअ मंत पहाविइं
मीणइ मीणिअ टोर होइ नीरोगि सहावइ ।

---

अवचूरिः ।

" ॐ रत्नमध्यस्थितो द्योतदंडमो नाम राक्षसः ।

तस्यैकाह्निकद्व्याह्निक–त्र्याह्निक–चतुर्थक–विषमज्वरं विकटज्वरं, वेलाज्वरं तेन बन्धेन बन्धामि येन वासुदेवेन बलिर्बद्धः रक्ष रक्ष महाबल स्वाहा " २१ वार जापः ३, ३, वार एकैक गांठि बान्धिइ ७ गांठि देइ पछइं त्रिणि वार कही दोरु बांधिइ काकेऽनुत्थितेषु ज्वरगृहीतेन गुरोराह्वानं कार्यं, पाछउ राउल ! राउल ! । गुरुर्भणति कउण छइ ? स कथयति गुरु गोसामि ! एकांतरादि । गुरुर्वक्ति ज्या, ज्या, इति पश्चाद् ज्वरगृहीतेन गम्यते । पश्चादनवलोकनपूर्वं दिवसोदयं ( ज्वरवेलां ) यावदमिलनं च । अडागरपत्रत्रयवीटिकां कृत्वा चूर्णकस्थाने द्विकसकृत् क्षिप्त्वादीपालिकादिने दीयते तृतीयज्वरो यात्येव । रवौ कृतद्व्यैकैकटंक विष्टां सप्त मरिचानि संमील्य गुटिकांजनेन तृतीयज्वरो याति ॥ ८ ॥

तुलसीपत्र ३ मरीच ९ भक्षणे वेलाज्वरो याति । पक्वपूगीफलखण्डभक्षणे भंगरापत्रभक्षणे वाऽपि ज्वरनाशः । खटिकया भाले ५ । ९ । ७ एतल्लिखने सीसका यान्ति ॥ ९ ॥ ॐ नमो जूनली जारिमालि मूल प्रसरंति अमीअ झरंती राम सीता एह्वी प्रीति जाइ रे विसट्टि "

ईलीमंतभिमंतिऊण चाउलजलपानइं
हरिसा जंति तिसंझि बीअगुणणेणं मानइं ॥ १० ॥
'ॐ नमो हनुमंत' मंति बरहल्लि पणासइ
गोल्हामूलिइं कंठमाल तह चीरिअ पासइं ।
आमल आरण तुल्ल भागि गयमुत्तिं भाविइं
नासइ कस तुह पायकमलि सेवइ निअभाविइं ॥ ११ ॥

## अवचूरिः ।

इणइ मंत्रि २१ वामकर्णे कथ्यते मीणक उत्तरति । ॐ नमो ईअले पीअले हेमवंतनिवासिनी निजजलगंधा वसरिसगंधा नासा हरिया वाता हरिसा होता कृष्णा होता नंदिका सिणगारी सुभटकरा मोरो पीठ जो न प्रकाशइ चतुर्ब्राह्मण प्रधात कालकालो महाकालः पत्राणि ह्रां ह्रीँ फुट्ट फुट्ट स्वाहा " वार २१ जलचुलुक ३ मंत्री पीयते हरिषा यांति । 'ॐ नमो ईली तेली नीली हेमपंथनिवारिणी नाका हरिसा वाता हरिषा कृष्णा नर धोंधका मोरी विद्या न प्रकाशइ चतुर्ब्राह्मणघातक कालि ! २ महाकालि ! व्यंतरि ! स्वाहा " मोरी विद्या प्रकाशइ ते कुलि हरिस नही' २१ गुणयेत् त्रिसंध्यां हरिषा यांति ॥ १० ॥

" ॐ नमो ब्रह्मा कुपुत्र काटंत कुटंत तरकु हनुमंत लंक छोडी पदो लंक जाइ, माणस छोडी भंडिआ खाइ खाइ " एनं मंत्रं भणित्वा उदरोपरि विंगणं मुक्त्वा ७ चीर्यते सप्तवारं पश्चात् यथेष्टं चीर्यते बरहलं याति । शेषं गुरुगम्यम् ॥ गोल्हामूलं संघृष्य दीयते मध्ये लेपश्च कंठमाला याति । 'ॐ नमो जत्ता विचित्ता सर्वरोगविसंभविपत्ता समरंती सुह संति करंता हटइ रोग मूल सवि टालंती, तिहुयणमेहल सुनि करंती झंझावाइ तक्खणि जाइ नामेण न जाइ तु विसविसण्णं' चीरिकायामयं मन्त्रो लिखित्वा गले बन्धनीयं कंठमाला याति ॥ आमलां काचां आणी कलिया काढी सूकवीइं, वाटी चालीइं, आरणां छाणानी राख बाली नान्ही सूक्ष्म कीजइ सममात्रा ए बे वानां एकठां कीजइ, गजमूत्र भावना २१ तदभावे मानवमूत्र, पश्चात्तेनौषधेन नासो दीयते कसरोगा याति ॥ ११ ॥

गवरिमंति घणपीड टळइ कारणि अभिमंतिअ
घट्टितक्खिपयपउर हवइ रविदिण भोअंतिअ ।
कनकबीअपूइकन्न सुणह विसबेग विणासइ
भीनमहादेविमंति झत्ति ण वाउ पणासइ ॥ १२ ॥
कणयरिमणसिलअक्कामूलकुंकुमगोरोअण–
गोली निम्मिय तिलयजोअ जणमाणसमोहण ।

## अवचूरिः।

" ॐ नमो गवरी कंति इक पास महादेवनइ दोरडा जाप गंठि अंचलि पीड महादेव पासि महादेव करि करि कलकली जाए गंठि अंचलि गली " अडीआ छाणानो राख वार ७ अभिमंत्र्य स्त्री पाहिं अंचल चंपाविइं राखसि-यदि तस्या दक्षिणस्तदात्मीयवामाञ्चलोपरि रक्षा ध्रियते । यदि तस्या वामस्तदात्मीयदक्षिणः पीडा याति । " ॐ कारणि प्रसव ठः ठः ठः स्वाहा " वार २१ अभिमन्त्रि घसि छासि सीरामण दीजइं रविवरि, स्तन्यमायाति निश्चयेन । कनकबीजान्येकैकवृद्धया ५० दिनानि यावत्तदन्वेकैकहान्या ५० दिनैः सर्वाणि मुच्यन्ते एतावताऽलर्कश्वा शृगालविषं याति । वन्ध्याकर्कोटिका डंके दीयते । उत्तुंग तोरण सर्व–कुंकुडलंगोर ढालइ महादेवना हइ कसण ढलि जाइ बलि छिनु मुसल छिनु काखबिलाइ छिनुं ऊगत छिनुं पाठु छिनुं भामर छिनुं काला होडी छिनुं वाय छिनु गड छिनुं गुंबड छिनुं चोरासीसो दोष छिनुं अष्टोत्तरसो व्याधि छिनि २ भाग महादेव मंत्रेण विष्णु-चक्रेण रुद्रहस्तेन छिनि २ पालिकया उंज्यते ॥ १२ ॥

कुंकुम–गोरोचन–कणयरी–मणसिल–श्वेतार्कमूलानि समभागेन सम्मील्य गुटिकां कृत्वा मेर्वायातवेलायां १०८ वर्द्धमानविद्ययाभिमंत्र्य तिलकं क्रियते राजवश्यम् । ऋजुमतस्त्रीइचकसिचयकज्जलकारिकाथकादि माही घाली गुटिका करी पतिभक्षणे पतिवश्यम् । गोरोचन टांक २ पोटली बांधी ऋतुसमये द्वारे त्रिदिनीं यावत् स्थाप्यते । नीतिकालं विमुच्य तदन्वन्य

धम्मि नारिअ सूईवत्थकज्जलसंयोगिइं
पइवस जइ विहु दुट्ठ चित्त कावालिपयोगिइं ॥ १३ ॥
चउवडिमंति अ वाविसत्तकक्करि लहु विक्कय
होसो दोलकनंदकुट्टि लिहिऊणय वालय ।

## अवचूरिः ।

वस्त्रेण बद्ध्वा वर्तयित्वा गुर्वभिमन्त्रितवासादि क्षिप्त्वा लपनश्रीमध्ये पतिभक्षणे पतिवश्यम् । अनुक्तमिदम् ॥ श्वेतदुर्वावचाकुष्टं मांसी तगरमेव च । एष कापालिको योगो नरनारीवशंकरः ॥ स्त्रीणां शिरसि दातव्यः पुरुषाणां तु पानतः ( पादयोः )। अदासो दासतां याति यावज्जीवं न संशयः ॥ षट्पदीयम् ॥ दंताभ्यां गृहीत्वा मस्तकोपरि उच्छाल्य स्मशानघटसत्कपाधरी ठिक्कारिका चूर्णमध्ये क्षेप्याः स्तोकाः उपराठी टिक्करिका मर्दयित्वा छटा क्षिप्यते विप्रयोगः परस्परम् ॥ १३ ॥ " ॐ नमो अरिहंताणं ॐ नमो सिद्धाणं, ॐ नमो अणंतसिद्धाणं सिद्धयोगधराणं सव्वेसिं विज्जाहरपुत्ताणं कयंजलि इमं विज्जाहिरायं पउंजामि इमं मे विज्जा सिज्जउ । अरे काल बाल कालि तुं सरवर रेआवत्तो चोवडि स्वाहा " वापीपानीयहारिदंडगसत्ककर्कर ७ रवौ अनेन मंत्रेणाभिमंत्र्य क्रयाणोपरि मुच्यते ततः शीघ्रं विक्रयो भवति। लाभश्च ।

| | | | |
|---|---|---|---|
| ८ | १५ | २ | ७ |
| ६ | ३ | १२ | ११ |
| १४ | ९ | ८ | १ |
| ४ | ५ | १० | १३ |

| | | |
|---|---|---|
| हो | सो | दो |
| ल | ल | ल |
| क | क | क |

इदं यंत्रं लिखित्वा वालुकोपरि मध्यलकारं तन्मुखे कृत्वा इदमेव द्वितीयं यंत्र कागदे लिखित्वा नन्दप्रमिततन्तुभिर्दवरकं कृत्वा वालुकोपरि बध्यते तदुपशमः । दृष्टप्रत्ययः ॥ " ॐ नमो ब्राह्मणनुं रक्त क्षत्रियनुं रक्त चंडालनुं

चच्चरि धूलिभिमंतिऊण जह सामिणि मंतिणि
खग्गपहारविआर जंति तह तुह जिण! नामिणि ॥ १४ ॥
ॐ तवीवरमंतलद्धजवकक्खणसुद्धी
नरगोसामी मंत पत्त घड विसहरलद्धी।
गोलाइ अ महदिव्वभीइनिन्नासणतप्पर
अज्जुणमंतपहावि हुज्ज तुह जिण! नामक्खर ॥१५॥
सिरिवरकुक्करि खित्तवाल बलमंत भयंकर-
दुट्ठ कढिणहिअवेरवग्ग खय जंति अ तक्कर।

## अवचूरिः।

रक्त पावइ पच पचइ पीडा करइ तु स्वामी देवतानी आज्ञा छइ" ६४ चच्चर धूलिमभिमंत्र्य खङ्गप्रहारं विकाश्य भ्रियते शस्त्राघातोपशमः ॥१४॥

"ॐ नमो तवी चक्री चडी श्रीमहादेव भरडानइं कन्हइं गइ चीखली थांभाविंकादची घा मुद्रिकादि कथ्यते परं ताप्याकरो न लगति तथा क्रियते आस्ये पुनः पुनर्भण्यते दिव्यस्तम्भः। "ॐ नमो, कालो कूकडो थालि उघाडइ आज स्वामी छडी चडवडइ आरडइ चुंहक्या जाइ पराणा डाचु फाडइ तु-गोस्वामीनी आण" १३ भणित्वा घटे करः क्षिप्यते फूत्करोति, न परं द-शति। "ॐ नमो अर्जुन काठइ अर्जुन प्रज्वलइ कंठरुंधा भारसोवन्न भिराडी व्यंतरी चीखला कादवी सर्पतणी वीस कोहली खाइ" इणि मंत्रि बावन्न-पल तैल थंभउ बावन्नपल लोह थंभुं श्रीकमल ओल्हाइ फुरउ श्रीदातारनी आज्ञा॥" अंबर महिअल सो पायारु, झंपा मन्दिर करी झाल। पत्र-पूतक हनुमंत वीर सती सीता देखइ अग्नि बलइ अग्नि पग्नि तुं पायसे जेही महुं पाणी ७ सर्वदिव्यस्तम्भः ॥ १५ ॥

"ॐ नमो कूकरा क्षेत्रपाल कणयरीवर्ण रुद्र विकराल, अम्ह सिउ करइ आलमाल, तेह सिरि उठइ ब्रह्मजाल, अम्ह सिउ करइ ते मरइ प्रभु

अट्ठुत्तर सय लूणखंड हणुमंतिभिमंतिअ

हवणि समय अरिजुंतु जाय तुह नाह ! सरंतिअ ॥१६॥

गवरीपुत्तयमंतजोगि तह मूसगपंती

रविदिण दूरि पलाइ झत्ति तिवलदि खायंती ।

अंजणिनंदणमंति लग्गि तक्खिणि पुण गच्छह

हर हरमंतिग वुद्धिहाणि वच्छह जग इच्छह ॥१७॥

---

## अवचूरिः ।

तोरो आज्ञा फुरइ " चच्चररजो रिपुवाम ७ पदधूली श्मशानभूतिं सम्मील्य श्यामांशुके पोट्टलिका अनुभूतनिम्बे बन्धः । अर्युच्चाटः ॥ " ॐ लंका महिधर हरइ हणुओ इम भणइ हुं बिहुं तस माणसह जो जलि होम करेइ स्थाले लवणखंडे नारीनाम लिखित्वा उपरि जलेन भाजनमापूर्य १०८ लवणखण्डानि करे कृत्वा एनं श्लोकं भणित्वा शत्रुनाम मनसि संचिंत्य होमः क्रियते द्विषत्सानुकूलो भवति । दृष्टप्रत्ययः ॥ १६ ॥

" गवरीपुत्त विनायक वाहण, तसु चंडिआ मूसे साहण । अलुपट-पाटि, एह भुइं छोडी अवर भूइं काटि ।। " अनया गाथया ६४ अभिमंत्र्य तिलपट्टी मूषकागमनस्थाने रवौ मुच्यते तदुपद्रवो न भवति । " ॐ नमो हनुमंताय अंजणापुत्र बालब्रह्मचारित्रणाय काचा लागि छिन्नि २ कट्टय २ स्वाहा ॥ " वार २१ तैलमभिमंत्र्य जले मुक्त्वा चीर्यते । लागिचीरणमन्त्रः "ॐ हरहुंहः हतांशुके १०८ । यत्सत्यं त्रिषु लोकेषु० " ॐ सच्चं भासइ अरिहा सच्चं भासेइ केवली भयवं । एएण सच्चवाएण एअं निमित्तं मा विभचरउ स्वाहा" वार ७ " ॐ ह्रीँ " वस्त्रप्रान्ते लिखित्वा अनेनैव मन्त्रेण अक्षरद्वयरूपेणाभिमन्त्र्यते वस्त्रम् ॥ १७ ॥

नयरपयाहिण चिरनिवास सप्पह निव्वासण
आधामंतयसत्थ जोअ पेट्टचीसारण ।
मीटुं राउलमंत सत्थि सुहपसवह कारण
तइ तुह सामिअ ! नामजाण संसारह तारण ॥ १८॥जुअलम्॥
पारसपीपलसुंठिनागकेसरवद्धारह
संदेसरि हरधरणिपत्त आसंदिअखंडह ।
दारू द्लद्दह एगवन्नि तंबाघयलेहणि
सूइअ भूआ वच्छसेणि पावइ निरुकारणि ॥ १९ ॥

अवचूरिः।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ६४ | २ | ३ | ६१ | ६० | ६ | ७ | ५७ |
| ९ | ५५ | ५४ | १२ | १३ | ५१ | ५० | १६ |
| १७ | ४७ | ४६ | २० | २१ | ४३ | ४२ | २४ |
| ४० | २६ | २७ | ३७ | ३६ | ३० | ३१ | ३३ |
| ३२ | ३४ | ३५ | २९ | २८ | ३८ | ३९ | २५ |
| ४१ | २३ | २२ | ४४ | ४५ | १९ | १८ | ४८ |
| ४९ | १५ | १४ | ५२ | ५३ | ११ | १२ | ५६ |
| ८ | ५८ | ५९ | ५ | ४ | ६२ | ६३ | १ |

"ॐ पंचमी देवो यस्य गृहं न त्यजति तस्य गृहे रक्षार्थं रवौ ग्रामं प्रदक्षिणापूर्वं चतुष्ककानि यानि समागच्छन्ति तेषां धूलिर्गृह्यते तया छिद्यते स्वसौधं पश्चात् स प्रयाति ॥ "ॐ नमो आघा माघा पाघा कहिइं खरकाटउ खरकरपटउ खर न विष आधारि ॐठः ठः स्वाहा ॥" २१ वार कटारिकया चूरिमकमन्त्रिमंत्र्य पद्मासनोपविष्टस्य पुंसो दीयते पेट्टची स्थाने समायाति ॥

"मीउउं राउल मीठउ तेल, नीकल पोइआ माघा पेल" १०८ छुरिकया तैलमभिमंत्र्य तदुदरे पृष्ठे वस्त्रप्रान्ते अभिमन्त्यते अभ्यंगे सुखप्रसवः॥ १८ ॥

संदेसरानां पान तुलसीपान नागकेशर १२ टांक पारसपींपल फल १२ टां आसंधि १२ टां खांड टां. १२ वृद्धदारु टां. १२ सुंठि टां. १२ दारुहलद्र टां. १२ एकवर्णगायना घीसिउ अवलेही कीजइ टां. ३ प्रमाण अपत्यप्राप्ति हुइं, ऋतुस्नानानन्तरं प्रारभ्यते ॥ १९ ॥

विहिकयविम्हिअमंततंत महरोगपणासण
हिमवंतमंतिहि नीरपाण तह सूलनिवारण ।
उत्तरवारुणिमूल देव ! कज्जलनित्तंजणि
दाढंतरि संठावणे अत्तणि वस तुह कित्तणि ॥ २० ॥

## अवचूरिः ।

ॐ ह्रीँ ऐं क्रौँ नमः एषा ब्राह्मी पञ्चांगुली।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ७१ | ६४ | ५९ | ८ | १ | ६ | ४४ | ३७ | ४२ |
| ६६ | ६८ | ७० | ३ | ५ | ७ | ३९ | ४१ | ४३ |
| ६७ | ७२ | ६५ | ४ | ९ | २ | ४० | ४५ | ३८ |
| २६ | १९ | २४ | ४४ | ३७ | ४२ | ५३ | ४६ | ५१ |
| २१ | ३३ | २५ | ३९ | ४१ | ४३ | ४८ | ५० | ५२ |
| २२ | २७ | २० | ४० | ६५ | ३८ | ४९ | ५४ | ४७ |
| ३५ | २८ | ३३ | ८० | ७३ | ७८ | १७ | १० | १५ |
| ३० | ३२ | ३४ | ७५ | ७७ | ७९ | १२ | १४ | १६ |
| ३१ | ३६ | २९ | २६ | ८१ | ७४ | १३ | १८ | ११ |

ॐ हिमवंतस्योत्तरे पार्श्वे अश्वकर्णो महाद्रुमः । तत्रैव शूलमुत्पन्नं तत्रैव निधनं गतं स्वाहा । अनेन उंजनम् । कालापानीयादि क्रियते रोगनिवृत्तिः ॥ अनया गाथया २१ वार पानीयमभिमंत्र्य पाय्यते शूलं याति ॥ उत्तरवारुणीमूलं जिनप्रतिष्ठाञ्जनमेकत्र मीलयित्वा नेत्राञ्जने दंष्ट्रामध्यस्थापने च नृपवश्यम् ॥ २० ॥

सिद्धचक्रयन्त्रस्तु पञ्चमो ज्ञेयः । यन्त्रचतुष्कम् ।

ॐ ह्रीँ श्रीँ कीर्तिमुखमन्दिरे स्वाहा ॥ एनं मन्त्र वार २१ जप्त्वा आस्योपरि हस्तो वाह्यते ।

“ ॐ नमो इन्द्राग्नि अग्नि वज्राग्नि बन्धामि बद्धोऽसि वैश्वानर ! मा चल मा क्रम ठः ठः ठः स्वाहा ॥ वार २१ अथवा ७ कांजिकमिभमंत्र्य धारावटी दीयते अग्निस्तम्भः ॥

ॐ नमो इंदग्गि मंति पुण पासह मंतिण
अभिमंतिअ सोवीरनीर पसमइ जह वन्हिण ।
अरिहदहक्खरिजाव होइ लच्छी कुलमंदिर
पायपसाइ तुह जिणिंद ! नरवंछियसुंदर ! ॥ २१ ॥
पण जंती वक्खालनीर अंबिल इकवीसा
निअकुलवंतरदोस दमइ तक्खणि निस्सेसा ।
'मुहमंदिर' अभिमंतिऊण मुहमंदिरे मंतिइं
सयल सहाजणरंजणिक्क वयणुक्करसत्तिइं ॥ २२ ॥
अट्ठुत्तरसयगयणजड्डी बिल्लीतरुकंटय
खित्तिभिमंतिय वार सत्त नालयधुअसंगय ।

---

अवचूरिः ।

" ॐ नमो भगवते श्रीपार्श्वनाथाय ज्वल २ प्रज्वल २ महाग्नि स्तम्भय २ स्वाहा ॥ ॐ क्रौं ठः ठः स्वाहा ॥ वार २१ अभिमंत्र्य धारा दीयते आगि उल्हाइ ॥ २१ ॥

" ॐ ह्रीं यं रं लं वं अर्हं हंसः " जिनार्चनसमये १०८ जापे लक्ष्मीप्राप्तिर्भवति । ॐ ह्रीं श्रीं कीर्तिमुखमन्दिरे स्वाहा ॥ " ॐ ह्रीं ह्रँ क्लीं महालक्ष्म्यै नमः स्वाहा ॥ " दिनप्रति वार १०८ जापेन लक्ष्मीप्राप्तिर्भवति ॥ २२ ॥

खेजडी कांटा १०८, बीलीना कांटा १०८, एकत्र कृत्वा मन्त्रेण सप्तवारमभिमन्त्र्य करवडामुखं मुद्रीयते, नालुअधूमो गुह्ये यथा याति तथा क्रियते । अभिमन्त्रणमन्त्रोऽयम्—

' ॐ नमो खोडिया क्षेत्रपाल ! हाथिं कपाल बाबर केश गलइं रुंडमाल अट्टहसार मोहतणा आभरण, वज्रांगि बेसण निश्वास आसण,

तह अडसय कणवीर पुप्फि निअठाणा जलणिइं
तह सगवारि पहे गिहम्मि जायइ तुह झाणिइं ॥२३॥

## अवचूरिः ।

कलिकलिंत चालइ, फेत्कार मेल्हि आवंतु, किसी परि जाणइ, गाजंति गडगडंति, मेघजिम धडकंति, वीज जिम झबकंति, गात्र भिरडंति भीडंति, हाड गूड करडंति, शोषंति, मूआ मडां चबडंति, चाटंति, बाढंति, चउद भवन फोडंति, गिरिशिखर त्रोडन्ति, कोपिं ज्वाला प्रज्वलंति, कानिं कुण्डल झिगमिगंति, कांति झबकंति, सात समुद्र सोसंति, चूचक्र चालंति, बहु दोष निग्रहंति, चालि हो स्वामी ! खोडिया खेत्रपाल ! ईश्वर जगन्नाथ तणा पुत्र क्षण वार एक तिहां हुंता चालि उज्जेणीनगरी अहूठ पीठ हरि, सिद्धदेवो सिद्धवड, सिद्धखेत्र, तिहां हुं तु उभी चाविलि चालति, घुघरि वाजंति, अरहठ माला पागडी पाडंति, शाकिनी शीहारी तणा गर्भ गालंति, भोगा मारंति, बाप वीर वीराधि वीर हाकिउ वली प्रसंशिओ, बोलि लाइउ, लागि चलाविउ, चालि ८४ दोषनिग्रह, मनपवनवेगिं चालि दुष्ट दोष जाणि पातालि, घालि उलकरि, छिद्रम करि, जाण करि, विन्नाण करि, वेध करि, अपवेध करि, चाचरि जइ, मंडल जइ घालि, रूप परावर्त करि हामि, रोइ, छल जोइ, छिद्रम जोइ, डाकिनी बांधि, शाकिनी बांधि, मोगू बांधि, मोगी भूत बंधि, बांधि करि तोरा पाय तलिं घालि बाप प्रचंड वीर खोडिया खेत्रपालनी शक्ति फुरइ ॥

प्रथम १०८ होमः पश्चाद् वार २१ कणयरी, २१ गुग्गलक गोली २१ उडद तेल चोपडी कृष्णचतुर्दशीदिनेऽभिधानं गृहीत्वा पात्राग्रे होमः । चउदशी सात लगइं होमः क्रियते क्षेत्रपालादयो यांति ।

तथा १०८ कणवीर रविदिने उपरि रहो मुंकाविइं ते सर्व पाकमध्ये क्षिप्यते दोषनाशः । १०० कूपवारि–धोबीनुं वारि, चर्मकारनुं वारि, कुंभारनुं वारि, सिराणियानुं वारि सूत्रधारनुं वारि, एभिः स्नानं कार्यते दोषनाशः ॥ २३ ॥

सेअवण्ण रविकणयकंदि कंथेरीकंदय
एगवन्नगोखीरपाणिकामिणिसि सुसंपय ।
वरपंडुरखुरसाणरई जडजोगिहिं सत्तह
नेमिपबंधह होइ नाह ! तह तुह गुणथुत्तह ॥२४॥
इत्थं भेषजयन्त्रतन्त्रकलितैः सन्मन्त्ररत्नैश्रितां
कृत्वा श्रीमुनिसुन्दरस्तुत ! नुतिं देलुल्लनेतस्तव ।
**लक्ष्मीसागर**नामधेय ! करुणाम्भोधे ! युगादिप्रभो !
दुस्थोऽहं **शुभसुन्दरा**ङ्घ्रियुगलीसेवासुखं प्रार्थये ॥२५॥

इतिश्री युगादिदेवस्तोत्रं संपूर्णम् ।

मु. **रूपसागर**लिखितम् ॥

---

## अवचूरीः ।

श्वेतार्क मूल, श्वेतरिंगणी मूल, कंथेरी मूल, एकवर्णगोदुग्धेन घर्षयित्वा पाने अपत्यप्राप्तिः । श्वेत खुरसाणीआमूलं पार्श्वे स्थितं धारबन्धं करोति ॥

" इत्थं० " सुगमम् ॥ २५ ॥

इतिश्रीआदिदेवस्तवस्यावचूरिः ॥

उपाध्यायश्री**भानुचन्द्रगणि**शिष्य**भक्तिचन्द्र**गणिना लिखिता ॥

[ ११२ ]

## पञ्चकल्याणककलितैकविंशतिस्थानगर्भितं

# श्रीमल्लिजिनस्तवनम्।

पणयजणकप्पवल्लिं नियठाणविराजमाणसिवपल्लिं ।
कित्तियजियधवलमल्लिं थुणामि भावेण जिणमल्लिं ॥ १॥

घात—सायरतित्तीसयठिइपमाण जिणु चविउ जयंतविमाणठाण ।
दीवाइमजंबुयदीवनामि भरहे मिथिलापुरि पवरगामि ॥२॥
अवयरिय कुम्भनरिंदलच्छि गुणतुल्लपभावइदेविकुच्छि ।
फागुणसियचउत्थि जिणाहिराज पयपंकयविलुलियदेवराज ॥
जिणमाया पिक्खइ दह चियारि गयपमुह सुमिण वरगिहमझारि ।
अवयरियउ जाणिय जिणवरिंदु विहसियतणुलोयणआणणिंदु ॥
जिण गब्भिहि ऊणय नव य मास पालिय तिहि नाणिहि घणपयास ।
सिएगारसि मग्गसिरम्मि मासि जायउ जिणु अस्सणिमेसरासि ॥५॥
चलियासण जाणवि जिणह जम्मु दिसिकुमरिय निम्मइ निययकम्मु ।
जिण सविधिहिं सुविधिहि गुणह गातु निम्मइ हरिसिहि किरि अभिय पातु॥
जाणवि जिणजम्मणु ओहिनाणि सुरगिरि सुर आवइ पवरठाणि ।
तित्थोदइ ण्हवइ मणह रंगि पूइवि जिणु गाइहि विविहभंगि ॥ ७ ॥
जम्मोच्छवु निम्मइ कुम्भराउ मग्गणजण पामइ घणपसाउ ।
पुरि घिरि घिरि मंगल गाइ बाल मणरंगिहि भंगिहि बहु विसाल ॥
पूरवभवकम्मह समणुसारि संजाउ जिणेसरु पवरनारि ।
संठाविउ नामिहि देवु मल्लि कुम्भंकिय नालसु देहवल्लि ॥ ९ ॥

सुरगिरि जिम वाधइ कप्पवल्लि दिणि दिणि तिम जिणवरु गुणहि मल्लि ।
कमि जोवणलच्छि विरायमाणु पणवीसधणूसियदेहमाणु ॥१०॥

कुमरत्तणि वरिससयं करेवि पाणिग्गहउच्छवि परिहरेवि ।
विन्नत्तउ लोयंतियहि देवि तित्थेसरु वरसियदाणु देवि ॥११॥
सिएगारसि मग्गसिरस्स सामि अट्ठमतवि विसहियउ जम्मठामि ।
वररायपुरिस तिहि सयहि जुत्तु पव्वज्जिउ जिणवरु सुपवित्तु ॥

छउमत्थ दिणेगय चाउनाणु असोयतले उववन्नु नाणु ।
अट्ठम अंतिहि जिणु विस्ससेण पाराविउ खीरिहि सुहरिसेण ॥१३॥
अडवीसय गणहर मुणिमणीण चालीस सहस्स तह वरमणीण ।
पणपण्ण सहस्स य साहुणीण परिवारिहि सोहइ जिणधुरीण ॥१४॥
वइरुट्ट देवि कुबेर जक्खु संसेविय जिणपयकप्परुक्खु ।
चउवन्न सहसवरिणिहि दिसालि पणपण्ण सहस्स सव्वाउ पालि ॥
सम्मेयसिहरि जिणु मासिएण फागुणसियबारसि सुहदिणेण ।
अरसिद्धिहि कोडि सहस्स सिद्धु मुणि पंच सयहि संजुत्तु सिद्धु ॥
जय विहडियकम्मकठोरजाल ! जय परिणीयअविहडसिद्धिबाल ! ।
नीराग ! निरंजण ! गुणनिवास ! संपाइयसेवयवंछियास ! ॥ १७ ॥

इच्चेवं नमिरासुरेसरसुराधीसावलीसेहरे
माणिक्कोज्जलकंतकंतिनिवहे नीरायमाणक्कमो ।
जो संखित्तचरित्तकित्तणतया विण्णत्तओ भावओ
सो मल्ली मुणिरायसंथुयगुणो दिज्जासु बोहिं सया ॥१८॥

[ ११३ ]

# नंदीश्वरद्वीपस्तोत्रम्।

वंदिय नंदियलोयं जिणविसरं विमलकेवलालोयं।
नंदीसरचेइयसंथवेण थोसामि तं चेव ॥ १ ॥
जोयणकोडिसय तिसट्ठ चउरसी लक्खवलयविक्खंभो।
अट्ठमदीवो नंदोसरु त्ति सइविलसिरसुरोहो ॥ २ ॥
तत्थ हु मज्झे चउरो दिसासु अंजणगिरी धवलवण्णा।
जोयण सहस्स चुलसीइ सूसिया सहस्समवगाढा ॥ ३ ॥
भूमितले दससहसा चउणवइसयसहस्समुवरितले।
पिहुला अडवीसं सतिगं व दसंसो उ खयवुड्ढी ॥ ४ ॥
पुव्वदिसि देवरमणो निच्चुज्जोओ य दाहिणदिसाए॥
अवरदिसाए उ सयंपभ—रमणिज्जो उत्तरे पासे ॥ ५ ॥
अंजणगाण चउद्दिसि जोयणलक्खंमि लक्खविक्खंभा।
पुक्खरिणीओ सहस्सव्वेहा निम्मच्छसच्छजला ॥ ६ ॥
नंदिसेण अमोहा य गोतुभा य ३ सुदंसणा ४।
नंदुत्तरा य नंदा सुनंदा नंदिवद्धणा ॥ ७ ॥
भद्दा विसाला कुमुया बारसी पुंडरीगिगी।
विजया य वैजयंती जयंती अपराजिया ॥ ८ ॥
पुव्वा य कमा नाना पुक्खरिणीणं तओ य पंचसए।
गंतूण लक्खदीहा वणसंडा पंचसयपिहुला ॥ ९ ॥
पुव्वेण असोगवणं दाहिणओ ताण सत्तिवण्णिवणं।
चंपगवणमवणुत्तरेणु सव्वाणुभूअवणं ॥ १० ॥

पल्लसमा जोअणदससहस्स पिहुला सहस्समोगाढा ।
चउसट्ठिसहस्सुच्चा फलिहमया पुक्खरिणमज्झे ॥११॥

सोलसदहिमुहगिरिणो अंजण दहिमुहनगोवरितलेसु ।
जोयणसयदीह तयद्धवित्थडा दुगसयरिमुच्चा ॥१२॥

बहुविविहरूवरूवगविचित्तविच्छित्तिभत्तिसयकलिया ।
पत्तेयं जिणभवणा तोरणझयमंगलाइजुया ॥१३॥

देवासुरनागसुवण्णनामगा नामसरसुरा रक्खा ।
दारा सोलट्ठट्ठुव पिहुप्पवेसाइ चउरोसिं ॥१४॥

पइदारं कलासाई मुहमंडवपिच्छमंडपक्खाडा ।
मणिपीढथूम पडिमा चियतरुझयपुक्खरिणिओ य ॥१५॥

अट्ठुच्च सोलसाई पिहुला मणिपीढिया जिणहरं तो ।
तदुवरि देवच्छंदा रयणमया साहियपमाणा ॥१६॥

तत्थुसभवद्धमाणय–चंदाणण–वारिसेण–नामाणं ।
सासय जिणपडिमाणं पलियंकनिसण्णट्ठसयं ॥१७॥

पइपडिमपुरो दो दो नागपडिमजक्खभूअकुंडधरा ।
दहओ दो चमरधरा पिट्ठे छत्तधरपडिमेगा ॥१८॥

तह घंटा वंदण घड भिंगारायरिसयाइ सुपइट्ठा ।
पुप्फाइणेगचंगिरि पडिलच्छत्तासणा एय ॥१९॥

इअ सुत्तवुत्तमाए सुय दुपुक्खरिणि अंतरे दो दो ।
रइकरग नगावत्तीसमेसु पुव्वंव जिणभवणा ॥२०॥

वंदंत–नमंत–अभिथुणंत–पूयंत–इंत–जंतेहिं।
खयरसुरेहि य रहिआ पुण्णि तिहिमहामह करेहिं ॥२१॥
तय जोयणदहसुच्चा विक्खंभायामसमदससहस्सुच्चा।
झल्लरिनिभा रइकरा रयणमया विदिसिदीवंते ॥२२॥
तेसि चउण्ह दिसासुं जोयणलक्खंमि जंबुदीवसमा।
अट्ठट्ठ रायहाणीसु सक्कीसाणग्गमहिसीणं ॥२३॥
विमलमणिसालवणयाण ताण मज्झे पुढो जिणाययणा।
जिणपडिमा पुव्वमिवेह अणुवमा परमरमणिज्जा ॥२४॥
इय वीसं बावण्णं य जिणहरे गिरिसिरेसु संथुणिमो।
इंदाण रायहाणीसु बत्तीसं सोलसय वंदे ॥२५॥

[ ११४ ]

## सर्वजिनचतुर्विधदुःषमासङ्घस्तोत्रम्।

वंदित्त सिरि उसहाइ जिण वद्धमाण चउवीस।
तीआणागयकालतिग विहरमाण जिण वीस ॥१॥
दुरिअविहंडन पुंडरीअ–गोयमपमुह नमामि।
चउदस सय बावन्नजुअ जिणगणहर सिवगामि ॥२॥
उसभसेण अइमुत्तमुह वंदउ लक्खडवीस।
सहसड चित्तचरित्तजुअ जिणकरदिक्खिअ सीस ॥३॥
बंभीचंदणबालवर जिणसमणी नमी भव्व !।
लक्ख चउ चत्त छ चत सहसा चउ सय सव्व ॥४॥

सेयंसाणंदप्पमुह सावय वयसंजुत्त।
समरह मणि पणपण्ण लक्ख सहस तिपण्ण ससत्त ॥५॥
सावि सुभद्दा सुलसमुख एगकोडी चउलक्ख।
नवनवई सहसा तिसय सड्ढ थुणइ गुणदक्ख ॥६॥
तेवीसुदय जुगप्पवरगुरु दस सहस्स चउजुत्त।
निच्च नमउ सुहमप्पमुह दुप्पसहंत सुचित्त ॥७॥
नमि सूरी जुगपवरसम पंच य अरइ अराय।
सोलस सहस लक्खेगदस तत्तिय सावय राय ॥८॥
सहस चउत्तम आयरिय कोडिलक्ख पणपन्न।
कोडिसहस तह कोडिसय पंच सपन्न सुपन्न ॥९॥
कोडिलक्ख सतरस सहस नव सुसाहु भवभीअ।
कोडि सउ इगवीस इग लक्ख सहस सट्ठी अ ॥१०॥
समणी कोडि सहस्स दस नव सय कोडी बार।
सहस छतीस छप्पन्न लक्ख दूसय गुणप्रचार ॥११॥
सोल लक्ख कोडी सहस तिण्णि तिण्णि सय कोडि।
सावय सतरस कोडि लख चुलसी नमि कर जोडि ॥१२॥
कोडि लक्ख पणतीस थुणि सड्ढ बाणवई सहस्स।
दूसम सावि अ बारहि अ कोडि बत्तीस अ संस ॥१३॥
इअ चउविह संघ रंग तरंगं जो समरइ सुह भावठिउ।
जिणनाह पणीयं जिण नमणीअं चउगइदुह सो हाण जिंउ

---

[ ११९ ]

## श्रीविविधतीर्थस्तुतयः ।

---

महंति जे भावजुआ तिसंझं जिणिंदरायं गयरायदोसं ।
लीलाइ ते मुत्तिसिरीविवाहं करंति भावारिनिवारणेण ॥१॥

जइ अत्थि सिद्धित्थिसुहे मणो ता उसहाइ वीरंतजिणे थुणेह ।
हेमिंदुनीलंजणरत्तवण्णे नित्थिण्णवित्थिण्णभवण्णवे अ ॥२॥

सट्ठी अ लक्खा गुणनऊ अ कोडी भवणेसु कोडीण सयाइं तेर ।
असंखया जोइवणेसु बिंबे नमेह भत्तिब्भरनिब्भरंगा ॥३॥

नई-वास-वेअड्ढ-वक्खार-कुण्ड-गयदंत-मेरु-द्दहमाइठाणे ।
बिंबाइ वंदे तिरिअं तिलक्खा सहसंगनउआ सयतिण्णि वीसं ॥४॥

पडिमाण कोडीण सयं च एगं बावन्नकोडी चउनउअ लक्खा ।
चउचत्त सहसाइं सयाइ सत्ता सड्ढा विमाणेसु नमामि उड्ढं ॥५॥

सव्वग्गकोडी पनरस्सयाइं दुचत्त कोडी अडवण्ण लक्खा ।
छत्तीस सहस्सा असीआइ निच्चं बिंबाइ वंदे भुवणत्तयंमि ॥६॥

नंदीसरे अट्ठमए सुदीवे निच्चेसु बावन्नजिणालएसु ।
सिरिवद्धमाणोसहवारिसेणचंदाणणक्खे पणमामि नाहे ॥७॥

निम्मावियम्मी भरहेण रण्णा भत्तीइ अट्ठावयनामतित्थे ।
वण्णप्पमाणंकमणुन्न बिंबे रिसहाइ चउवीसजिणे थुणामि ॥८॥

अजिआइवी जिणचन्दनाहा सिवं गया जत्थ निसिद्धभत्ता ।
सुपव्वकयथूभगणाभिनंदो नंदउ स सम्मेअगिरी सयावि ॥९॥

जयउ चिरं तं भुवणंमि तित्थं **सित्तुंजयं** सव्वभिहापहाणं।
जहि संथुओ आइजिणो जणाणं दुहा महाणंदसिरिं करेइ ॥१०॥

वयनाणसिद्धिप्पमुहूसवेहिं जं पाविअं नेमिजिणेसरस्स।
तं भव्वजीवा सिवसुक्खहेउं झाएह **उज्जितगिरिं** सुतित्थं ॥११॥

जंबूविदेहम्मि नमामि सीमंधरं च जुगमिंधरनामधेयं।
बाहुं सुबाहुं च चउप्पयारं पयासयंतं भवियाण धम्मं ॥१२॥

चंदाणणं सूरपहं सुजायं वसहाणणं वज्जहरं विसालं।
अणंतविरिअं च सयप्पहं च वंदे जिणे धाइअसंडि अट्ठ ॥१३॥

नेमिप्पहं ईसरचंदबाहुं महभद्ददेवासगदेवकित्तिं।
अजेअविरिअं च भुअंगनाहं थुणे जिणे अट्ठवि पुक्खरद्धे ॥१४॥

वंदे सयं सत्तरिसंजुअं च उक्किट्ठकाले जिणनायगाणं।
विदेहभरहेरवयाभिहाणं दसपंचकम्मावणिमंडणाणं ॥१५॥

गयसंपयाणा गयलोगनाह जिणाण चऊवीसितिगं सरण्णं।
चारित्तसद्दंसणनाणरूवरयणाण हेउं हिअए धरेमि ॥१६॥

चउग्गईदुक्खनिवाररूवं धम्मं दिसंतं चउरूवएणं।
जिणं जियाणं वरपाडिहेरं सुरेहि रइओसरणम्मि सेवे ॥१७॥

तित्थाइभेएण परंपराए सिद्धा य जे कम्मखएगणंता।
सिरिपुंडरीअप्पमुहा मुणी ते अणोवमं सिद्धिसुहं दिसंतु ॥१८॥

दिणमासनक्खत्तगहाइएहिं जं तुल्लयं सव्वजिणाण निच्चं।
जं नारायाणंपि सुहप्पयंतं जिणिंदकल्लाणगपंचगं थुणे ॥१९॥

सिरिआइनाहं मणलोअणाणमाणंदयारिं भुवत्तयस्स ।
सोहग्गसारं सिरिनेमिनाहं नमामि तित्थेसरि **अब्बुअम्मि** ॥२०॥

उत्तुंगपासायवडिंसरूवं कुमाररण्णो किर मुत्तपुण्णं ।
सिरिअजिअसामी पयसुप्पवित्तं तित्थं जयउ **तारणदुग्गयंमि** ॥२१॥

नाभेयदेवं सिरिसंतिनाहं नेमिं जिणं पासजिणं च वीरं ।
अणंतनाणाइगुणाण ठाणं सरेमि **आरासण**नयरतित्थे ॥२२॥

निच्चोअएणं उइआणि निच्चानिच्चाणि तित्थेसु जयम्मि जाइं ।
जिणिंदबिंबाणि नयाणि ताणि हरंतु मे मोहमहंधयारं ॥२३॥

नमंसई जो जिणविंदमेवं लद्धूण सो बोहिसुजाणवत्तं ।
*भवं भवं भूरिकिलेसजालं तरिउं सुहेणं सिवदीवमेइ ॥२४॥

भत्तीइ नामागिइदव्वभावजिणा थुआणंतगुणाभिरामा ।
नराण तारंतु भवोअहीओ बोहिप्पयाणा जगबंधवा य ॥२५॥

जो अत्थओ वीरजिणेण वुत्तो अणुग्गहत्थं गणहारिबद्धो ।
जो आगमो तत्तपयत्थदंसी हवउ जियाणं जयदीवउ व्व ॥२६॥

विग्घोवसंतिं च समाहिदाणं कुणंतु देवा जिणपायभत्ता ।
सम्मत्तचित्ता जिणचंदआणारयाण धम्मावसम्मि सम्मं ॥२७॥

दुवीसबत्तीसदसिंदिएहिं मेरुम्मि जम्मस्स कओभिसेओ ।
नेमिस्स जीए सुअपंचमीए तवेण तं नाणकए निसेवे ॥२८॥

---

* एतदन्त्यपद्यत्रयेण समं पठ्यते तदा स्तुतयो भवन्ति ।

[ ११६ ]

## श्रीमन्त्राधिराजस्तोत्रम् ।

सर्वातिशयसम्पूर्णान् ध्यात्वा सर्वजिनाधिपान् ।
पञ्चवर्णान् पञ्चरूपविषयद्रुमकुञ्जरान् ॥१॥
चतुर्गोत्राँश्चतुर्वक्त्राँश्चतुर्विंशतिसञ्ज्ञितान् ।
जैनीं सर्वाङ्गेषु रक्षां कुर्वे दुःखौघनाशिनीम् ॥२॥
शिरो मे वृषभः पातु भालं श्रीअजितः प्रभुः ।
पातां मे श्रीजिनौ नेत्रे शम्भवश्चाभिनन्दनः ॥३॥
सुमतिः सुसीमजन्मा च श्रवणौ मम रक्षताम् ।
सुपार्श्वो रक्षतु घ्राणं मुखं चन्द्रप्रभः प्रभुः ॥४॥
रसनां सुविधिः पातु कण्ठं श्रीशीतलो जिनः ।
स्कन्धं श्रेयांसः श्रीवासुपूज्यश्च विमलो भुजौ ॥५॥
अनन्तश्रीधर्मनाथौ पातां मे करपल्लवौ ।
शान्तिर्मे हृदयं रक्षेन्मध्यं नाभिं च कुन्थ्वरौ ॥६॥
मल्लिः कटी सक्थिनी (?) च रक्षतान्मुनिसुव्रतः ।
नमिर्जानुद्वयं पायान्नेमिर्जङ्घाद्वयं पुनः ॥७॥
श्रीपार्श्वो वर्द्धमानश्च रक्षतान्मे पदद्वयम् ।
चतुर्विंशतिरूपोऽव्यादर्हन्मे सकलं वपुः ॥८॥
एतां जिनबलोपेतां रक्षां यः सुकृती पठेत् ।
स चिरायुः सुखी पुत्री निर्व्याधिर्विजयी भवेत् ॥९॥

पातालभूतलव्योमचारिणश्छद्मकारिणः ।
　न द्रष्टुमपि शक्तास्तं रक्षितं जिननामभिः ॥१०॥
जिनेति जिनभद्रेति जिनचन्द्रेति वा स्मरन् ।
　नरो न लुप्यते पापैर्भुक्तिं मुक्तिं च विन्दते ॥११॥
जगज्जैत्रैकमन्त्रेण जिननाम्नैव रक्षितम् ।
　लिखित्वा धारयेद् यस्तु करस्थाः सर्वसिद्धयः ॥१२॥
वज्रपञ्जरनामेदं यो जैनकवचं पठेत् ।
　अव्याहताङ्गः सर्वत्र लभते जयमङ्गलम् ॥१३॥
ललाटे दक्षिणस्कन्धे वामस्कन्धे करेऽपि च ।
　वामकक्षौ वामकट्यां जानौ पदतलेऽपि च ॥१४॥
नाभौ गुह्ये दक्षिणांह्रि—तले दक्षिणजानुके ।
　कटी कक्षे हस्ततले स्तनेषु दक्षिणेषु च ॥१५॥
वामस्तने चेति मन्त्रवर्णान् सप्तदश स्मरेत् ।
　ॐ ह्रीँ प्रमुखास्तस्य स्युर्मनीषितसिद्धयः ॥१६॥
यक्षैनां दृष्टवान् स्वप्ने जैनरक्षामिह प्रभुः ।
　जिनेन्द्राख्य गुरुः प्रातः प्रबुद्धस्तां तथाऽलिखत् ॥१७॥
ॐ ॐ ह्राँ ह्रीँ ह्रूँ ह्रैँ ह्रौँ ह्रँ ह्रः यः क्षः फुट् स्वाहा ए ऐ ॥
　अस्य स्तोत्रस्य मन्त्रम् ।
मन्त्राधिराजाक्षरवर्णयुक्तं तेषां जिनाङ्गेषु निवेशिताङ्गी (?) ।
वक्ष्ये यथा तत् प्रथमं च तत्र ओमक्षरं नीलरुचिं ललाटे ॥१८॥
ॐ दक्षिणाङ्गे पुनरेव शोणं वामांसकं ह्राँ भज पञ्चवर्णम् ।
सिन्दूरभं ह्रीँ स्मर वामहस्ते ह्रूँ धूम्रवर्णं भण वामकुक्षौ ॥१९॥

ह्रूँः कृष्णवर्णं कटिवामदेशे यः सव्यजानुस्थितधूम्रवर्णम् ।
क्षंः पीतभं पादतले च वामे ह्रीः पञ्चवर्णं पुनरेव नाभौ ॥२०॥
हूँः धूम्रवर्णं कथयन्ति गुह्ये फट्व्यञ्जनं पादतलेऽपसव्यः ।
फूः दक्षिणे जानुनि धूम्रवर्णं ह्रः दक्षिणायां च कटौ नु कृष्णम्
स्वा कृष्णभं दक्षिणकुक्षिलक्षं हा दक्षिणे हस्ततले विनीलम् ।
ए स्फाटिकं दक्षिणवक्षसोऽन्ते ऐ वामवक्षोऽन्तगतं सितांशु॥२२॥
इति दशाक्षराणि साक्षान्निवेश्य पुरस्तु जैनमूर्तौ ।
ध्यायति विजया जया स भवति नित्यं वशीकृतार्थसिद्धिः॥२३॥
इह हि भवति तुष्टो यस्य मन्त्राधिराजः
　　स भवति भुवि विद्वान् खेचरश्चक्रवर्ती ।
सदतिशयसमृद्धः सर्वकल्याणतुष्टो
　　धृतिरतिमतिकीर्तिश्रीपतिध्येयसत्वम्　　॥२४॥

॥ इति मन्त्राधिराजस्तोत्रम् ॥

---

[ ११७ ]

### वाचकश्रीयशोविजयविरचितं

## श्रीशङ्खेश्वरपार्श्वजिनस्तोत्रम् ।

अनन्तविज्ञानमपास्तदोषं महेन्द्रमान्यं महनीयवाचम् ।
गृहं महिम्नां महसां निधानं शङ्खेश्वरं पार्श्वजिनं स्तवीमि　॥१॥
महानुभावस्य जनुर्जनुष्मतां गुणस्तवैरेव दधाति हृद्यताम् ।
घनं वनं कान्तवसन्तसम्पदा पिकीरवैरेव समृद्धमीक्ष्यते　॥२॥

अवर्ण्यसंवर्णनकश्मलाविलः स्वकार्यरक्तस्य कवेर्गिरां रसः ।
गुणस्तवैर्देव ! तवातिनिर्मलो भवत्यवश्यं कतकोत्करोपमैः ॥३॥
गुणास्त्वदीया अमिता इति स्तुता–वुदासते देव ! न धीधना जनाः।
मणिष्वनन्तेषु महोदधेरहो न किं प्रवृत्तेरुपलम्भसम्भवः ? ॥४॥
भवद्गुणैरेव न चेद्वेष्टयं स्वयं गिरं चित्रकवल्लिमुच्चकैः।
तदा न किं दुर्जनवायसैरसौ क्षणाद् विशीर्येत निसर्गभीषणैः ? ॥५॥
न जानते नाथ ! यथा पथःस्थितिं प्रगल्भमानाश्च नृपानुपासते ।
श्रियं लभन्ते च विशृङ्खलाः खला इतीदमुच्चैः कलिकालचेष्टितम् ॥६॥
अमीषु तीर्थेश ! खलेषु यत् पटुर्भवद्भुजिष्यस्तदिहासि कारणम् ।
हविर्भुजां हेतिषु यन्न दह्यते करः परस्तत्र गुणो महामणेः ॥७॥
कलौ जलौघे बहुपङ्कसङ्करे गुणव्रजे मज्जति सज्जनार्जिते ।
प्रभो ! वरीवर्ति शरीरधारिणां तरीव निस्तारकरी तव स्तुतिः ॥८॥
खलैः किमेतैः कलिकाललालितैर्विपश्चितां नाथ ! यदि प्रसीदसि ।
पराक्रमः कस्तमसां महीयसां तनोति भासं महसां पतिर्यदि ॥९॥
अमूढलक्ष्यत्वमिहेश ! दुर्जने न सम्यगब्धाविव तत्त्वचालनम् ।
कथा नु कोलाहलतां विगाहते ततः कथं नाथ ! बुधः प्रवर्तताम् ॥१०
यथा पथा यात्युपमृद्य कण्टकान् जनो मनोऽभीहितबद्धलालसः ।
त्वदाज्ञया देव ! निहत्य दुर्जनान् तथा विधेयैव कथा विपश्चिता॥११
संवादसारा भवदागमा यज्जगच्चमत्कारकराः स्फुरन्ति ।
उच्छृङ्खलानां नियतं खलानां मुखे मषीलेपमहोत्सवोऽसौ । ॥१२॥
भवन्तमुत्सृज्य विलीनरागं परं भजन्ते स्वहितार्थिनो ये ।
तेषां वयं देव ! सचेतनानां विभो विशेषं किमचेतनेभ्यः ॥१३॥

मोहावृतानामपि शास्त्रपाठो हहा महानर्थकरः परेषाम् ।
रागैकलुब्धस्य हि लुब्धकेभ्यो वधाय नूनं हरिणस्य कर्णौ ॥१४॥
शमो दमो दानमधीतिनिष्ठा वृथैव सर्वं तव भक्तिहीनम् ।
भावक्रियां नैव कविप्रबन्धो रसं विना यच्छति चारुबन्धः ॥१५॥
अन्तर्मुहूर्तं विहितं तपोऽपि त्वदाज्ञया देव ! तमस्तृणेढि ।
विना तु तां हन्त ! युगान्तराणि कथापि न क्लेशकृतां शिवस्य॥१६
अज्ञानजं बन्धनमङ्गभाजां ज्ञानं विना देव ! कथं व्यपैति ।
अघर्मजं जाड्यमुपैति नाशं न घर्मरश्मेर्हि विना प्रतापम् ॥१७॥
न ज्ञानमात्रादपि कार्यसिद्धिर्विना चरित्रं भवदागमेऽस्ति ।
अपीक्षमाणः पदवीं न पङ्गुर्विना गतिं हन्त ! पुरं प्रयाति ॥१८॥
संसारसिन्धाविह नास्ति किञ्चिदालम्बनं देव ! विना त्वदाज्ञाम् ।
तया विहीनाः परकष्टलीना हहा महामोहहताः पतन्ति ॥१९॥
महौषधी जन्मजरामयानां महार्गला दुर्गतिमन्दिरस्य ।
खानिः सुखानां कृतकर्महानिराज्ञा त्वदीयास्ति जिनेन्द्रचन्द्र !॥२०॥
रागं च कोपं च न नाथ ! धत्से स्तुत्यस्तुतीनां च फलं प्रदत्से ।
लोकोत्तरं किञ्चिदिदं त्वदीयं शीलं समाशीलितविश्वलीलम् ॥२१॥
त्वद्ध्यानबद्धादरमानसस्य त्वद्योगमुद्राभिनिविष्टबुद्धेः ।
तवोपदेशे निरतस्य शश्वत् कदा भविष्यन्ति शमोत्सवा मे ॥२२॥
अकुर्वतः सम्प्रति लब्धबोधिं समीहमानस्य परां च बोधिम् ।
न साम्प्रतं किञ्चन साम्प्रतं तद् दयस्व दीनं परमार्थहीनम् ॥२३॥
निर्वेदमुख्यं च भवन्तमेव नाथन्ति नाथं यतयो न चान्यम् ।
सुधार्थमुच्चैर्विबुधाः सुधांशुं नाथन्ति नान्यं ग्रहमप्युदारम् ॥२४॥

त्वत्तो न तीर्थेश! परः कृपालुर्मत्तः कृपापात्रमपीह नान्यः।
अतोऽस्ति योग्योऽवसरः कृपाया ब्रुवे किमन्यज्जगदीशितारम् ॥२५॥
अथास्ति चेदेष जनः समन्तुस्तथाप्यहो! ते किमुपेक्षणीयः ?।
सकण्टकं किं न सरोजखण्डमुन्मीलयत्यंशुभिरंशुमाली ॥२६॥
कृपावतां न स्वकृतोपकारे सदोषनिर्दोषविचारणास्ति।
समं घनः सिञ्चति काननेषु निम्बं च चूतं च घनाभिरद्भिः ॥२७॥
मुखं प्रसन्नं हसितेन्दुबिम्बं नेत्रे कृपार्द्रे जितपद्मपत्रे।
पद्मासनस्था च तनुः प्रशान्ता न योगमुद्रापि तवाप्युतान्यैः ॥२८॥
त्वद्योगमुद्रामपि[1] वीक्षमाणाः प्रशान्तवैराः पुरुषा भवन्ति।
विशिष्य वक्तुं कथमीश्महे तत् तवान्तरङ्गं प्रशमप्रभावम् ॥२९॥
मूर्तिस्तव स्फूर्तिमती जनार्तिविध्वंसिनी कामितचित्रवल्ली।
विश्वत्रयीनेत्रचकोरकाणां तनोति शीतांशुरुचां विलासम् ॥ ३० ॥
फणामणीनां घृणिभिर्भुवीश! मूर्तिस्तवाभाति विनीलकान्तिः।
उद्भिन्नरक्ताभिनवप्रवालप्ररोहमिश्रेव कलिन्दकन्या ॥ ३१ ॥
तवेश! मौलौ रुचिराः स्फुरन्ति फणाः फणीन्द्रप्रवरस्य सप्त।
तमोभरं सप्तजगज्जनानां धृता निहन्तुं किमु सप्त दीपाः ॥३२॥
त्वन्मौलिविस्फारफणामणीनां भाभिर्विनिर्यत्तिमिरासु दिक्षु।
स्वकान्तिकीर्तिप्रशमात् प्रदीपाः शिखामिषात् खेदमिवोद्गिरन्ति ॥
ध्यानानले सप्तभयेन्धनानि हुतानि तीव्राभयभावनाभिः।
इतीव किं शंसितुमीश! दध्रे मौलौ त्वया सप्तफणी जनेभ्यः ॥३४॥

---

[1] क्वचित् त्वदाज्ञामपि।

अष्टापि सिद्धीर्युगपत् प्रदातुं किमष्ट मूर्तीस्त्वमिहानतानाम् ।
सप्तस्फुरद्दीप्तफणामणीनां क्रोडेषु सङ्क्रान्ततनुर्दधासि ॥ ३५ ॥
यद्येकनालानि समुल्लसेयुः सरोवरे कोकनदानि सप्त ।
तदोपमीयेत तवेश ! मौलौ तैरुच्चकैः सप्तफणी प्रदीप्रा ॥३६॥
भवेषु तीर्थेश ! चतुर्षु सारं मानुष्यकं यत्र तवास्ति सेवा ।
श्लाध्यो हि शैलेषु सुमेरुरेव यत्राप्यते कल्पमहीरुहश्रीः ॥ ३७ ॥
नृजन्म दुःखैकगृहं मुनीन्द्रैः प्रशस्यते त्वत्पदसेवयैव ।
सौरभ्यलोभात् सुधियः फणीन्द्रैरप्यावृतं चन्दनमाद्रियन्ते ॥३८॥
अवाप्य मानुष्यकमप्युदारं न येन तेने तव देव ! सेवा ।
उपस्थिते तेन फले सुरन्द्रोः करार्पणालस्यमकारि मोहात् ॥३९॥
जनुर्मनुष्यस्य दिवः शतेन क्रीणामि चेन्नास्मि तदाप्यविज्ञः ।
यत्र त्वदाज्ञाप्रतिपत्तिपुण्यादमुत्र तज्जैत्रमहोदयाप्तिः ॥ ४० ॥
स्तोमैः सुमानां तव देव ! पूजा पूज्यत्वहेतुर्जगतां जनानाम् ।
भवत्तनौ स्नात्रजलाभिषेकः साक्षादयं पुण्यसुरद्रुसेकः ॥ ४१ ॥
गुणैस्त्वदीयैर्ग्रथितां स्तुतिस्रजं स्वयं च ये कण्ठगतां वितन्वते ।
अभङ्गसौभाग्यवशीकृता इव श्रियो वरीतुं परितो भ्रमन्त्यमुम् ॥
विनोदवत् त्वन्नुतिगोचरं मनो घनोत्सवे मन्नयने त्वदीक्षिणी ।
त्वदङ्घ्रिनम्रो मम मौलिरालयः श्रियः प्रियस्त्वज्जपविस्तरःकरः ॥४३॥
त्वदास्यसंवीक्षणशर्मवञ्चिते नयोज्झितानां नयने निरर्थके ।
भवत्कथाकर्णनरागहीनयोर्न भारतोऽन्यत् फलमस्ति कर्णयोः ॥४४॥
पुष्पाणि पाणिर्न ललौ यदीयस्त्वदीयपूजाविधये प्रमादात् ।
अमुष्य दूरे भवदुःखहानिर्भाग्योज्झितस्येव सुवर्णखानिः ॥४५॥

भूयासमिन्द्रार्च्य ! भवद्भुजिष्यस्तव क्रमाम्भोजमधुव्रतः स्याम् ।
वहेय मौलौ परमां त्वदाज्ञां स्तवे भवेयं तव सावधानः ॥ ४६ ॥
त्वमीशिताहं तव सेवकश्चेत् ततः परा का पदवी विशिष्टा ? ।
समेधमानेऽत्र हि सन्निकर्षे पुरन्दरर्द्धिः प्रथते पुरस्तात् ॥ ४७ ॥
परेषु दोषास्त्वयि देव ! सद्गुणा मिथोऽवलेपादिव नित्यमासते ।
स्फुरन्ति नेन्दावपतन्द्रचन्द्रिकास्तमोभरा वा किमु सिंहिकासुते[1] ?॥४८
विशङ्कमङ्के दधते विलासिनीर्विशिष्टमिच्छन्ति च देवतायशः ।
परे तदेते ज्वलता हविर्भुजा वितन्वते तापसमापनार्थिताम्[2] ॥४९॥
कुदृष्टिभिर्देवतया[3] श्रितेषु वा परेषु दोषोऽस्ति न नाम कश्चन ।
न मूढरूप्यभ्रमभाजनेष्वपि प्रवर्तते रङ्गगणेषु दुष्टता ॥ ५० ॥
सरागता चेज्जिनदेवमाश्रयेत् तमस्तदा तिग्मरुचं पराभवेत् ।
विरागता वा यदि तं न संश्रयेत् तदा प्रकाशोऽपि न भानुमालिनम् ॥
गवां विलासस्तव देव ! भास्वतस्तमोभरं घ्नन्ति भुवि प्रसृत्वरम् ।
अशेषदोषोपशमैकवृत्तयः प्रकाशमन्तः परमं प्रकुर्वते ॥ ५२ ॥
इदं महच्चित्रमहीनजातिजोऽप्युदग्रभोगप्रसरात् पराङ्मुखः ।
जनार्दनायोगकृतप्रसिद्धिभाग् न वैनतेयश्रियमातनोऽसि न ॥५३॥
जिनाऽसहायेन[4] विनिर्जितक्रुधा[5] विना जिगीषां च विना रणोत्सवम् ।
त्वया जितं यद् द्विषतां कदम्बकं जगज्जनानन्दकरं न किन्नु तत् ॥

१ सिंहिकासुते–राहौ । २ तापस्य समापना–पूर्तिः तस्याः अर्थितां –प्रार्थितां परे हविर्भुजा वितन्वते । ३ देवबुद्ध्या । ४ नास्ति सहाय्य यस्य तेन असहायेन । ५ नि॰जता क्रुत्–क्रोधो येन तेन त्वया ।

उपेक्षमाणोऽप्युपकृत्य कृत्यविज्जगत्त्रयीं यद् दुरिताददीधरः ।
परः सहस्रा अपि हन्त ! [1]तत्परे यशो न शोद्धुं निरताः प्रतारकाः ५५

हरेः समीपे हरिणा यदासते स्फुरन्ति नागाः पुरतो गरुत्मतः ।
अयं प्रभावस्तव कोऽप्यनुत्तरो विपश्चितां चेतसि हर्षवर्षदः ॥५६॥

अलौकिकी योगसमृद्धिरुच्चकैरलौकिकं रूपमलौकिकं वचः ।
न लौकिकं किञ्चन ते समीक्ष्यते तथापि लोकत्वधिया हताः परे ॥

विनैव दानं [2]ततदानकीर्तये विना च शास्त्राध्ययनं विपश्चिते ।
विनानुरागं भवते कृपावते जगज्जनानन्दकृते नमो नमः ॥ ५८ ॥

स्मरापहस्याप्यभवस्य विस्फुरत्सुदर्शनस्याप्यजनार्दनस्यच ।
न नाभिजातस्य तवातिदुर्वचं स्वरूपमुच्चैः कमलाश्रयस्य ॥५९॥

चतुर्मुखोऽङ्गी[3]कृतसर्वमङ्गलो विराजसे यन्नरकान्तकारणम् ।
विरञ्चिगौरीशमुकुन्दसञ्ज्ञिता सुरत्रयी तत् त्वयि किं न लीयते ॥६०॥

वृथा कथासौ परदोषघोषणैस्तव स्तुतिर्विश्वजनातिशायिनः ।
[4]प्रसिद्धिहीनादनपेक्ष्य तुल्यतां भवेदलीकातिशयान्न वर्णना ॥६१॥

अलं कलङ्कैर्भणितैः परेषां निजैर्गुणैरेव तवास्ति शोभा ।
महोभैरेव तव प्रसिद्धिः पतङ्गनिन्दानिकरैः किमस्य ? ॥ ६२ ॥

१ दुरिताद् उद्धरणरूपं तद् यशः शोध्धुं लब्धुं ( रोध्धुं ) दूरीकर्तुं वा परे सहस्राणि तीर्थिकाः प्रतारका न निरताः—तत्परा भवन्ति ॥ २ विस्तृता—महती वा कीर्तिर्यस्य तस्मै ॥ ३ चतुर्दिङ्मुखः ब्रह्मा वा । नरकाख्यस्य गतेर्विनाशकः महादेवश्च । किं न लीयते ? अपि तु सा त्रयी त्वयि अन्तर्भवति । ४ प्रसिद्धिहीनात् पदार्थात् तुल्यतामपेक्ष्य वर्णना भवेत् ।

कृतप्रसर्पद्रथचक्रचूर्णितक्षमारजःकैतवपापचूर्णनैः[1] ।
अनारतं त्वं जिन ! सङ्घनायकैरुपास्यते (से) मङ्गलनादसादरैः ॥६३॥

स्त्रियः[2] प्रियध्वानमुपेत्य तन्वते तथा पुरस्ते जिन ! सङ्घसङ्गताः ।
यथा तदाकर्णनजातविस्मया भवन्ति सर्वाः स्तिमिताः सुरप्रियाः ॥

प्रियस्वनैः[3] सङ्घजनैस्त्वदालयप्रदक्षिणादानपरायणैर्घनैः ।
महान्तरीपं परितः प्रसृत्वरा अनुक्रियन्ते जलधेर्महोर्मयः ॥ ६५ ॥

मृदङ्गवेणुध्वनिभिर्विसृत्वरैः समुच्छलत्पञ्चममूर्छनाभरैः ।
अनारतं सङ्घवृते त्वदालये शिवश्रियो नृत्यविधिर्विजृम्भते ॥६६॥

जगज्जनानन्दन ! चन्दनद्रवैस्त्वदङ्गमभ्यर्च्य ससान्द्रकुङ्कुमैः ।
कथं भजन्ते भुवि सङ्घमानवाः समग्रतापप्रशमेन निर्वृतिम् ? ॥६७॥

अवेक्ष्य धूमं तव चैत्यमूर्धनि प्रसर्पिकृष्णागुरुधूपसम्भवम् ।
समुन्नमन्मेघधिया कलापिनामुदेत्य विश्रान्तमकाण्डताण्डवम् ॥६८॥

वनं यथा पुष्पभरेण पावनं ग्रहव्रजैर्वा[4] गगनं प्रकाशिभिः ।
तथा सदा सङ्घजनैरलङ्कृतैर्विराजते त्वद्भवनं श्रिया घनम् ॥६९॥

प्रसारयेत् कः पुरतः स्वपाणी कल्पद्रुमस्य त्वयि दानशौण्डे ? ।
काष्ठत्वसंसर्गजदोषजास्य श्रुता हि लीनालिमिषात् कुकीर्तिः ॥७०॥

---

१ कृतं प्रसर्पत्—चलत् रथस्य चक्रं तेन चूर्णितक्षमारजः तस्य मिषात् पापस्य चूर्णनं यैस्तैः सङ्घनायकैः । २ प्रियगीतानि स्त्रियः तथा तन्वते यथा तानि श्रुत्वा सुरप्रियाः स्तिमिताः स्तब्धा मुग्धा वा भवन्ति । ३ घनैः प्रियस्वनैः सङ्घजनैर्महान्तरीपं—द्वीपं इव त्वां जलधेः प्रसृत्वरा ऊर्मयोऽनुक्रियन्ते । ४ यथा ग्रहसमूहैस्तारादिभिः व्योम तथा श्रिया—शोभया घनं पूरितं त्वद्भवनं विराजते ॥

लब्ध्वा भवन्तं विदितं वदान्यं याचेत चिन्तामणिमादृतः कः ?।
विधोरिवाङ्केन महस्विनोऽपि पाषाणभावेन दितं यशोऽस्य ॥७१॥
अभ्यर्थनीयाऽपि न कामधेनुः प्रसद्य सद्यो ददति त्वयीश !।
इयं पशुर्नाकिमनो धिनोतु पयोभरैरेव न दानकीर्त्या ॥७२॥
न पाटवं कामघटस्य दाने भिदेलिमस्योपलतः क्षणेन।
सदा प्रदानोत्सवकान्तकीर्तिं विहाय तत्त्वां सजतीह को वा? ॥७३॥
त्वत्तः प्रसीदन्ति हि कामधेनुकल्पद्रुचिन्तामणिकामकुम्भाः।
त्वदप्रसत्तौ च तदप्रसत्तिरिति त्वमेवासि बुधैर्निषेव्यः ॥७४॥
कायप्रयासेन निषेव्यमाणाश्चिरं नृपाः स्वल्पकृपा भवन्ति।
भवांस्तु भक्त्यैव तनोति सर्वमनोरथान् इत्यखिलातिशायी ॥७५॥
स्वर्गापवर्गार्पणसावधानं त्वां याचते वैषयिकं सुखं कः ?।
कल्पद्रुमं को बदरीफलानि याचेत वा चेतनया विहीनः ॥७६॥
त्वदीयसेवा विहिता शिवार्थं ददाति भोगानपि चानुषङ्गात्।
कृषीवलाः शस्यकृते प्रवृत्ताः पलालजालं त्वनुषङ्गसङ्गि ॥७७॥
सितोपला त्वद्वचसा विनिर्जिता तृणं गृहीत्वा वदने पलायिता।
क्षणादसङ्कुच्यत हारहूरया ततत्र(त्र)पानिर्गतकान्तिपूरया ॥७८॥
रसैर्गिरस्ते नवभिर्मनोरमाः सुधासु दृष्टा बहुधापि षड् रसाः।
अतोऽनयोः कः समभावमुच्चरेद् वरेण्यहीनोपमितिर्विडम्बना ॥७९॥
तृणैकजात्येषु यदल्पसारता विचक्षणैरिक्षुषु दिक्षु गीयते।
समग्रसारा तव भारती ततः कथं तदौपम्यकथाप्रथाऽसहा ॥८०॥
भवद्वचःपानकृतां न नाकिनां सुरद्रुमाणां फलभोगनिष्ठता।
द्विधाप्यभीषां न ततः प्रवर्तते फलैस्त्रपाभिश्च न भारनम्रता ॥८१॥

प्रकाममन्तःकरणेषु देहिनां वितन्वती धर्मसमृद्धिमुच्चकैः ।
चिरं हरन्ती बहु पङ्कसङ्करं सरस्वती ते प्रथते जगद्धिता ॥८२॥
स्फुरन्ति सर्वे तव दर्शने नयाः पृथग् नयेषु प्रथते न तत् पुनः ।
कणा न राशौ किमु कुर्वते स्थितिं कणेषु राशिस्तु पृथग् न वर्तते ॥
स्वतः प्रवृत्तैर्जिन ! दर्शनस्य ते मतान्तरैश्चेत् क्रियते पराक्रिया ।
तदा स्फुलिङ्गैर्महतो हविर्भुजः कथं न तेजः प्रसरत् पिधीयते ?॥८४॥
स्फुरन्नयावर्तमभङ्गभङ्गतरङ्गमुद्यत्पदरत्नपूर्णम् ।
महानुयोगह्रदिनीनिपातं भजामि ते शासनरत्नराशिम् ॥८५॥
तवोपदेशं समवाप्य यस्माद् विलीनमोहाः सुखिनो भवामः ।
नित्यं तमोराहुसुदर्शनाय नमोऽस्तु तस्मै तव दर्शनाय ॥८६॥
न नाम हिंसाकलुषत्वमुच्चैः श्रुतं न चानाप्तविनिर्मितत्वम् ।
परिग्रहो नो नियमोज्झितानामतो न दोषस्तव दर्शनेऽस्ति ॥८७॥
'महाजनो येन गतः स पन्था' इति प्रसिद्धं वचनं मुनीनाम् ।
महाजनत्वं च महाव्रतानामतस्तदिष्टं हि हितं मतं ते ॥ ८८ ॥
समग्रवेदोपगमो न केषुचित् क्वचित् त्वसौ बुद्धसुतेऽपि वृत्तिमान् ।
अशेषतात्पर्यमति प्रसञ्जकं ततोऽपुनर्बन्धकतैव शिष्टता ॥ ८९ ॥
न वासनायाः परिपाकमन्तरा नृणां जडे तादृशतेति सौगताः ।
न कापिलास्तु प्रकृतेरधिक्रियाक्षयं तथा भव्यतयेति ते गिरः ॥९०॥
इहापुनर्बन्धकभावमन्तरा बिभर्ति वाणी तव कर्णशूलताम् ।
विना किमारोग्यमतिं ज्वरोदये न याति मिष्टान्नततिर्विषात्मताम्॥९१॥
शास्त्राणि हिंसाद्यभिधायकानि यदि प्रमाणत्वकथां भजन्ते ।
हविर्भुजः किं न तदातितीव्राः पीयूषसाधर्म्यमवाप्नुवन्ति ॥९२॥

विधाय मूर्धानमधस्तपस्यया किमुच्चमन्त्रव्रतशीलशीलनैः ।
श्रुतं न शङ्खेश्वरनाम विश्रुतं किमत्र विद्याव्रजबीजमुज्ज्वलम् ॥९३॥
मदाम्बुलुभ्यद्भ्रमरारवेण प्रवृद्धरोषं गिरितुङ्गकायम् ।
अश्रान्तमान्दोलितकर्णतालं प्रोन्मूलयन्तं विपिनं विशालम् ॥९४॥
करप्रहारैः कुलिशानुकारैः सन्त्रासयन्तं बहुवन्यजन्तून् ।
अभ्यापतन्तं द्विरदं निरीक्ष्य भियं जनास्त्वच्छरणा न यान्ति ॥९५॥

द्वाभ्यां युग्मम् ॥

विदीर्णदन्तिव्रजकुम्भपीठव्यक्तक्षरद्रक्तरसप्रसक्तम् ।
गिरिप्रतिध्वानकरैः प्रणादैर्विध्वंसयन्तं करिणां विनोदम् ॥९६॥
अतुच्छपुच्छस्वनवारबिभ्यद्वराहमातङ्गचमूरुयूथम् ।
मृगारिमुद्वीक्ष्य न शङ्कते ते नाम स्मरन् नाथ ! नरो नितान्तम्॥९७॥

द्वाभ्यां युग्मम् ।

तमालहिन्तालरसालतालविशालसालव्रजदाहधूमैः ।
दिशः समस्ता मलिना वितन्वन् दहन्निवाभ्रं प्रसृतैः स्फुलिङ्गैः॥९८॥
मिथो मिलज्ज्वालजटालमूर्तिर्दवानलो वायुजवात् करालः ।
त्वदीयनामस्मरणैकमन्त्राद् जलायते विश्वजनाभिवन्द्य ! ॥९९॥

युग्मम् ॥

स्फुरत्फणाडम्बरभीमकायः फूत्कारभारैरुदयद्विषायः ।
उल्लालयन् क्रूरकृतान्तदंष्ट्राद्वयाभजिह्वायुगलं प्रकोपात् ॥१००॥
पापाणुभिः किं घटितः पयोदश्यामः फणीन्द्रस्तव नाममन्त्रात् ।
भृशं विशंकं व्रजतां समीपे न भीतिलेशं तनुते नराणाम् ॥१०१॥

युग्मम् ॥

भटासिभिन्नद्विपकुम्भनिर्यन्मुक्ताफलैस्तारकिताभ्रदेशे ।
धनुर्विमुक्तैस्तव काण्डवृन्दैः प्रदर्शिताकाण्डतडिद्विलासे ॥१०२॥

रणाङ्गणे धीरमृगारिनादैः पलायमानाखिलभीरुलोके ।
जयं लभन्ते मनुजास्त्वदीयपदाब्जसेवाप्रथितप्रसादाः ॥१०३॥
युग्मम् ॥

उत्तालभूयः पवमानवेगादुल्लोलकल्लोलसहस्रभीष्मे ।
समुच्छलत्कच्छपनक्रचक्रसङ्घट्टनाभङ्गुरयानपात्रे ॥१०४॥

पतन्महाशैलशिलारवेण गलत्प्रमीलीकृतपद्मनाभे ।
श्रियं लभन्ते भवतः प्रभावात् सांयात्रिका वीतभियः पयोधौ ॥१०५॥
युग्मम् ॥

जलोदरा दत्तदरा न जातु ज्वराः प्रशान्तप्रसरा भवन्ति ।
न पुष्टतां कुष्टरुजः प्रमेहा विदीर्णदेहा न समुद्भव(वह)न्ति ॥१०६॥

भगन्दरः प्राणहरः कथं स्यात् क्षणाद् व्रणानां क्षयमेति पीडा ।
ब्रूमः किमन्यत् तव नाममन्त्राद् रुजः समस्ता अपि यान्ति नाशम्
युग्मम् ॥

आपादकण्ठार्पितशृङ्खलौघा व्रणैर्विशीर्णाः प्रतिगात्रदेशम् ।
व्यथावशेन क्षणमप्यशक्ता उच्छ्वासमुल्लासयितुं समन्तात् ॥१०८॥

दशामवाप्ता भृशशोचनीयां विमुक्तरागा निजजीवितेऽपि ।
नरा जपन्तस्तव नाममन्त्रं क्षणाद् गलद्बन्धभया भवन्ति ॥१०९॥
युग्मम् ॥

इत्यष्टभीतिदलनप्रथितप्रभावं
नित्यावबोधभरबुद्धसमग्रभावम् ।
विश्वातिशायिगुणरत्नसमूहधाम !
त्वामेव देव ! वयमीश्वरमाश्रयामः ॥११०॥

जिन ! कृपाढ्य ! भवन्तमयं जनस्त्रिजगतोजनवत्सल ! याचते।
प्रतिभवं भवतो भवतात् कृपारसमये समये परमा रतिः ॥१११॥

प्रणम्रहरिमण्डलीमुकुटनीलरत्नत्विषां
स्वकीयदशनत्विषामपि मिथः प्रसङ्गोत्सवे ।
सृजन्निव कलिन्दजा सुरतरङ्गिणीसङ्गमं
भवान् भवतु भूतये भवभृतां भवत्सेविनाम् ॥११२॥

इति जिनपतिर्भूयो भक्त्या स्तुतः शमिनामिन-
स्त्रिदशहरिणीगीतस्फीतस्फुरद्गुणमण्डलः ।
प्रणमदमरस्तोमः कुर्याज्जगज्जनवाञ्छित-
प्रणयनपटुः पार्श्वः पूर्णां यशोविजयश्रियम् ॥११३॥

[ ११८ ]

## श्रीशमीनपार्श्वस्तोत्रम् ।

.... .... .... .... ....
.... .... .... .... .... ॥१॥

कल्पद्रुमोऽद्य फलितो लेभे चिन्तामणिर्मया ।
प्राप्तः कामघटः सद्यो यज्जातं तव दर्शनम् ॥२॥
क्षीयते सकलं पापं दर्शनेन जिनेश ! ते ।
तृण्या प्रलीयते किं न ज्वलितेन हविर्भुजा ? ॥३॥
मूर्त्तिः स्फूर्तिमती भाति प्रत्यक्षा तव कामधुक् ।
सम्पूरयन्ती भविनां सर्वं चेतःसमीहितम् ॥ ४ ॥
लोचने लोचने ह्येते ये त्वन्मूर्तिविलोकिनी ।
यद् ध्यायति त्वां सततं मानसं मानसं च तत् ॥५॥
सती वाणी च सा वाणी या त्वत्स्तुतिविधायिनी ।
येन प्रणम्रौ त्वत्पादौ मौलिर्मौलिः स एव हि ॥ ६ ॥
मुखस्फूर्तिं तवोद्वीक्ष्य ज्योत्स्नामिव विसृत्वरीम् ।
मुखानि कैरवाणीव हसन्ति नियतं सताम् ॥ ७ ॥
घटी पटीयसी सैव तद् गलद्वृजिनं दिनम् ।
समयोऽसौ रसमयो यत्र त्वद्दर्शनं भवेत् ॥ ८ ॥
श्रीशमीनाभिधः पार्श्वः पार्श्वयक्षनिषेवितः ।
इति स्तुतो वितनुतां यशोविजयसम्पदम् ॥ ९ ॥

[ ११९ ]

## श्रीगोडीपार्श्वस्तवनम् ।

१ .... .... .... .... .... .... .... .... .... ॥ ६ ॥
स्मरः स्मारं स्मारं भवदवथुमुच्चैर्भवरिपोः
पुरस्ते चेदास्ते तदपि लभते तां बत दशाम् ।

रिपुर्वा मित्रं वा द्वयमपि समं हन्त ! सुकृतो—
ज्झितानां किं ब्रूमो जगति गतिरेषास्ति विदिता ॥ ७ ॥

दृशां प्रान्तैः कान्तैर्नहि वितनुषे स्नेहघटनां
प्रसिद्धस्ते हस्ते न खलु कलितोऽनुग्रहविधिः ।
भवान् दाता चिन्तामणिरिव समाराधनकृता—
मिदं मत्वा सत्वा दधति तव धर्मे दृढरतिम् ॥ ८ ॥

स सेवाहेवाकैः श्रित इह परैर्यः शुभकृते
नियन्ता हन्तायं सजति गृहिणीं गाढमुरसा ।
भवेदस्मात् कस्मात् फलमनुचितारम्भरभसा—
ल्लतावृद्धिर्न स्याद् दवदहनतो जातु जगति ॥ ९ ॥

प्रदीपं विद्यानां प्रशमभवनं कर्मलवनं
महामोहद्रोहप्रसरदवदाने(ते)न विदितम् ।
स्फुटानेकोद्देशं शुचिपदनिवेशं जिन ! तवो—
पदेशं निःक्लेशं जगदधिप ! सेवे शिवकृते ॥ १० ॥

अगण्यैः पुण्यैश्चेत् तव चरणपङ्केरुहरजः
शुचिश्लोका लोकाः शिरसि रसिका देव ! दधते ।
तदा पृष्ठाकृष्टा धृतधृतिरमीषां कृतधिया—
मविश्रान्तं कान्तं त्यजति न निशान्तं जलधिजा ॥ ११ ॥

उदारं यस्तारं तव समुदयत्पूषविलस—
न्मयूपे प्रत्यूषे जिनप ! जपति स्तोत्रमनिशम् ।

१ मुद्रणपुस्तिकाया विनिष्टे पत्रे विशीर्णं पद्यपञ्चकम् ॥

प्रसर्पद्दानाम्भःसुभगकरटानां करटिनां
घटा तस्य द्वारि स्फुरति सुभटानामपि न किम् ? ॥१२॥
महालोभक्षोभव्यसनरसिकं चेतसि यदि
स्फुरेद् वारं वारं कृतभवनिकारं त्वदभिधम् ।
तमोह्रासादासादितततविकासाय मुनये
तदा मायाकाया न खलु निखिला द्रुह्यति निशा ॥१३॥
स्थलीषु प्रभ्रष्टान् शिवपथपथः सद्भभविनो
विना त्वामन्यः कः पथि नयति दीपानुकृतिभिः ।
प्रभावादुद्भूतस्तव शुचिरितः कीर्तिनिकरः
करोत्यच्छं स्वेच्छं कलिमलिनमन्हाय भुवनम् ॥ १४ ॥
विलोलैः कल्लोलैर्जवनपवनैर्दुर्दिनशता–
हतोद्योतैः पोतैर्निकटविकटोद्यज्जलचरैः ।
जनानां भीतानां त्वयि परिणता भक्तिरवना (नौ)
जगद्बन्धो ! सिन्धोर्नयति विलयं कष्टमखिलम् ॥ १५ ॥
अटव्यामेकाकी नतनिखिलनाकीश ! पतितो
वृतायां कीनाशैरयि ! (रिव)हरिकरिव्याघ्रनिकरैः ।
जनस्तत्पूतात्मा भवन इव भीतिं न लभते
मनश्चेत् त्वन्नामस्मरणकरणोत्कं वितनुते ॥ १६ ॥
जपन्तस्त्वन्नाम प्रतिदशमि मन्त्राक्षरमयं
दशानामाशानां श्रियमुपलभन्ते कृतधियः ।
दशाप्याचाम्लैस्तु त्रिदशतरवः सन्निदधते
कृतैः किं वा न स्याद् दशनिरयवासार्तिविलयः ॥ १७ ॥

स्रजं भक्त्या जन्तुर्घनसुमनसां सौरभमयीं
न यः कण्ठे धत्ते तव भवभयार्तिक्षयकृतः ।
कथं प्रेत्याभ्येत्य त्रिदशतरुपुष्पस्रजमहो
शुभायत्तां धत्तां त्रिदशतरुणी तस्य हृदये ? ॥ १८ ॥

पिता त्वं बन्धुस्त्वं त्वमिह नयनं त्वं मम गति-
स्त्वमेवासि त्राता त्वमसि च नियन्ता नतनृपः ।
भजे नान्यं त्वत्तो जगति भगवन् ! दैवतधिया
दयस्वातः प्रीतः प्रतिदिनमनन्तस्तुतिसृजम् ॥ १९ ॥

जगज्जैत्रैश्चित्रैस्तव गुणगणैर्यो निजमनः
स्थिरीकृत्याकृत्याद् भृशमुपरतो ध्यायति यतिः ।
इहाप्यस्योदेति प्रशमलसदन्तःकरणिका-
समप्रेमस्थेमप्रसरजयिनी मोक्षकणिका ॥ २० ॥

फणैः पृथ्वीं पृथ्वीं कथमिह फणीन्द्रः सुमृदुभि-
र्हरिन्नागा रागात् कथमतिभरक्लान्ततनवः ।
क्व कूर्मो वा धत्तां निभृततनुरेको जलचरः
पटुर्धर्मः शर्मप्रभव ! तव तां धर्तुमखिलाम् ॥ २१ ॥

ज्वलन् ज्वालाजालैर्ज्वलनजनितैर्देव ! भवता
बहिः कृष्टः काष्ठात् कमठहठपूरैः सह दितात् ।
नमस्कारैः स्फारैर्दलितदुरितः सद्गुणफणी
किमद्यापि प्रापि प्रथितयशसा नेन्द्रपदवीम् ॥ २२ ॥

महारम्भा दम्भाः शठकमठपञ्चाग्निजनिता-
स्त्वया दीर्णाः शीर्णाखिलदुरितकौतूहलकृता ।

किमाश्चर्यं वर्यं तदिह निहताः किं न रविणा
विनायासं व्यासं रजनिषु गता ध्वान्तनिकराः ॥ २३ ॥
ज्वलत्काष्ठक्रोडात् फणिपतिसमाकर्षणभवं
यशः कर्षत्युच्चैस्तव परयशःकारणगुणात् ।
इदं चित्रं काष्ठाद् बहिरपसृताज्जातमहितो
न यत् स्पष्टं काष्ठापसरणरसं हन्त ! वहति ॥ २४ ॥
द्विषत्तापव्यापप्रथनपटुभिर्मोहमथनैः
प्रतापैराक्रान्तस्तव न कमठः कान्तिमभृत ।
महोभिः सूरस्य प्रथितरुचिपूरस्य दलित-
द्युतिस्तोमः सोमः श्रयति किमु शोभालवमपि ? ॥ २५ ॥
विलासः पद्मानां भवति तमसामप्युपशमः
प्रलीयन्ते दोषा व्रजति भवपङ्कोऽपि विलयम् ।
प्रकाशः प्रोन्मीलेत् तव जिन ! जगज्जित्वरगुण !
प्रतापानां भानोरिव जगदभिव्याप्तिसमये ॥ २६ ॥
किमु स्पष्टैः कष्टैः किमु परिणतैरासनशतैः
प्रयोगा योगानां नहि भववियोगाय पटवः ।
त्वदाज्ञा चेदेका शिरसि न विवेकादुपहृता
विना वीर्यं कार्यं न भवति नृणां भेषजगणैः ॥ २७ ॥
नराः शीर्षे शेषामिव तव विशेषार्थविदुषः
शतै राज्ञामाज्ञामिह दधति ये देव ! महिताम् ।
अविश्रामैस्तेषामहमहमिकायातनृपति-
प्रणामैरुद्दामैः समुदयति कीर्तिर्दिशि दिशि ॥ २८ ॥

जगत्स्वामी चामीकररजतरत्नोपरचितै–
विशालैस्त्वं सालैः परमरमणीयद्युतिरसि ।
तव ब्रूते भूतेः समवसरणक्ष्माप्यतिशयं
ध्वजव्याजभ्राजत्सरसरसनादुन्दुभिरवैः ॥ २९ ॥
सभायामायाताः सुरनरतिरश्चां तव गणाः
स्फुटाटोपं कोपं न दधति न पीडामपि मिथः ।
न भीतिं नानीतिं त्वदतिशयतः केवलमिमे
सकर्णाः कर्णाभ्यां गिरमिह पिबन्ति प्रतिकलम् ॥ ३० ॥
गिरः पायं पायं तव गलदपायं किमभवन्
सुधापाने जाने नियतमलसा एव विबुधाः ।
तदक्षुद्रा मुद्रा सितमहसि पीयूषनिलये
निजायत्ता दत्ता जठरविलुठल्लक्ष्ममिषतः ॥ ३१ ॥
तनीयानप्युच्चैर्न पटुरशनीया परिभवः
पिपासापि क्वापि स्फुरति न भवद्गीःश्रवणतः ।
भवेत् साक्षाद् द्राक्षारसरसिकता हन्त ! बहुधा
सुधास्वादः सद्यः किमु समुदयेन्नाधिवसुधम् ॥ ३२ ॥
ब्रुवाणैर्गीर्वाणैर्जिन ! सितकरं कीर्तिनिकरं
तव प्रत्नै रत्नैर्झटिति घटिता धर्मपरिषत् ।
अमन्दा मन्दारद्रुमकुसुमसौरभ्यसुभगा
न किं चित्ते धत्ते भुवनभविनां मेदुरमुदम् ? ॥ ३३ ॥
'अशोक'स्ते श्लोकश्रवणजनितोऽयं जयति किं
शिरो धुन्वन् भूयश्चपलदलदम्भादतिमुदः ।

समस्तोदस्तोद्यद्दुरितपटलस्य प्रतिभुवः
शिवश्रीलाभस्य प्रथितगुणरत्नव्रजभुवः ॥ ३४ ॥

जगद्भानोर्जानोः सममसमसौरभ्यकलितं
पुरः के वा देवास्तव न दधते 'पुष्पनिकरम्' ।
प्रसर्पत्कन्दर्पस्मयमथनमुक्ताश्रव ! भवत्–
प्रभावादस्यापि व्रजति नियतं बन्धनमधः ॥ ३५ ॥

गलद्रोधं बोधं निजनिजगिरा श्रोतृनिकरा
लभन्ते हन्तेह त्वदुदित'गिरा' नात्तभिदया ।
इमां ते योगर्द्धिं न खलु कुशलाः स्पर्द्धितुमहो !
परे धाम क्रामद् गगनमिव सूर्यस्य शलभाः ॥ ३६ ॥

मुखेन्दुज्योत्स्नेव स्फुटतनुलसत्कान्तियमुना–
प्रशंसा हंसाली किमु किमुत पुण्यर्द्धिरखिला ? ।
स्मितश्रीः किं लक्ष्म्याः किमुत परमध्यानघटना
प्रभो ! त्वन्मौलिस्था विलसति सिता 'चामरततिः' ॥३७॥

न किं देवाः सेवां विदधति 'मृगेन्द्रासन' जुष–
स्तव प्रौढाम्भोदप्रतिमवपुषः पुण्यजनुषः ।
प्रदेशे स्वर्णाद्रेः क्वचन रुचिरे नन्दनवने
प्रियङ्गोः सङ्गोत्काः किमु न सततं षट्पदगणाः ॥३८॥

अभूत्तेन्दुर्भूयःप्रभविमुखीभूय न सुखी
तमोग्रासोल्लासस्तदिह ननु मय्येव पतितः ।
इदं मत्वा सत्वात् किमु तव रविर्मौलिमधुना
श्रितो नेतश्चेतःसुखजनन 'भामण्डल' मिषात् ॥ ३९ ॥

स्फुरत्कैवल्यश्रीपरिणयनदिव्योत्सवमिव
त्रिलोकीलुण्टाकस्मरजयरमाताण्डवमिव ।
सदा धामस्थामप्रसरमिव शंसन्नतितरां
तवाकाशेऽकस्मात् स्फुरति पुरतो ' दुन्दुभिरवः ' ॥४०॥

परं चिन्हं विश्वत्रितयजयदिव्यव्यवसितेः
कृतव्यापत्तापत्रयविलयसौभाग्यनिलयः ।
धृतं हस्तैः शस्तैस्त्रिदशपतिभिः प्रेमतरलै-
र्भवन्मौलौ ' छत्रत्रय ' मतितरां भाति भगवन् ! ॥४१॥

विलासो नारीणामिह खलु पराभूतिरुदिता
प्रसिद्धा चान्येषां तव च परमोहव्यवसितिः ।
इदं सर्वं साम्यं तदपि तव तैर्नैव तुलनां
सहर्षं भाषन्ते परमकवयः कौतुकमदः ॥ ४२ ॥

अपारव्यापारव्यसनरसनिर्माणविलय-
स्थितिक्रीडाव्रीडा न खलु तव विश्वे विलसति ।
न कोपं नारोपं न मदमदिरोन्मादमनिशं
न मोहं न द्रोहं कलयसि निषेव्योऽसि जगतः ॥ ४३ ॥

भवेद् भूतावेशः परतनुनिवेशः कथमहो !
परेषां संक्लेशः स्फुरति हि महामोहवशतः ।
न चेदेवं देवं यदि चपलयेन्नर्मरचना
विलीना दीनासौ तदिह भुवनेऽधीरिमकथा ॥ ४४ ॥

त्वदौपम्यं रम्यं यदि हतधियो ! हन्त ! ददते
परेषामुल्लेखात् प्रकृतहितदानस्य जगति ।

न किं ते भाषन्ते विषतरुषु कल्पद्रुतुलनां
प्रलापाः पापानां सपदि मदिरापानजनिताः ॥ ४५ ॥
निशाभ्यः प्रत्यूषे विफलबदरीभ्यः सुरतरौ
विषेभ्यः पीयूषे चुलुकसलिलेभ्यो जलनिधौ ।
गिरिभ्यः स्वर्णाद्रौ करिणि हरिणेभ्यः खलु यथा
तथान्येभ्यो नाथ ! त्वयि गुणसमृद्धेरतिशयः ॥४६॥
मुखं ते निस्तन्द्रं जितसकलचंद्रं विजयते
कृपापात्रे नेत्रे हसितकजपत्रे विलसतः ।
त्वदङ्गो वामाक्षीपरिचयकलङ्कोज्झित इति
प्रभो ! मूर्तिस्फूर्तिस्तव शमरसोल्लासजननी ॥ ४७ ॥
तरी संसाराब्धेर्भुवनभविनां निर्वृतिकरी
सदा सद्यः प्रोद्यत्सुकृतशतपीयूषलहरी ।
जरीजृम्भज्जिम्भत्रिदशमणिकांतिस्मयहरी
वरीवर्ति स्फूर्तिर्गतभव ! भवन्मूर्तिनिलया ॥ ४८ ॥
इमां मूर्तिस्फूर्तिं तव जिन ! समुद्वीक्ष्य सुदृशां
सुधाभिः स्वच्छंदं स्नपितमिव वृंदं ननु दृशाम्।
कुदृष्टीनां दृष्टिर्भवति विपदिग्धेव किमतो
विना घूकं प्रीतिर्जगति निखिले किं न तरणेः ? ॥४९॥
इमां मूर्तिस्फूर्तिं तव जिन ! गतापायपटलं
नृणां द्रष्टुं स्पष्टं सततमनिमेषत्वमुचितम् ।
न देवत्वे ज्यायो विषयकलुषं केवलमदो
निमेषं निःशेषं विफलयतु वा ध्यानशुभदृक् ॥ ५० ॥

इदानीं स्तुतेरुपसंहारमाह—

इय संथुओ महायस ! भत्तिब्भरनिब्भरेण हियएण ।
ता देव ! दिज्ज बोहिं भवे भवे पास ! जिणचंद ! ॥ ५ ॥

## लघुवृत्तिः ।

'इय संथुओ' व्याख्या—

इति संस्तुतो महायशः ! भक्तिभरनिर्भरेण हृदयेन । यस्मादेवं तस्मादेव ददासि त्वमेव ममेत्यध्याहार्यम् । 'बोधि' सम्यक्त्वं भवे भवे हे पार्श्व ! जिनचन्द्र ! इत्यक्षरार्थः ।

अत्रापि गुरुपारतंत्र्यागतः सम्प्रदायः प्रोच्यते—

प्रथमं वं झं हं दत्त क्षि इति नाम दत्वा बहिरष्टकारसम्पुटं कृत्वा तद्बहिः षोडश स्वरैर्वेष्टयित्वा तदुपरि अष्टदलाम्बुजं विधाय दलेषु प्रत्येकं ॐ पार्श्वनाथाय ह्रीं श्रीं स्वाहा इत्यालिख्य पुनरपि कमलं द्वादशदलं कृत्वा दलं दलं प्रति हर हर इत्यक्षरद्वयं न्यसेत्, बाह्ये क्ष्वीं क्ष्वीं हंस इत्यक्षरैर्वेष्टयेत् । बाह्ये हकारसम्पुटं, उपरि च एकारसम्पुटं परिकल्प्य बहिः क्ष्वींकारेण त्रिधा वेष्टयेत् ।

इदं यन्त्रं कुङ्कुमचन्दनकर्पूरगोरोचनादिसुरभिद्रव्यैर्भूर्ये समालिख्य ॐ कुं वं ह्वापथति (?) क्ष्वीं क्ष्वीं हंसः स्वाहा। अनेन मन्त्रेण पूजयेत् श्वेतपुष्पैरष्टोत्तरशतसङ्ख्यैर्दिनत्रयं यावत् । शान्तिकपौष्टिकभूतप्रेतशाकिनीज्वरादिभयं नाशयति । रक्षाप्रयोगे (उं) जने कुमारीकर्तितसूत्रेण वेष्ट्य बाहौ धारणीयम् । सर्वत्रापि रक्षा भवति ॥

अधुना कतिचिन्मन्त्राः प्रतिपाद्यन्ते बृहद्वृत्तिकथिताः—

ॐ म्ल्व्यूँ वं हं ओं क्रौं क्षीं ह्रीं क्लीं ब्लूँ द्रं द्रीं ज्वालामालिनि ! झंकारिणि ! विषं निर्विषं कुरु कुरु स्थावरविषं जङ्गमं जाठरं

लघुवृत्तिः।

योगजं अपहर अपहर मण्डकं अमृतेन सिञ्चय २ उत्थापय २ दण्डेनाक्रम्य विषमविषं ठः ठः ठः स्वाहा।

पुरुषमानं दण्डं सप्ताभिमन्त्रितं कृत्वा सर्वसन्धिषु डङ्किनस्त्रिस्ताडयेत् उत्थापयति। तथा–ॐ क्रौं म्रो मृ ठः ३ इत्यनेन मन्त्रेण जलधारा देया डङ्कमुत्थापयति।

ऐँ ह्रीँ श्रीँ इति मन्त्रं लक्षमेकं जपेत्, पुरं क्षोभयति रक्तपुष्पैः। ॐ ह्रीँ श्रीँ क्लीँ कलिकुण्डस्वामिने नमः एष सर्वार्थसाधको नित्यजापाद् भवति।

तथा—ॐ नमो भगवते पार्श्वनाथाय क्षेमङ्कराय ह्रीँ नमः। क्षेमङ्करो मन्त्रः।

उपसर्गहरस्तोत्रं विवृतं सङ्क्षेपतो गुरुमुखेन।
विज्ञाय किमपि तत्त्वं विद्याप्रवादाभिधग्रन्थात्॥

इत्युपसर्गहरस्तोत्रलघुवृत्तिः चन्द्राचार्यकृता समाप्ता॥



પાટણના શીતલનાથના મંદિરમાં આવેલી
**પદ્માવતીની પ્રાચીન મૂર્તિ**

श्रीपार्श्वदेवगणिविरचितवृत्तिविभूषितं

# श्रीपद्मावत्यष्टकम्।

## श्रीधर्ममूर्त्तिसूरिगुरुभ्यो नमः

प्राणिपत्य जिनं देवं श्रीपार्श्वं पुरुषोत्तमम्।
पद्मावत्यष्टकस्याहं वृत्तिं वक्ष्ये समासतः ॥ १ ॥

ननु किमिति भवद्भिर्मुनिभिः सद्भिः पद्मावत्यष्टकस्य वृत्तिर्विधीयते? साऽविरतिः अतः कथं तस्याः सम्बन्धिनोऽष्टकस्य भवतां मुनीनां सतां वृत्तिः कर्तुं युज्यते?। अत्रोत्तरमनुत्तरं वितरामः—यतः सा हि भगवतः सर्वज्ञस्य तीर्थकस्य सर्वोपद्रवरक्षणप्रवणस्य सकलकल्याणहेतोः श्रीपार्श्वनाथस्य शासनरक्षणकारिणी सर्वसत्वभयरक्षणपरायणा अवितथसम्यग्दर्शनयुक्ता जिनमन्दिररक्षाप्रवर्त्तिनी सर्वस्यापि त्रिभुवनोदरविवरवर्त्तिनो लोकस्य मानसानन्दविधायिनी अष्टचत्वारिंशत्सहस्रपरिवारसमन्विता एकावतारा श्रीपार्श्वनाथस्य चरणारविन्दसमराधिनी अतः कथमीदृशायाः पद्मावत्याः सम्बन्धिनोऽष्टकस्य वृत्तिं कुर्वतामस्माकं दूषणजालमारोप्यते वावदूकेन भवता? तस्मान्नात्र दोषः।

अथैवं वदिष्यति जञ्जपूकः सन् भवान् यदुत किमिति पूर्वाचार्यप्रणीतस्यास्य मन्त्रस्तोत्रस्य वृत्तिः क्रियते यतो भवतां प्रयोजनाभावात्? अत्रोच्यते—प्रयोजनं हि त्रिविधम् प्रतिपादयन्ति परवादिकुञ्जरविदारणमृगेन्द्राः सहृदयाः, स्वप्रयोजनम्, परप्रयोजनम्, उभयप्रयोजनं च। तत्र स्वप्रयोजनं नववृत्तप्रमाणस्य लोकप्रसिद्धस्य अस्य मन्त्रस्तोत्रस्यार्थस्मरणलक्षणं विद्यते एव। तथा परप्रयोजनमपि विद्यत एव यतस्ते केचिद् भविष्यन्ति मन्दतमाः पाठका येषामस्या अपि वृत्तेः सकाशाद् बोधो भविष्यति। अत एव उभयप्रयोजनमपि सम्भवत्येव। तस्माद् वृत्तिकरणेऽस्माकं प्रयोजनं विद्यत एव।

तत्राद्यं वृत्तमाह—

श्रीमद्गीर्वाणचक्रस्फुटमुकुटतटीदिव्यमाणिक्यमाला-
ज्योतिर्ज्वालाकरालस्फुरितमुकुरिकाघृष्टपादारविन्दे ! ।
व्याघ्रोरोल्कासहस्रज्वलदनलशिखालोलपाशाङ्कुशाढये !
ॐ क्रों ह्रीं मन्त्ररूपे ! क्षपितकलिमले ! रक्ष मां देवि ! पद्मे ! ।

रक्ष—पालय ! हे देवि ! पद्मावति ! शासनदेवि ! । कम् ? 'मां ?' स्तुतिकर्तारम् । कीदृशे देवि ! ? 'श्रीमद्गीर्वाणचक्रस्फुटमुकुटतटीदिव्यमाणिक्यमालाज्योतिर्ज्वालाकरालस्फुरितमुकुरिकाघृष्टपादारविन्दे ! ' श्रीर्विद्यते येषां ते श्रीमन्तः, श्रीमन्तो गीर्वाणाः श्रीमद्गीर्वाणाः, तेषां चक्रं श्रीमद्गीर्वाणचक्रम्, स्फुटानि च तानि मुकुटानि च स्फुटमुकुटानि, श्रीमद्गीर्वाणचक्रे स्फुटमुकुटानि श्रीमद्गीर्वाणचक्रस्फुटमुकुटानि । तटे भवा तटी, तेषां मुकुटानां तटी श्रीमद्गीर्वाणचक्रस्फुटमुकुटतटी । दिव्यानि—प्रधानानि माणिक्यानि, दिव्यमाणिक्यानि, तेषां दिव्यमाणिक्यानां माला दिव्यमाणिक्यमाला, तासां श्रीमद्गीर्वाणचक्रस्फुट मुकुटतटीनां दिव्यमाणिक्यमाला श्रीमद्गीर्वाणचक्रस्फुटमुकुटतटीदिव्यमाणिक्यमाला, तस्या ज्योतिः—तेजः, तस्य ज्वाला श्रीमद्गीर्वाणचक्रस्फुटमुकुटतटीदिव्यमाणिक्यमालाज्योतिर्ज्वाला, तया करालं । स्फुरिता मुकुरिका स्फुरितमुकुरिका, श्रीमद्गीर्वाणचक्रस्फुटमुकुटतटीदिव्यमाणिक्यमालाज्योतिर्ज्वालाकरालस्फुरितमुकुरिका । पादावेवाऽरविन्दे घृष्टा चासौ पादारविन्दा च घृष्टपादारविन्दा, श्रीमद्गीर्वाणचक्रस्फुटमुकुटतटीदिव्यमाणिक्यमालाज्योतिर्ज्वालाकरालस्फुरितमुकुरिकाघृष्टपादारविन्दे ! त्रिदशनिकुरम्बस्ल ! चलकिरीटपर्यस्तप्रधानरत्नमालादीप्तिशिखारौद्रस्पूर्ज्यमानमुकुरिकया घर्षितचरणेन्दीवर ! पुनरपि कीदृशे ? व्याघ्रोरोल्कासहस्रज्वलदनलशिखालोलपाशाङ्कुशाढये ! ' व्याघ्रोरोश्च ता उल्काश्च व्याघ्रोरोल्काः तासां सहस्राणि व्याघ्रोरोल्कासहस्राणि । ज्वलंश्चासावनलश्च ज्वलदनलः, तस्य शिखा ज्वलदनलशिखा, व्याघोरोल्कासहस्राणि च ज्वलदनलशिखा च, पाशश्च अङ्कुशं च पाशाङ्कुशे, लोले च ते पाशाङ्कुशे च लोलपाशाङ्कुशे, ते च, व्याघ्रोरोल्कासहस्रज्वलदनलशिखालोलपाशाङ्कुशाः, तैः आढ्या व्याघ्रोरोल्का-

सहस्रज्वलदनलशिखालोलपाशाङ्कुशाढ्या, तस्याः सम्बोधनं क्रियते व्याघ्रोरोल्कासहस्रज्वलदनलशिखालोलपाशाङ्कुशाढये !–तमापतनज्वालासहस्रदेदीप्यमानानलज्वालाचञ्चलपाशकरिकलभकुम्भविदारणप्रहरणे ! इत्यर्थः । पुनः 'ॐ क्रों ह्रीँ मन्त्ररूपे !' ॐ च क्रोँ च ह्रीँ च ॐ क्रोँ ह्रीँ, ॐ क्रोँ ह्रीँ एवंरूपो य एव मन्त्रः ॐ क्रों ह्रीं मन्त्रः, तत्स्वरूपे ! ॐ क्रों ह्रीं मन्त्ररूपे प्रतीते !। पुनरपि कीदृशे ! 'क्षपितकलिमले !' क्षपितः कलिमलो यया सा तस्याः सम्बोधनं हे क्षपितकलिमले !–विघटितपापमले !। अस्य भावनामाह श्रीकारं नामगर्भं तस्य बाह्ये षोडशदलेषु लक्ष्मीबीजमालिख्य निरन्तरं ध्यानमानं पिङ्गलादिद्रव्यैः सौभाग्यं भवति ।

द्वितीयः प्रकारः–षट्कोणं अस्य चक्रमध्ये ऐङ्कारस्य नामगर्भितस्य बाह्ये क्लींकारं दातव्यम् । बहिरपि सौँ संलिख्य कोणेषु ॐ क्लीं क्ल्हीँ ह्रा ह्रीँ ह्रीँ संलिख्य मायाबीजं त्रिविधमायावेष्टय निरन्तरं स्मर्यमाणे काव्यशक्तिर्भवति ।

अथ तृतीय प्रकारः—

षट्कोणं चक्रमध्ये ऐँ क्लीँ ह्रौँ नाममध्ये, ततः कोणेषु ॐ ह्रीं क्लीं द्रवे नमः, ॐ ह्रीँ क्लीं द्रावे नमः, ओँ ह्रीँ षंदे नमः, ओँ ह्रीं द्रवे नमः, ॐ ह्रीँ द्रवे नमः, ॐ ह्रीँ द्रावे नमः, ओँ ह्रीँ पद्मिनी नाम आलिख्य बहिरष्टदलेषु मायाबीजं दातव्यम् । बाह्येषु षोडशदलेषु कामाक्षरबीजं दातव्यम्, बाह्येषु ह्रौँ संलिख्य बहिरष्टदलाग्रे मायाबीजं संलिख्य मध्येषु ॐ ॐ क्रों ह्रीँ जयाय नमः, विजयाय नमः, अजिताय नमः, अपराजिताय नमः, जयन्ती नमः, विजयन्ती नमः, भद्रायै नमः, ओँ ह्रा जोँ ह्रा शान्तायै नमः आलिख्य बाह्ये मायाबीजं त्रिगुणं वेष्ट्य माहेन्द्रचक्राङ्कितं चतुःकोणेषु लकारं लेख्यम् ।

इदं चक्रं कुङ्कुमगोरोचनादिसुगन्धि द्रव्यैर्भूर्जपत्रे संलिख्यं सा मूलविद्या ॥

ॐ आँ क्रा ह्रीँ धरणेन्द्राय ह्रीँ पद्मावतीसहिताय क्रोँ ह्रैँ ह्रीँ फुट् स्वाहा श्वेतपुष्पैः पञ्चाशत्सहस्रप्रमाणानि एकान्तस्थाने मौनेन जापेन दशांशहोमेन

सिद्धिर्भवति । करजापलक्षेण निरन्तरं ध्यायमानेन आरोग्यबुद्धिलाभः । सर्वकार्याणां सिद्धिर्भवति । सुगमम् ॥

इदानीं प्रथमवृत्तानन्तरं मालामन्त्रमनेकप्रकारं सप्रपञ्चमाह—

भित्त्वा पातालमूलं चलचलचलिते ! व्याललीलाकराले !
विद्युद्दण्डप्रचण्डप्रहरणसहिते ! सद्भुजैस्तर्जयन्ती ।
दैत्येन्द्रं क्रूरदंष्ट्राकटकटघटितस्पष्टभीमाट्टहासे !
मायाजीमूतमालाकुहरितगमने ! रक्ष मां देवि ! पद्मे ! ॥२॥

हे देवि ! पद्मावति ! शासनदेवि ! रक्ष पालय, कम् ? 'माम्' स्तुतिकर्तारम्, कीदृशे देवि ! 'चलचलचलिते !' चलचलचलितं यस्याः सा चलचलचलिता, तस्याः सम्बोधनं चलचलचलिते ! चञ्चलगमने ! इत्यर्थः किं कृत्वा ? 'भित्त्वा' विदारयित्वा, किम् ? 'पातालमूलम्' पातालस्य मूलं पातालमूलम्—असुरभवनमूलमित्यर्थः । पुनरपि कीदृशे ? 'व्याललीलाकराले !' व्यालानां लीला व्याललीला, तया कराला, व्याललीलाकराला, तस्याः सम्बोधनं व्याललीलाकराले !—काकोदरक्रीडारौद्रे ! इत्यर्थः । पुनरपि कथम्भूते ? 'विद्युद्दण्डप्रचण्डप्रहरणसहिते !' विद्युतो दण्डो विद्युद्दण्डः, तद्वत् प्रचण्डं विद्युद्दण्डप्रचण्डम्, विद्युदण्डप्रचण्डं च तत् प्रहरणं च विद्युद्दण्डप्रचण्डप्रहरणं तेन सहिता विद्युद्दण्डप्रचण्डप्रहरणसहिता, तस्याः सम्बोधनं क्रियते विद्युद्दण्डप्रचण्डप्रहरणसहिते !—सौदामिनीलकुटसमर्थायुधयुक्ते ! इत्यर्थः । तया 'तर्जयन्ती' ताडयन्ती । कम् ? 'दैत्येन्द्रम्' दानवेन्द्रम्, कैः ? 'सद्भुजैः' शोभनदोर्दण्डैः । पुनरपि कीदृशे ? 'क्रूरदंष्ट्राकटकटघटितस्पष्टभीमाट्टहासे !' क्रूरा चासौ दंष्ट्रा च क्रूरदंष्ट्रा, तस्याः करकटः शब्दविशेषः क्रूरदंष्ट्राकटकटः, क्रूरदंष्ट्राकटकटेन घटितः क्रूरदंष्ट्राकटकटघटितः, स्पष्टश्चासौ भीमश्च स्पष्टभीमः, क्रूरदंष्ट्राकटकटघटितेन स्पष्टभीमोऽट्टहासो यस्याः सा क्रूरदंष्ट्राकटकटघटितस्पष्टभीमाट्टहासा, तस्याः सम्बोधनं क्रूरदंष्ट्राकटकटघटितस्पष्टभीमाट्टहासे ! । मायाशब्देन

ह्रौँकारबीजमुच्यते. ह्रींकारनामगर्भं, तस्य बाह्येषु षोडशदलेषु मायाबीजं संलिख्य धारयेत् । मायाशब्देन मायाबीजमुच्यते, सप्त लक्षाणि जपेत, सर्व-कार्यसिद्धिर्भवति । पुनरपि कीदृशे ? 'मायाजीमूतमालाकुहरितगगने ! ' माया एव जीमूताः मायाजीमूताः, तेषां माला मायाजीमूतमाला, तया कुहरितं गगनं यया सा मायाजीमूतमालाकुहरितगगना, तस्याः सम्बोधनं क्रियते मायाजीमूतमालाकुहरितगगने !–ह्रौँकारजलधरनिकुरम्बगर्जिताम्बरे ! इत्यर्थः ॥

इदानीं मायानामगर्भितस्य बहिरष्टपत्रेषु ह्रौँकारं दातव्यम् । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे लिखित्वा हस्ते बद्ध्वा सर्वजनप्रियो भवति॥१॥

मायाबीजं नामगर्भितस्य बहिरष्टपत्रेषु ह्रौँकारं दातव्यम्, कुङ्कुम गोरोचनया भूर्जपत्रे लिखित्वा धारयेत् । बालानां शान्तिकरी रक्षा ॥२॥

यथा, मायानामविद्धं एतद्बहिरष्टदलेषु मायाबीजं दातव्यम्, एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे सुगन्धिद्रव्यैः संलिख्य बाहौ धारणीयं सौभाग्यं करोति ॥ ३ ॥

ॐ नमो भगवति ! पद्मावति ! सूक्ष्मपद्मधारिणी पद्मसंस्थिता देवी प्रचण्डदोर्दण्डखण्डितरिपुचक्रे ! किन्नर–किंपुरुष–गरुड–गन्धर्वयक्षराक्षस–भूत–प्रेत–पिशाच–महोरग–सिद्ध–नाग–मनुजपूजिते ! विद्याधरसेविते ! ह्रौँ ह्रौँ पद्मावति ! स्वाहा ।

एतन्मत्रेण सर्षपमभिमन्त्रयेदेकविंशतिवारान् वामहस्तेन बन्धनीयम्, सर्वज्वरं नाशयति, भूतशाकिनीज्वरं नाशयति ॥

ॐ नमो भगवती पद्मावती अक्षिकुक्षीमण्डनी उज्जयन्तवासिनी पूर्वद्वारं बन्धामि, आग्नेयद्वारं बन्धामि, दक्षिणद्वारं बन्धामि, नैर्ऋतद्वारं बन्धामि, पश्चिमद्वारं बन्धामि, वायव्यद्वारं बन्धामि, उत्तरद्वारं बन्धामि, ईशानद्वारं बन्धामि, अधोद्वारं बन्धामि, ऊर्ध्वद्वारं बन्धामि, वक्त्रं बन्धामि,

सर्वग्रहान् बन्धामि, आत्मरक्षा पररक्षा भूतरक्षा पिशाचरक्षा, शाकिनीरक्षा, चोरं बन्धामि यः ठः ठः ठः स्वाहा । सर्वकर्मकरी नामविद्या ज्वरविनाशीनि भवति ॥

ॐ ह्रीँ ह्रीँ ह्वीँ क्लीँ क्लीँ लाह्वा पल (?) श्री पद्मावती आगच्छ आगच्छ स्वाहा । एतां विद्यामष्टोत्तरसहस्रं श्वेतपुष्पैरष्टोत्तरशतं जप्यं पार्श्वनाथचैत्ये जापेन सिद्धिर्भवति ॥

ॐ नमश्चण्डिकायै ॐ चामुण्डे ! उच्छिष्टचण्डालिनी अमुकस्य हृदयं भित्त्वा मम हृदये [1]प्रवेशय स्वाहा । ॐ उच्छिष्टचण्डालिनीए अमुकस्य हृदयं पीत्वा मम हृदयं प्रविश तत्क्षणादानय स्वाहा ।

ॐ चामुण्डे ! अमुकस्य हृदयं पिबामि ॐ चामुण्डिनि ! स्वाहा ।
सित्थयपडिमं काउं संपुण्णं तिअदुअेण तावेह ।
पच्छा राययहोमे सव्वरसेणं वा स कुण ॥ मन्त्रः ॥

ॐ उत्तममातङ्गिनी अप्पइ विस्सेपई कित्तिए पइ पुत्तलग्गि चण्डाली स्वाहा । हुँ ह्रौं ह्रूँ हः । एकान्तरज्वरमन्त्रः ॥ ताम्बूलेन सह देयः ।

ॐ ह्रीँ ॐ नागाकर्षणम् ॐ गः गः, ठः ठः गतिबन्धः ह्रौँ ह्रीँ ह्रैँ हः ॐ देवु. २ मुखबन्धः, ॐ ह्रीँ फुट् क्रौँ छिः २ त्रीठः ३ कुण्डलीकरणम् । ॐ लो ३ ललाटघटप्रवेशः, ॐ यः विसर्जनीयम् । ह्रोठ कण्ठ जिह्वा मुख मखीलउं, ( मणु खिलउं ) तालुउं खिल्लउं, जिह्वा खिल्लउं ताल् हं गरुड वहुः चंचु रहि रे ठः ठः महाकाली योगकाली कुयोगमहुं सिद्धि सिद्धउ एहु सप्पमुहिबन्ध ॐ ठः ठः ॥ सर्पमन्त्रः ॥

ॐ भूरिसी भूतधात्री विविधचूर्णैरलङ्कृता स्वाहा । भूमी (त)शुद्धिः । डाकिनीमन्त्रः ॥

ॐ नमो भगवते पार्श्वनाथाय सर्वशाकिनी योगिनीनां मण्डलमध्ये प्रवेशय २ आवेशय २ सर्वशाकिनी द्विषत्वेन सर्षपास्तारय स्वाहा ॥ ॥ सर्षपतारणमन्त्रः ॥

---

१ हृदयं प्रविशये इति पाठान्तरम् ।

ॐ नमो सुग्रीवाय ह्रीं खट्वाङ्गत्रिशूलडमरहस्ते तिसतीक्ष्णकराले वटेलानलकपोले लुञ्चितकेशकलापे वरदे अमृतशिरलाले गण्डे सर्वडाकिनीनां वशङ्कराय सर्वमन्त्रछिन्दिनीलये आगच्छ भगवति! त्रिशूलं लोलय २ इअरा डाकिनि चल २ ह्रीं ह्रीं ३ घः घुः चाढु(?) स्वाहा ॥ शाकिनीनां निग्रहमन्त्रः। न चलइ किलकिलइ फेत्कारइ मण्डलि असिद्धि हइ निवारह देसि भमइ आउसि पइसई हालशूलि माइ रक्तसीपुत्त पसमं नरकसी। डाकिनीमन्त्रः।

ॐ हं सं वँ क्षँ कमलवर्यूं ब्लूँ भाँ ह्रौं ग्रैं हुँ फुट् ॐ स्वौं क्षँ क्रौं शाकिनीनां निग्रहं कुरु २ हुं फुट्। अश्वगन्धा–यवद्रव–सर्षपकार्पासिकानि अभिमन्त्र्य वस्तुनि आच्छोट्यते उखलमूसलवर्तिनां चाला गरुडैः सिन्दूरैस्ताडयेत्। शाकिनी प्रकटीभवति। तं पात्रं मोचयति। शाकिनीमन्त्रः।

किलेह मूलं तन्दुलोदकेन गालयित्वा पात्रस्य तिलकं क्रियते शाकिनीस्तम्भो भवति।

अतः परं प्रवक्ष्यामि, योगनीक्षोभमुत्तमम्।
विन्यासं मन्त्रसंसिद्धं सिद्धसंघैः प्रपूजितम् ॥

ॐ सुग्रीवाय हुतें वानराय स्वाहा। शाकिनीनां नाशाग्रमुद्रां युं युं बन्धः ॥

ॐ नमो भगवते श्रीसुग्रोवाय सर्वशाकिनीनां प्रमर्दनाय हिलि२ मिलि२ वानराय स्वाहा ॥ डाकिनीदिशाबन्धः ॥ पुत्ररक्षा, वप्रवश्यम् ॥

ॐ नमः सुग्रीवाय भो भो मत्तमातङ्गिनी स्वाहा ॥ मुद्रिकामन्त्रः। चक्रमुद्रा प्रेषितव्या, गृहीतस्य मुद्रादर्शनादेव ग्रहो निर्गच्छति।

ॐ नमः सुग्रीवाय नमश्चामुण्डे! तद्विकालो ग्रहविशति हन २ भञ्ज मोटय२ रोषिणी देवी सुस्वप स्वाहा। प्रोच्छदने विद्या ॥

ॐ नमः सुग्रीवाय परमसिद्धिसर्वशाकिनीनां प्रमर्दनाय कुट्ट २ आकर्षय २ वामदेवे २ प्रेतान् दह मम हिलि रहि २ ग्रस ग्रस् २ हूं फुट् २ ग्रसि २ शूलं शूलचण्डाय नो विज्जानी महन २ प्रचण्डसुग्रीवो ज्ञापयति स्वाहा। सर्वकर्मकरो मन्त्रः।

ॐ नमो सुग्रीवाय वार्षिकसौम्यवचनाय गौरीमुखी देवी शूलिनी हूं २ चामुण्डे ! स्वाहा ॥

अनया विद्यया सकलं परिजप्य कणवीरलताः सप्ताभिमन्त्रिताः कृत्वा उखलमुसले ताडयेत् यथा यथा ताडयति तथा तथा योगिनी भूतास्ताडिता भवन्ति । प्रताडनविद्या । अष्टशतको जापः ॥

ॐकारनामगर्भितो बहिश्चतुर्दलमध्ये ॐ मुनिसुव्रताय संलिख्य बहिः हर २ वेष्टय बहिः कगादिक्षकारपर्यन्तं वेष्ट्यम्, मायाबीजं त्रिधा वेष्ट्यम्, यथा द्वितीयं चंकारं नामगर्भितस्य बहिश्चतुर्दलं वकारं दातव्यम् बहिरष्टपत्रेषु रकारं देयम्, तृतीयं मायाबीजं नामगर्भितो बहिरष्टार्द्धे चकारं देयम्, बहिरगारेषु माया देया ।

एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जे संलिख्य दुष्टवश्योपसर्गो दाघमुपशमयति ।

ह्रीँ नामगर्भितं क्षं वेष्टयं बाह्ये मायात्रिधा वेष्ट्य बहिरष्टार्द्धे क्षं ह्रीँ क्ष्रूँ ह्रीँ संलिख्य विदिगरेषु देवदत्तं देयम् ।

द्वितीयम्—

नामगर्भितो बहिः स्वरावेष्टयं बाह्ये ॐ ह्रीँ चामुण्डा स्वाहा । वेष्ट्य बाह्यं वलयं पूरयेत् ।

एतद् यन्त्रद्वय कुङ्कुमगोरोचनया भूर्जे संलिख्य सूत्रेणावेष्ट्य 'बाहौ धारणीयम् । प्रथमं यन्त्रं बन्ध्यायां गुर्विणी च मृतवत्सा तद् धारयेत् । काकवन्ध्या प्रसवति । सर्वभूतपिशाचप्रभृतीनां रक्षा । बालग्रहरक्षणे रक्षा भवति ॥

मायागर्भं नामगर्भितो बहिरष्टपत्रेषु रं देयम् । यथा रक्षा ।

द्वितीयप्रकारः—

मायाबीजं नामगर्भितो बहिरष्टार्द्धे मायाबीजं देयम् । यथा ।

तृतीयम—

ह्रीँ श्रीँ देवदत्तं ह्रीँ श्रीँ संलिख्य बाह्ये षोडशार्द्धं ह्रीँ श्रीँ संलिख्य बाह्ये षोडशार्द्धं ह्रीँ श्रीँ देयम् ।

एतद् यन्त्रत्रयं कुङ्कुमगोरोचनया भूर्जे संलिख्य कुमारीसूत्रेण वेष्ट्य बाहौ धारणीयं बालानां शान्तिरक्षा भवति । सर्वजनप्रियः । दुर्भगस्त्रीणां सौभाग्यं भवति ।

क्षजहसममलवर्यूँ मिदं पिण्डाक्षराणि मध्ये नामगर्भितं संलिख्य कुङ्कुमगोरोचनया भूर्जे लिखेत्, बाहौ धारणीयम्। वश्यो भवति ।

षट्कोणचक्रमध्ये मायानामगर्भितकोणेषु ह्रीँ यं संलिखेत् बाह्ये ह्रीँ ६ देयम् ।

एतद् यन्त्रं कुङ्कुमगोरोचनया सरावसम्पुटमध्ये प्रक्षिप्य स्वीकृता (?) निस्थाप्यं । वश्यो भवति ।

मायाश्रीनामगर्भितो बहिर्मायावेष्टयं, बहिरष्टार्द्धमायादेयम् ।

एतद् यन्त्रं कुङ्कुमगोरोचनादिसुगन्धद्रव्यैर्भूर्जे लिखेत वस्त्रे कण्ठे हबौ धारणीयम् । आयुर्वृद्धि अपमृत्युनाशरक्षा, ज्वरभूतपिशाचस्कन्धअपस्मारग्रहगृहीतस्य बन्दितस्य तत्क्षणादेव शुभं भवति ॥

मायात्रिधावेष्टयं ॐ ह्राँ ह्रीँ ह्रूँ ह्रौँ ह्रः क्षः यः । षट्कोणम् ।

ॐकारं नामविदर्भिते तत्कोणेषु हुँ ॐ २ हुँ ४ बाह्ये ह्रीँ ह्रीँ स्वाहा । एतद् यन्त्रं नागवल्लया पत्रेषु चूर्णेन लिखेत्, सप्ताभिमन्त्रितं एतत् दीयते । वेलाज्वरं नाशयति ।

अथवा—बाह्ये ह्रीँ ॐ।

शुभद्रव्यैर्भूर्जे संलिख्य बाहौ धारणीयं नित्यज्वरादीन् नाशयति ।

मायाबीज नामगर्भितं बहिर्विकारवेष्टितं, बहिरष्टार्द्ध श्रीदेवदत्तह्रीँ ह्रीँ संलिख्य माया त्रिधा वेष्टयम् ॥

एतद् यन्त्रं गोरोचनया भूर्जे विलिखेत् । कण्ठे हस्ते वा बद्ध्वा चोरभयं न भवति । अमोघविद्यां करोति ॥

ह्रीँ संदेव ह्रौँसं नामगर्भितो बहिश्चतुर्दलं ह्रीँ क्षाँ संलिख्यम्। एतद् यन्त्र गोरोचनयाऽनामिकारक्तेन भूर्जे संलिख्य एरण्डनलिकायां प्रक्षिप्यं राज्यमहत्तमप्रभृतीनां वश्यं भवति ।

कौलिकप्रयोगः ।

ह्रीँ ह्रनगरं नृपं क्षोभयति ।

नामगर्भितो बहिः ठकारद्वयं वेष्ट्यं, बाह्ये षोडशार्द्धे मायाबीजं देयम्, बाह्ये मायया त्रिर्वेष्टयम् ।

एतद् यन्त्र कुङ्कुमगोरोचनादि शुभद्रव्यैर्भूर्जे लिखेत्, कुसुम्भरक्त-सूत्रेण वेष्ट्य रक्तकणवीरपुष्पैरष्टोत्तरशतानि जापे क्रियमाणे पुरुषपुरक्षोभो भवति । नामाक्षराणि नित्यं जपेत् नृपं पुरं ग्रामं च क्षोभयति ।

षट्कोणमध्ये यन्नामगर्भितो बाह्ये हम्ल्व्र्यूं सम्पुटस्थं कोणेषु रं देयम् ज्वलनसहितम्।

एतद् यन्त्रं श्मशानाङ्गारकपित्थेन श्मशानकर्पटे लिखेत् । श्मशाने निखनेत् सद्य उच्चाटयन्ति। अनेन मन्त्रेण सप्ताभिमन्त्रितं कृत्वा निखनेत् ।

ॐ ह्रीँ ह्रीँ ह्रूँ ह्रौँ फुट् वः नामग० ह्रौँ नामगर्भितो ठवेष्ठयं बहिरष्टदलं रीँ रँ रोँ रौँ रैँ रः संलिख्य वायसरुधिरेण यस्य नाम लिखेत् स महा-ज्वरेण गृह्यते ।

षट्कोणमध्ये यन्नामगर्भितो कोणेषु यं ६ बाह्ये निरन्तरं संपूर्यते। एतद् यन्त्रं विषेण श्मशानाङ्गारेण कनकरसेन पादपांशुना सह भूर्ये यस्य नाम आलिखेत् प्रेतवने निर्जितम्, ॐकारवेष्टयं बहिरष्टार्द्धे यं देयम्।

एतद् यन्त्रं विषकनकरसेन ध्वजाग्रपटे नाम यस्य लिखित्वा श्मशाने निखनेत् । उच्चाटयति।

यस्य नाम्मध्ये हम्ल्व्र्यूँ सम्पुटस्थं बहिश्चतुर्दलं यं देयम्। एतद् यन्त्रं श्मशानाङ्गारेण निम्बपत्ररसेन ध्वजकर्पटे लिखित्वा ध्वजाग्रे बद्ध्वा उच्चाटयति ।

यकारं नाम आग्नेयमण्डलं कोणेषु रंदेयम् निरन्तरं यः देयम्, स्वस्तिकामाता । भूषितम् ।

इदं यन्त्रं बिभीतकरसेन नामालिख्य खरमूत्रे स्थापिते सद्य उच्चाटयति ।

.देवदत्त ! प्रसीद ह्रींकारं वारत्रयं तु वेष्टयम् ।

एतद् यन्त्रं तालपत्रकंटकेनालिख्य कुम्भमध्ये स्थाप्यम् कुम्भं च सनंद्यते ।

मायाबीजं नाम त्रिविधं नामगर्भितो बहिरग्रार्धे माया देयम्

एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जे संलिख्य बाहौ धारणीयम् । ग्रहभूतपिशाचडाकिनीराक्षसप्रभृतीनां पीडा न भवति ।

मायाबीजं नामगर्भितं षड्विधां प्रमाणं अग्रे वज्राङ्कितं दिक्षु लकारं वौषट् मध्येषु ह्रींकारं प्रत्येकं लिखेत् ।

एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे वा नामालिख्य बाहौ धारणीयम् , भूतप्रेतपिशाचडाकिनीत्रासकंप व्रद्धाणी (?) उपशामयति । सिद्धोपदेशः ।

मायाबीजं नामगर्भितो त्रिविधावेष्ट्य सिकतामयीं प्रतिमां कृत्वा लिखेत् ऊर्ध्वयेत् स्थाप्य मदनकण्टकेन विद्ध्वा सर्वाङ्ग तु त्रिकटुकेन लोहशलाकायां द्वारो बद्ध्वा अङ्गारे स्थापयेत् तथाऽऽकर्षयति ॥

इदानीं प्रहरणमनेकप्रकारं सप्रपञ्चमाह—

कूजत्कोदण्डकाण्डोड्डमरविधुरितक्रूरघोरोपसर्गं
दिव्यं वज्रातपत्रं प्रगुणमणिरणत्किङ्किणीक्वाणरम्यम् ।
भास्वद् वैडूर्यदण्डं मदनविजयिनो बिभ्रती पार्श्वभर्तुः
सा देवी पद्महस्ता विघटयतु महाडामरं मामकीनम् ॥ ३ ॥

विघटयतु—विनाशयतु ! कासौ कर्त्री ?! देवी पद्मावती ! किं तत् कर्मतापन्नम् ? 'महाडामरम्' महाविघ्नम् । कथंभूतम् ? 'मामकीनम्' मदीयम् । कीदृशी देवी ? 'पद्महस्ता' पद्मकरा । किं कुर्वती ? 'बिभ्रती' धारयन्ती । किं कर्मतापन्नम् ? 'वज्रातपत्रम्' वज्रं च आतपत्रं च वज्रात-

पत्रम्। कस्य? पार्श्वभर्तुः। पार्श्वाभिधानयक्षस्य। पुनरपि कं कर्मतापन्नम्? 'कूजत्कोदण्डकाण्डोड्डमरविधुरितक्रूरघोरोपसर्गम्' कोदण्डश्च काण्डश्च कोदण्डकाण्डौ, कूजन्तौ कोदण्डकाण्डौ कूजत्कोदण्डकाण्डौ, तयोरुड्डमरः कूजत्कोदण्डकाण्डोड्डमरः, क्रूरश्च घोरश्च क्रूरघोरौ, क्रूरघोरौ उपसर्गौ यस्यासौ क्रूरघोरोपसर्गः, कूजत्कोदण्डकाण्डोड्डमरेण विधुरितः क्रूरघोरोपसर्गः, कूजत्कोदण्डकाण्डोड्डमरविधुरितक्रूरघोरोपसर्गः, तम् कूजत्कोदण्डकाण्डोड्डमरविधुरितक्रूरघोरोपसर्गम्। गदाधनुर्बाणोड्डमरविधुरितदुष्टरौद्रविघ्नम्। न केवलं, बिभ्राणा किं तत्? 'वज्रातपत्रम्'। कीदृशम्? 'दिव्यम्' प्रधानम्। तथा बिभ्राणा, किं तत्? 'भास्वद्वैडूर्यदण्डम्' भास्वान्—प्रभापुञ्जसहितो वैडूर्यदण्डो येनासौ भास्वद्वैडूर्यदण्डः, तं भास्वद्वैडूर्यदण्डम् देदिप्यमानरत्नविशेषमेतल्लगुडम्। कीदृशम्? 'प्रगुणमणिरणत्किङ्किणीक्वाणरम्यम्' प्रगुणाश्च ते मणयश्च प्रगुणमणयः, रणन्त्यश्च ताः किङ्किण्यश्च रणत्किङ्किण्यः, प्रगुणमणीनां रणत्किङ्किण्यः, प्रगुणमणिरणत्किङ्किण्यः, प्रगुणमणिरणत्किङ्किणीनां क्वाणः प्रगुणमणिरणत्किङ्किणीक्वाणः, तेन रम्यम् प्रगुणमणिरणत्किङ्किणीक्वाणरम्यम्, विशिष्टरत्ननिर्मितक्षुद्रघण्टिकारावरमणीयम्। कीदृशस्य पार्श्वभर्तुः? 'मदनविजयिनः' कामजयिनः।

भावनामाह—ह्रीँ धनु ६ महाधनुं सर्वधनुं देवि! पद्मावति! सर्वेषां दुष्टचौराणां आयुधं बन्ध २ दृष्टिं बन्ध २ मुखस्तम्भ कुरु २ स्वाहा। एषा विद्या मार्गभये सप्तवारानभिमन्त्र्य पन्थे धनुरालिखेत् चोरभयं न भवति॥

ॐ नमो धरणेन्द्राय खड्गविद्याधराय चल २ खड्गं गृह्ण २ स्वाहा। अष्टोत्तरसहस्रं करजापो पुष्पाणि वा दिनत्रय सिद्धिः। खड्गस्तम्भनमन्त्रः।

ॐ कुबेर! अमुकं चोरं गृह्ण २ स्थापितं दर्शय आगच्छ स्वाहा।

भस्मना कटोरकं पूयित्वा पूजयेत्। चोरं गृह्णापयति।

पूर्वसेवा दशसहस्राणि जपेत्। ततः सिद्धो भवति॥

इदानीमनेकप्रकारं शास्त्रं प्रतिपाद्य अधुना देवकुलरक्षास्तम्भनमोहनोच्चाटनविद्वेषणवशीकरणभूतशाकिनीदेवीनामभिधानानि मन्त्राणि विद्याश्च सप्रपञ्चमाह—

भृङ्गी काली कराली परिजनसहिते ! चण्डि ! चामुण्डि ! नित्ये !
क्षाँ क्षीँ क्षूँ क्षौँ क्षणार्द्धक्षतरिपुनिवहे ! ह्रीँ महामन्त्रवश्ये ! ।
ॐ ह्रीँ ह्रीँ श्रूँ भङ्गसङ्गभ्रकुटिपुटतटत्रासितोद्दामदैत्ये !
स्रौँ स्रीँ स्रूँ स्रौँ प्रचण्डे! स्तुतिशतमुखरे ! रक्ष मां देवि ! पद्मे !॥४॥

रक्ष-पालय ! देवि ! पद्मे !-पद्मावति ! । कम् ? 'माम्' स्तुतिकर्तारम्, कीदृशे ? 'स्तुतिशतमुखरे !' स्तुतयः-श्रीपार्श्वनाथसम्बन्धिन्यः तासां शतानि तैर्मुखरा-वाचाटा, तस्याः सम्बोधनं स्तुतिशतमुखरे ! कीदृशे ? 'भृङ्गीकालीकरालीपरिजनसहिते !' भृङ्गी च काली च करालो च भृङ्गीकालीकराली, भृङ्गीकालीकरालीलक्षणः परिजनः तेन सहिता, तस्याः सम्बोधनं भृङ्गीकालीकरालीपरिजनसहिते ! । पुनः कीदृशे ? 'चण्डिचामुण्डिनित्ये !' चण्डश्च चामुण्डिश्च चण्डिचामुण्डी, चण्डिचामुण्डिभ्यां नित्ये ! -युक्ते ! चण्डिचामुण्डियुक्ते ! लोकप्रतीते ! ' पुनः कीदृशे ? क्षाँ च क्षीँ च क्षूँ च क्षौँ च क्षाँक्षीँक्षूँक्षौँ एतैरक्षरैः, क्षणस्यार्द्धं क्षणार्द्धं तेन क्षणार्धेन क्षता-हता रिपूणां निवहाः-समूहा यया सा तस्याः सम्बोधनं क्षाँ क्षीँ क्षूँ क्षौँ क्षणार्द्धक्षतरिपुनिवहे ! । पुनः कीदृशे ? ह्रीँमहामन्त्रवश्ये !' ह्रीँलक्षणो यो महामन्त्रस्तस्माद् वश्या ह्रीँमहामन्त्रवश्या, तस्याः सम्बोधनं ह्रीँमहामन्त्रवश्ये ! नरनारीप्रभृतयः । पुनरपि कीदृशे ? ॐ ह्रीँ ह्रीँ श्रूँभङ्गसङ्गभ्रकुटिपुटतटत्रासितोद्दामदैत्ये ! । ' ॐ श्रूँ श्रूँ श्रूँ लक्षणो श्रूँभङ्गः, ॐ ह्रीँ श्रूँभङ्गस्य सङ्गः, ॐ ह्रीँ श्रूँभङ्गसङ्ग !, ॐ ह्रीँश्रूँभङ्गसङ्गस्य भृकुटिः ॐ ह्रीँ श्रूँभङ्गसङ्गभृकुटिः. ॐ ह्रीँश्रूँभङ्गसङ्गभृकुटेः पुटतटः ॐ ह्रीँ भृभङ्गसङ्गभृकुटिपुटतटः, त्रासिता उद्दामा दैत्या यया सा, तस्याः सम्बोधनं ॐ ह्रीँ श्रूँभङ्गसङ्गभृकुटिपुटतटत्रासितोद्दामदैत्ये ! -विकटकटाक्षोच्चाटितदुष्टासुरे ! । पुनरपि

१ झाँ झीँ झूँ झौँ इति पाठान्तरे।

कीदृशे ? 'स्राँस्रीँस्रूँस्रौँप्रचण्डे !' स्राँ च स्रीँ च[1] ँ च स्रौँ च एतैः प्रचण्डा, सा तथोक्ता, तस्याः सम्बोधनं स्राँ स्रीँ स्रूँ स्रौँ प्रचण्डे !-समर्थे इत्यर्थः ॥

अस्य भावनामाह— इदानीं देवगृहयन्त्रत्रयम्। तद्यथा—

घ्म्ल्व्र्यूँ नामगर्भितस्य वा क्ष्म्ल्व्र्यूँ वाक्म्ल्व्र्यूँ वा संलिख्य बाह्ये ह्म्ल्व्र्यूँ वेष्ट्यम्। पुनरपि बाह्ये षोडश स्वरान् पूरयेत्। बहिरष्टदलेषु क्म्ल्व्र्यूँ क्ल्व्र्यूँ ग्म्ल्व्र्यूँ ज्म्ल्व्र्यूँ घ्म्ल्व्र्यूँ ध्म्ल्व्र्यूँ भ्म्ल्व्र्यूँ म्म्ल्व्र्यूँ सर्वाणि पिण्डाक्षराणि संलिख्य बहिरष्टदलेषु ॐ भृङ्गी नमः, ॐ कालीनमः, ॐ कराली नमः, ॐ चण्डि ! नमः, ॐ जम्भायै नमः, ॐ चामुण्डायै नमः, ॐ अजितायै नमः, बाह्ये मायाबीजं त्रिधावेष्ट्यम्, पृथ्वीमण्डलं चतुष्कोणेषु क्षिकारं वज्राङ्कितं एतम् क्रमेण चक्रं कुङ्कमगोरोचनया कर्पूरादिसुगन्धद्रव्यै-र्भूर्जपत्रे लिखित्वा कुमारीसूत्रेणावेष्ट्य बाहौ धारणीयम् सर्वभयरक्षा भवति ॥

अथवा एतद् यन्त्रं श्रीखण्डकर्पूरादिना संलिख्य श्वेतपुष्पैरष्टोत्तरशतं पूजयेत् षण्मासं यावत्। लक्ष्मीः, सौभाग्यम्, सर्वकार्य सिद्ध्यति ॥

ॐ नमो भगवते पार्श्वनाथाय धरणेन्द्रसहिताय पद्मावतीसहिताय सर्वलोकहृदयानन्दकारिणी भृङ्गीदेवी सर्वसिद्धविद्या बुधाइणी कालिका सर्व-विद्या मन्त्रयन्त्रमुद्रास्फोटनी कराली सर्वपरद्रव्ययोगचूर्णमथनी सर्वविष-प्रमर्दिनी देवि ! अजितायाः स्वकृतं विद्यामन्त्रतन्त्रयोगचूर्णरक्षणा जम्भा परसैन्यमर्दनी नमो दानन्द (?) रोगनाशिनी सकलत्रिभुवनानन्दकारिणी भृङ्गी देवी सर्वसिद्धा विद्या बुधाइणी महामोहिनी। त्रैलोक्यसंहारिणी चामुंडा ॐ नमो भगवती पद्मावती सर्वग्रहनिवारिणी फुट् २ कंप २ शीघ्रं चालय २ बाहुं चालय २ गात्रं चालय २ पादं चालय २ सर्वाङ्गं चालय २ लालय २ धुनं[3] कम्पय २ कम्पावय २ सर्वदुष्टं विनाशय सर्वरोगं विनाशय जयं विजयं अजिते अपराजिते जम्भे मोहे अजिते ह्रीँ २ हनं २ दह २ पच २ धम २ चल २ चालय २ आक-

१-२ झ्राँ झ्रीँझ्रूँझ्रौँ ३ धनु

षय २ आकम्पय २ विकम्पय २ क्ष्म्ल्व्र्यूँ क्षाँ क्षीँ क्षूँ क्षौँ क्षः हुं फुट् ३ निग्रह ताडय २ कमलवर्यूँ क्षाँ क्षीं हूँ क्रौं क्षः २ हः २ सः २ घः २ सः २ भ्म्ल्व्र्यूँ हुं २ घर पूर २ हुं फुट् ३ शङ्खमुद्रया धर म्म्ल्व्र्यूँ पुर हुं फुट् कठोरमुद्रया मारय २ ग्राहय २ क्ष्म्ल्व्र्यूँ हर स्वस्तिकमुद्रा ताडय २ रम्ल्व्र्यूँ प्म्ल्व्र्यूँ २ पर २ प्रज्वल २ प्रज्वालय २ धम २ धूमान्धकारिणी राँ २ प्राँ २ क्लीँ हः वः २ नन्द्यावर्तमुद्रया त्रासय २ भमलवर्यूँ शङ्खचक्रमुद्रया छिन्द २ भिन्द २ म्म्ल्व्र्यूँ गः त्रिशूलमुद्रया छेदय २ भेदय २ ध्म्ल्व्र्यूँ धः मुशलमुद्रया ताडय २ पर-विद्यां छेदय २ परमन्त्रं भेदय २ धमलवर्यूं धम २ बन्धय २ मोचय २ हलमुद्रया बय २ वः २ पं कुरु २ वम्ल्व्र्यूँ प्राँप्रीँप्रूँप्रौँप्रः समुद्रे मज्ज मज्ज छमलवर्यूँ. छ्राँ छ्रीँ छूँ छ्रौं छ्रः मन्त्राणि छेदय छेदय। परसैन्यमुच्चाटय उच्चाटय। पररक्षां क्षः क्षः क्षः हुं ३ फुट्। परसैन्यं विध्वंसय विध्वंसय । मारय मारय। दारय दारय। विदारय विदारय, गतिं स्तम्भय स्तम्भय, भ्म्ल्व्र्यूँ भ्राँ भ्रौँ भ्रूँ भ्रँ भ्रः श्रवय श्रवय, श्रावय श्रावय यम्ल्व्र्यूँ यः प्रेषय २ पं छेदय २ द्वेषय २ विद्वेषय वि-द्वेषय, स्म्ल्व्र्यूँ स्रौँ स्रावय स्रावय मम रक्षां रक्ष रक्ष. परमन्त्रं क्षोभय क्षोभय । छेद छेद, छेदय २, भेद २, भेदय २, सर्वयन्त्र स्फोटय, २ मं २, म्म्ल्व्र्यूँ भ्राँ भ्री भ्रूँ भ्रौँ भ्रः जामय २, स्तम्भय २, दुःखय २, खाय २, ब्म्ल्व्र्यूँ ब्राँ ब्रीँ ब्रूँ ब्रौँ ब्रः हा, ग्रीवां भञ्जय २, मोहय २, त्म्ल्व्र्यूँ त्राँ त्रीँ त्रूँ त्रौँ त्रः त्रासय २, नाशय २, क्षोभय २, सर्वाङ्ग क्षोभय २, चल चल, चालय २, भ्रम २, भ्रामय २, धूनय २, कम्पय २, आकम्पय २, भ्म्ल्व्र्यूँ स्तम्भय २, गमनं स्तम्भय २, सर्वभूतं प्रमर्दय २, सर्वदिशि बन्धय २, सर्वविघ्नं च्छेदय २, निकृन्तय २, सर्वं दुष्टान् निग्राहय २, सर्वयन्त्राणि स्फोटय २, सर्वशृङ्खलान् त्रोटय २, मोटय २, सर्वदुष्टानाकर्षय २, हमलवर्यूँ हाँ ह्रीँ हूँ हौँ हः शान्तिं कुरु

२, तुष्टिं कुरु २, स्वस्ति कुरु २, ॐ आँ क्रौँ ह्रीँ ह्रौँ पद्मावति! आ-गच्छ २, सर्वभयं मम रक्ष २, सर्वसिद्धि कुरु २, सर्वरोगं नाशय २, किन्नर-किंपुरुष-गरुड-गन्धर्व ८ कुष्माण्डिनी-डाकिनी-बन्ध सरय २, सर्वशाकिनी मर्दय २ संयोगिनीगणं चूर्णय २ नृत्य २, गाय २, कल २, किलि २, हिलि २, मिलि २, सुलु २, मुलु २, कुलु २, कुरु २, अस्माकं वरदे! पद्मावति! हन २, दह २, पच २, सुदर्शनचक्रेण छिन्द २, ह्रीँ क्लीँ ह्रीँ ह्राँ ह्रीँ स्रूँ ह्रँ भ्रँ ब्रूँ हुँ प्रीँ प्लीँ श्रीँ त्रीँ त्रीँ ह्राँ २ प्रां २, प्रीँ २, प्रँ २, पद्मावती धरणेन्द्र आज्ञापयति स्वाहा।

एष मन्त्रः पठितसिद्धः, निरन्तरं स्मर्यमाणेन भूतग्रहब्रह्मब्रह्मराक्षस-वेतालप्रभृतिशाकिनीज्वररोगचोरारिमारिनिग्रहव्याघ्रव्यालसर्पवृश्चिकमूषकलतपा-दकण्ठशिरोरोगान् नाशयति।

ॐ भृङ्गिरेटी किरेटी जंभय२ क्लीँ पय २ घृतटकं स्वाहा।

ॐ नमो भगवति काली महाकाली चांडाली अमुकस्य रुधिरं पिब २ सहृदयं भित्त्वा हिलि २ चांडालिनी मातंगिनी स्वाहा।

ॐ नमो भगवती काली महाकाली रुद्रकाली नमोऽस्तु हन २ दह २ छिंद २ छेदय भेदय २, त्रिशूलेन हुंहः २ स्वाहा। विद्यात्रयं सप्त वारानभिमन्त्र्य तद्दीयते शूलं नाशयति।

ॐ नमो भगवती कराली महाकराली। ॐ ह्रीँनमो महामोह २ सम्मोहनीयमहाविद्ये! जम्भय २ स्तंभय २ मोहय २ मूर्छय २ क्लेदय २ आकर्षय २ पातय २ हुं नरेशं मोहनी गेँ द्रीँ त्रीँ ह्रौँ आगच्छ कराली स्वाहा।

एषा विद्या निरन्तरं द्वादश सहस्राणि करजापे सिद्धिर्भवति। मोहनीविद्या।

आँक्रौँह्रीँ अजिते आगच्छ ह्रीँ स्वाहा।

ॐ नमो जम्भे मोहे थंभे थंभिनी स्वाहा।

ॐ नमो भगवति गङ्गादेवी कालिकादेवी आह्वानम्।

ॐ महामोहे स्वाहा।

ॐनमो चंडिकाद्ये योगवाहि योगं प्रवर्तय२ महामोहय योगमुखी योगेश्वरी महायोगे महामाये चारु चारुणी महाहरिहरभूतप्रिये स्वस्वार्थनृणातिसूयं जिह्वाग्रे सर्वलोकानां वश २ कुरु २ दर्शय साधय स्वाहा ।

हस्ताकर्षणी नदीह्रदतडागे वा आकाशे चन्द्रमण्डले वा, खड्गे दीप-शिखायां वा अंगुष्ठे दर्पणे तथा । स्वप्ने खड्गे तथा देवी अवतार्य शुभा-शुभम् । एषा आकर्षणी विद्या ।

ॐ नमो चण्डिकायै यागं वाहि २ इय वा ।

ॐ नमो चण्डवज्रपाणये महायक्षसेनाधिपतये वज्रकोपाय दंष्ट्रोत्कट-भैरवाय । तद्यथा—

ॐ नमो अमृतकुण्डली अमुकं खाहि २ ज्वल २ तृण २ बन्ध २ गंज २ सर्वविघ्नौघविनाशकाय महागणपति ! अमुकस्य जीवहराय स्वाहा । शत्रुप्रेक्षणमन्त्रः ।

ॐ नमो भगवति ! रक्तचामुण्डे ! मत्प्रजापाले कट २ आकर्षय २ ममोपरिचितं भवेत् फलं पुष्पं यस्य हस्ते ददामि स शीघ्रमागच्छतु स्वाहा ।

वश्याकर्षणं वज्रपाणिमन्त्रेण विशेषणं क्रियते तस्य सहस्रजापः कराभ्यां शतपुष्पाणां सिद्धिर्भवति ।

प्रथमं तावत् करन्यासः—

ॐ ठः ठः कराभ्यां साधनीयम् । पश्चात्तेन अंगुलिना प्रत्येकं शोधनं कार्यम् । तदनन्तरं क्षं पादाभ्यां स्वाहा । क्षां हृदये स्वाहा । क्षीँ शीर्षे स्वाहा । क्षं ज्वलितशिखायै स्वाहा वौषट् । क्षौँ कवचाय वषट् । हुं क्षुं बाहुभ्यां स्वाहा । क्षैं स्कन्धाभ्यां स्वाहा । क्षैँ नेत्राय वषट् । क्षौं कर्णाय वषट् । क्षं नेत्राय स्वाहा । क्षः अस्त्राय स्वाहा । हृदु दश दिशानां रक्षां करोति ।

ॐ ह्रीँ बाहुबलि लम्बबाहु क्षाँ क्षीँ क्षूँ क्षौँ क्षेँ क्षं उर्ध्वपुञ्जं कुरु २ शुभाशुभं कथय स्वाहा ।

एतन्मन्त्रं करजापेन दशसहस्राणि सिद्धिर्भवति।

ॐ कटविकट कटे कटि धारिणि ठः ठः परिस्फुटवादिनि ! भञ्ज २ मोहय २ स्तम्भय २ वादिमुखं प्रतिवादिमुखं शल्यमुखं प्रतिशल्यमुखं कीलय २ पूरय २ भवेत् अमुकस्य जयम् ।

एषा विद्या व्यवहारकाले स्मर्यमाणा वादिमुखं स्तम्भयति। विजयं प्रयच्छति। अवश्यं प्लक्षे सदा कण्टकारी वृक्षाणां अष्टसहस्रं जपेत्ततः सिद्धिर्भवति। कण्टकारी महाविद्या।

अधुना नाम त्रिमूर्त्तिमध्ये षट्सु दिक्षु क्रौँ विदिक्षु च क्लीँ बहिर्बहिः पुटं कोष्ठे ऽष्टौ जम्भे मोहे समा लिखेत्। मोहेऽपि एतदष्टाप्रान्त ब्रह्माकारमास्थितः।

ॐ ठँ धात्रे वषट् फुट् बाह्ये क्षितिमण्डलम् । अष्टावर्तलञ्छन चतुःकोणेषु लकारमालिख्य फलके भूर्यपत्रे वा लिखित्वा कुङ्कुमादिभिः पूजयेत् यः सदा यन्त्रं तस्य वश्यं जगत् सर्वम् ।

ॐ ह्रीँ क्लीँ जंभे ! मोहे ! अमुकं वश्य कुरु २ एतद् वश्ययन्त्रम् ॐ रमलवर्यँ ररवर सहाः ह्राँ आँ क्रौँ क्षीँ क्लीँ ब्लूँ ह्राँ ह्रीँ पद्ममालिनि ! ज्वल २ प्रज्वल २ हन २ दह २ पच २ इद भूतं निर्घाटय २ धूम्रधूमान्धकारिणि ! ज्वलनशिखे ! फुट्ट २ यः ३ समीहितार्थान् हितां ज्वालामालिनी आज्ञापयति स्वाहा।

मन्त्रेण वेष्टयेत् इदं पिण्डं ललाटे व्याधि दग्नि(?)भूतं सर्वाङ्गे भूतं ज्वरं ग्रहदोषशाकिनीप्रभृतीन् नाशयति ।

ॐ नमो भगवते ! पशुपतये नमो नमोऽधिपतये नमो रुद्राय ध्वंस २ खड्गरावण ! चल २ विहर २ सर २ नृप २ स्फोटय २ श्मशानभस्मनार्चितशरीराय घंटाकपालमालाधराय व्याघ्रचर्मपरिधानाय शशाङ्काङ्कितशेखराय कृष्णसर्पयज्ञोपवीताय चल २ चला चल २ अनिवर्तिकपिलिनि ! हन २ भूतप्रेतं त्रासय २ ह्रीँ मण्डलमध्ये कट २ वश्यं कुरु२ ममानम्न(?) प्रवेशय

२ आवह प्रचण्ड धारासि! देवि! रुद्रो आपेक्षय महाविद्या रुद्रो आज्ञापयति ठः ठः ठः स्वाहा। भूतमन्त्रः।

इदानीं योगिनीचक्रानन्तरं कन्दर्पचक्रं सप्रपञ्चमाह—

चञ्चत्काञ्चीकलापे! स्तनतटविलुठत्तारहारावलीके!

प्रोत्फुल्लत्पारिजातद्रुमकुसुममहामञ्जरीपूज्यपादे!।

ह्रां ह्रीं क्लीं ब्लूँ समेतैर्भुवनवशकरी क्षोभिणि द्राविणीत्वं

आँ ईं ओं पद्महस्ते! कुरु कुरु घटने रक्ष मां देवि! पद्मे!॥५॥

रक्ष—पालय, कम्? मां—स्तुतिकर्तारम्, कीदृशी? 'चञ्चत्काञ्चीकलापे!' चञ्चत्—देदीप्यमानः काञ्च्याः कलापः काञ्चीकलापो—मेखलादाम यस्याः सा तस्याः सम्बोधनम् 'चञ्चत्काञ्चीकलापे!' पुनरपि कीदृशे? 'स्तनतटविलुटत्तारहारावलीके!' स्तनतटे विलुठन्ती तारा—समुज्ज्वला हारावलीपङ्क्तिर्यस्याः सा तस्याः सम्बोधनम् स्तनतटविलुठत्तारहारावलीके!। पुनरपि कीदृशे? 'प्रोत्फुल्लत्पारिजातद्रुमकुसुममहामञ्जरीपूज्यपादे!।' प्रोत्फुल्लद्भिः—विकसद्भिः पारिजातद्रुमाणां—देवतरूणां कुसुमैः—पुष्पैः उपलक्षिताभिः महामञ्जरीभिः पूज्यौ पादौ यस्याः सा तस्याः सम्बोधनं प्रोत्फुल्लत्पारिजातद्रुमकुसुममहामञ्जरीपूज्यपादे!। पुनरपि कीदृशे? 'भुवनवशकरी क्षोभिणी द्राविणी त्वम्' त्रैलोक्यवश्यताविधायिनी, चालयन्ती—अङ्गं मोहयन्ती द्रावयन्ती नपयन्ती (?)।

पुनरपि कीदृशे? 'ह्रां ह्रीं ह्रीं ह्रः समेतैः ह्रां च ह्रीं च क्लीं च ब्लूँ च एतैः समेतानि तैः ह्रां ह्रूँ क्लीं ब्लूँ समेतैः। एतावत्येतानि बीजाक्षराणि। भावनामाह—

क्लीं प्लीं नामगर्भितस्य बाह्येषु कोणेषु ह्रां ह्रीं क्लीं ब्लूँ सः दातव्यम्।

अथवा द्वितीयः प्रकारः—आग्नेयमण्डले ऐङ्कारं नामगर्भितस्य लक्षकोणेषु रेफ स्वस्तिका ज्वाला दातव्या। बहिः षोडशस्वरैर्वेष्टनीयम्, बहिरष्टदलेषु कामिनीरञ्जिनी स्वाहा। ॐ ह्रीं आँ क्रों क्षीं ह्रीं क्लीं ब्लूँ

ह्राँ ह्रीँ देवदत्ताभगं द्रावय २ मम वश्यमानय २ पद्मावती आज्ञापयति स्वाहा ।

अस्य वामपादपांशुर्गृहीतव्या पुष्पं कामक्रे मासेन दक्षिणे निजे करे लिखेत् वामकरे पीडयेत् करं निभवति ।

अधुना—

ॐ चले चलचित्ते चपले मातङ्गी रेतो मुञ्च २ स्वाहा ।

ॐ नमो कामदेवाय महानुभावाय कामसिरि असुरि २ स्वाहा । अनेन मन्त्रेण रक्तकणवोरं अष्टोत्तरवारमभिमन्त्रितं कृत्वा ताम्बूलं दन्तकाष्ठं पुष्पं फलं वा २१ वारं परिजप्य यस्मै दीयते स वश्यो भवति । अनेन मन्त्रेण रक्तकणवीरं अष्टोत्तरशतं अभिमन्त्रितं कृत्वा स्त्रियः अग्रतो भ्रामयेत् सा क्षरति ।

ॐ नमो भगमालिनि भगावहे चल २ सर २ ।

अनेन मन्त्रेण ७ वारानभिमन्त्र्य वामहस्तं स्त्रिया भगस्योपरि दद्यात् सा क्षरति ।

पूर्वसेवा ८ सहस्राणि जपेत् । तद्दशांशेनाशोककुसुमैर्होमः। पुनः कीदृशीं ? ॐा ईँ ओँ पद्महस्ते ! ' आं च इं च ओं च ते तथोक्तानि ते नाम बीजाक्षराणि । भावनामाह—हुंकारं नामगर्भितस्य बाह्ये क्षकारं दातव्यं बाह्ये वकारं वेष्ट्य बाह्ये षोडश स्वराणि वेष्ट्य बाह्ये षोडशदलेषु क्षाँ जँ ईँ त्राँ रँ कँा अँा खँा लँ चँा ॐ ओँ सँा क्रीँ सीयाः संलिख्य दलाग्रे ॐ राँ पूरयेत् । मायाबीजं त्रिगुणं वेष्ट्य बहिर्भुजङ्गद्वयं मस्तके गंधः हृदये इं वां संलिख्य एतद् यन्त्रं कुङ्कुमादिसुगन्धद्रव्यैर्भूर्ये संलिख्य बाहौ धारणीयं सर्वभयरक्षा भवति ॥ पद्मसदृशौ हस्तौ यस्याः सा, तस्याः सम्बोधनं ' पद्महस्ते ! ' कमलपाणे ! कुरु २ नीलफलकं सर्वम् । शेषं सुगमम् ।

विषतत्त्वं—स्मरविषयं प्रतिपाद्य अधुना विषहरण सौभाग्यं अपुत्रायाः पुत्रजन्मसंसूचकं यन्त्रमाह—

लीलाव्यालोलनीलोत्पलदलनयने ! प्रज्वलद्वाडवाग्नि-
त्रुटयज्ज्वालास्फुलिङ्गस्फुरदरुणकणोदग्रवज्राग्रहस्ते ! ।
ह्राँ ह्रीँ ह्रूँ ह्रौँ हरन्ती हरहरहरहुंकारभीमैकनादे !
पद्मे ! पद्मासनस्थे ! अपनय दुरितं देवि ! देवेन्द्रवन्द्ये ! ॥६॥

व्यपनय-स्फेटय, किं तत्? 'दुरितं' विघ्नम्। कीदृशे? 'लीलाव्यालोलनीलोत्पलदलनयने !' लीलया व्यालोलं लीलाव्यालोलम्, नीलोत्पलस्य दलं नीलोत्पलदलम्, लीलाव्यालोलं च तत् नीलोत्पलदलं च लीलाव्यालोलनीलोत्पलदलं तत्सदृशे नयने-नेत्रे यस्याः सा, तस्याः सम्बोधनं लीलाव्यालोलनीलोत्पलदलनयने ! क्रीडाशोभमानेन्दीवरनयने !। पुनः कीदृशे? 'प्रज्वलद्वाडवाग्नित्रुटयज्ज्वालास्फुलिङ्गस्फुरदरुणकणोदग्रवज्राग्रहस्ते !' वाडवस्य अग्निः वाडवाग्निः प्रज्वलंश्चासौ वाडवाग्निश्च प्रज्वलद्वाडवाग्निः त्रुटयन्ती चासौ ज्वाला च त्रुट्यज्ज्वाला, प्रज्वलद्वाडवाग्नेस्त्रुट्यज्ज्वाला प्रज्वलद्वाडवाग्नित्रुट्यज्ज्वाला, तस्याः स्फुलिङ्गाः तेषां स्फुरन्तश्च च अरुणकणाश्च तैरुदग्रं-प्रचण्डं यद् वज्रं तदग्रं हस्ते यस्याः सा प्रज्वलद्वाडवाग्नित्रुट्यज्ज्वालास्फुलिङ्गस्फुरदरुणकणोदग्रवज्राग्रहस्ता, तस्याः सम्बोधनं प्रज्वलद्वाडवाग्नित्रुट्यज्ज्वालास्फुलिङ्गस्फुरदरुणकणोदग्रवज्राग्रहस्ते ! जाज्वल्यमानवाडवज्वलनज्वालाकलापसमानशतकोटिविभूषितहस्ताग्रे !। पुनरपि कीदृशे? 'ह्राँ ह्रीँ ह्रूँ ह्रौँ हरन्ती हरहरहरहुंकारभीमैकनादे !।' ह्राँ च ह्रीँ च ह्रौँ च हरन्ती च हरहर हरहुंकारं च ह्राँ ह्रीँ ह्रूँ ह्रौँ हरन्ती हरहरहरहुंकाराः तैः भीमो-भीषणं एकः—अद्वितीयो नादो यस्याः सा, सम्बोधनं ह्राँ०। सर्वाण्येतान्यक्षराणि मालामन्त्रयन्त्राणि सूचयन्ति। तद्यथा—ॐ नमो भगवति ! अवलोकितपद्मिनि ! ह्राँ ह्रूँ ह्रीँ ह्रूँ ह्रः वराङ्गिनि ! चिन्तितपदार्थसाधिनि ! दुष्टलोकोच्चाटिनि ! सर्वभूतवशङ्करी आँ क्रोँ ह्रीँ पद्मावति ! स्वाहा।

ॐ नमो भगवति ! पद्मावति ! सप्तफणाविभूषिता चतुर्दशदंष्ट्राकराला

च नर २ रम २ फुरु २ एकाह्निकं द्वयाह्निकं त्र्याह्निकं चातुर्थिकं ज्वरं अर्धमासिकं संवत्सरज्वरं पिशाचज्वरं वेलाज्वरं मूर्तज्वरं सर्वज्वरं विषमज्वरं प्रेतज्वरं भूतज्वरं ग्रहज्वरं राक्षसग्रहज्वरं महाज्वरं रेवतीज्वरं ग्रहज्वरं दुर्गाग्रहज्वरं किङ्किणीग्रहज्वरं त्रासय २ नाशय २ छेदय २ भेदय २ हन २ दह २ पच २ क्षोभय २ पार्श्वचन्द्र आज्ञापयति ।

ॐ ह्लीँ ह्रीँ पद्मावति ! आगच्छ २ ह्लीँ हूँ स्वाहा ।

सर्वभयरक्षिणीविद्यामन्त्रद्वयमेतत् । अभ्यस्यते ज्वरनाशो भवति । हरन्ती—नाशयन्ती । अस्य भावना—

ऐँ ह्रीँ क्लीँ ब्लूँ आँ क्रोँ श्रीँ ब्लाँ म्लोँ ग्लेँ सर्वाङ्गसुन्दरी क्षोभि २ क्षोभय २ सर्वाङ्गं त्रासय २ हुं फट् स्वाहा ।

एषा विद्या निरन्तरं ध्यायमाना दुष्टरोगं नाशयति ।

हरहर इति साधना—

माया बीजं नामगर्भितस्य बहिश्चतुर्दलेषु पार्श्वनाथं संलिख्य वाह्ये हर २ वेष्टयं बहिः ह हा हि ही हु हू हे है हो हौ हं हः, बहिः ककारादिक्षकारपर्यन्ता मातृका लिख्यते, बहिर्भुजगपदा दातव्याः । एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जे संलिख्य कुमारीसूत्रेण वेष्टव्यं निजभुजे धारयेत यः पुरुषः स स्वजनवल्लभो । भवति । श्रीमान् ।

अपुत्रा लभते पुत्रं निन्द्वो जीवितप्रजाः ।
यन्त्रधारणमात्रेण दुर्भगा सुभगा भवेत् ॥

प्रभवति विषं न भूतं सन्निहितं पेटकाश्च भूताश्च ।
संस्मरणादस्य सत्यं पापमपि नाशमुपयाति ॥

द्वितीयम्—

हुंकारं नामगर्भितस्य बहिः क्षुंकारं वेष्टयं बाह्ये षोडशदले रमध्येषु स्वरा दातव्याः । बाह्ये षोडशपत्रेषु ऐँ ह्राँ ह्राँ ह्रौँ क्लीँ क्षः प्लूँ प्लीँ ह्राँ द्रीँ हूँ ह्रौँ हः ठः आलिख्य बाह्यदलाग्रे ॐकारं ह्रींकारं दातव्यम् ।

एतद् यन्त्रं कुङ्कुमगोरोचनया भूर्जपत्रे संलिख्य कुमारीसूत्रेण वेष्ट्य बाहौ धारणीयम्, सर्पविष–ज्वलन–दाघज्वर–भूतशाकिनी प्रभृतिरक्षा भवति हुङ्कारम्। यन्त्रमुच्यते। 'भीमैकनादे!' महाघोरे! प्रतीतनादे! प्रल्हादे(?) पुनः कीदृशी? पद्मे!–पद्मावती देवी इति सम्बन्धः। पुनरपि कीदृशे? 'पद्मासनस्थे!' पद्मे–आसने तिष्ठति या सा पद्मासनस्था, तस्याः सम्बोधनं पद्मासनस्थे। ? पङ्केरुहासनस्थे!। पुनरपि कीदृशे? देवेन्द्रवन्द्ये!' देवेन्द्रैर्वन्द्या देवेन्द्रवन्द्या, तस्याः सम्बोधनं देवेन्द्रवन्द्ये!"

इदानीं शान्तिक–पौष्टिक–तुष्टिक–यन्त्रं विषहरयन्त्रं मन्त्रं सप्रपञ्चमाह—

कोपं वं झं सहंसः कुवलयकलितोद्दामलीलाप्रबन्धे!
ह्राँ ह्रीँ ह्रूँः पक्षबीजैः शशिकरधवले! प्रक्षरत्क्षीरगौरे!।
व्यालव्याबद्धकूटे! प्रबलबलमहाकालकूटं हरन्ती
हाहा हूंकारनादे! कृतकरमुकुलं रक्ष मां देवि! पद्मे!॥

रक्ष—पालय। कम्? माम्। कासौ कर्त्री? पद्मावती। कीदृशम्? 'कृतकरमुकुलम्' विहितपाणिकमलमीलनम्। कीदृशम्? 'कां पं वं झं सहंसः' कोपं च वं च झं च कोपं वंझं सह हंसेन वर्तते यः सहंसः। तत्राद्यपदस्य भावनामाह—

ॐ को पँ वँ झँ हंसः। वस मन्त्रः।

ॐ क्षाँ स हूँ ह्रीँ स्वीं सनौँ हँसः चक्रमुद्रया प्रयुञ्जीत। पुनः कथम्भूते? 'कुवलयकलितोद्दामलीलाप्रबन्धे!' कुवलयं–पृथ्वीवलयं, अथवा कुवलयैः–नीलोत्पलैः कृत्वा कलितः उद्दामः–स्फारो लीलाप्रबन्धः–क्रीडासमूहो यस्याः सा, तस्याः सम्बोधनं 'कुवलयकलितोद्दामलीलाप्रबन्धे!'

तस्या मन्त्रः—ॐ कुकुवलयहसः। कुसुममन्त्रः। पुनरपि कथम्भूते? 'शशिकरधवले!' शशिनः कराः शशिकराः तद्वत् धवला शशिकरधवला, तस्याः सम्बोधनं शशिकरधवले! शुभ्रांशुकिरणावदाते!। ह्राँ कृत्वा ह्राँ ह्रौं ह्रः पक्षिबीजैः ह्राँ च ह्रीँ च ह्रँ पक्षिश्च ह्राँ ह्रीँ ह्रः पक्षयः

एतदेव बीजं, ह्राँ ह्रीँ ह्रः पक्षिबीजं तैः ह्राँ ह्रीँ ह्रः पक्षिबीजैः।

अस्य पदस्योपलक्षणत्वाच्चक्रं सूचयति। तद्यथा—

ल वंहुः पाक्षिनामगर्भितस्य वेष्ट्यम्, वहिः षोडशदलमध्ये अकारादिक्षकारपर्यन्तानि संलिख्य बहिः ठकारवेष्ट्यम्, बहिर्द्वादशदलेषु ह हा हि ही हु हू हे है हो हौ हं हः, बहिर्हकारद्वयं संपुटस्थम्। बहिः झ्राँ क्ष्वीँ हंसः वेष्टयेत्। पुनस्तद्बाह्य एकारद्वयं सम्पुटस्थम्। पुनर्बाह्ये मायाबीजं त्रिगुणं वेष्ट्यम्। मन्त्रमिदम्। एतद् वक्ष्यमाणयन्त्रद्वयम् पूर्वोक्तस्यास्यैव यन्त्रस्य। तद्यथा—

क्रां खा गाँ घाँ चाँ छाँ ह्रीँ क्लीं नमः। गरुडध्वजो नाम मन्त्रः। करजापसहस्रेण सिद्धिर्भवति।

क्षिप ॐ स्वाहा। नीरमभिमन्त्रयेत् २१ वारं, पश्चात् तत् पातव्यम्, अजीर्णविषं नाशयति।

ह हा हि ही हु हू हे है हो हौ हं हः। अनेन मन्त्रेण उदकमभिमन्त्र्य श्रोत्राणि ताडयेत्। अभिषिञ्चयेत् निर्विषो भवति।

र्ह्रं वं ह्रः, पक्षि वः स्वीं, हंसमन्त्रमाराधयेत् श्वेताक्षतैः श्वेतपुष्पैर्वा श्रीखण्डादिभिः सुगन्धद्रव्यैः शरावसम्पुटे संलिख्य शान्ति–तुष्टि–पुष्टिर्भवति। एतज्जलं पूर्णे घटे क्षिपेत् शीतज्वरं दाघज्वरं नाशयति। ग्रहपीडां निवारयति। सर्वदोषान् प्रभवति। दृष्टप्रत्ययमिदम्।

पुनरपि कीदृशे ? 'प्रक्षरत्क्षीरगौरे !' प्रक्षरच्च तत् क्षीरं च तद्वत् गौरा तस्याः सम्बोधनं प्रक्षरत्क्षीरगौरे! प्रक्षरद्दुग्धपाण्डुरे!।

ॐकारैर्विमुक्तिकारैः सरहंसः अमृतहंसः।

ॐ कोपं वं झं हंसः ठः स्वाहा। सर्वविषोज्झनमन्त्रः।

पुनरपि कीदृशे ? 'व्यालव्याबद्धकूटे !' दन्दशूकबद्धाम्रेडके!।

ॐ कुरु २ कुलेण उपरि मेरु तलि बिंब उपड्ड मंत्र गरुडाहि

हाहंसः पक्षि यः ३ । कोपं वं हं सहंसः । ॐ स्वाहा हा हा हंसः पक्षिः पक्षि मन्त्रः

तथा किं कुर्वती ? हरन्ती । कम् ? 'प्रबलबलमहाकालकूटं' प्रबलं बलं यस्यासौ, प्रबलबलश्चासौ महाकालकूटश्च तत्। 'हा हा हूंकारनादे !' हाहा हुंकाररूपो नादो यस्याः सा, तस्याः सम्बोधनं हाहा हुंकारनादे !। हा हा इति दैत्यनाशः । हुंकारशब्देन परविद्याच्छेदः सूच्यते । नादे हाँ महाकूटमित्यस्य भावनामाह—

सं स्वीँ क्ष्वीँ हंसः पक्षिपः प्लवय प्लावय २ विषं हर स्वाहा ।

ॠंकारं नाम गर्भितो नंकारं वेष्ट्यम् । पुनरपि बाह्ये क्षकारं वेष्टयं ठकारं वेष्ट्यम्। पुनरपि बाह्ये वलयारमध्ये षोडशस्वरैर्वेष्टव्यम्।

वलयारबाह्ये द्वादशदलेषु मध्ये ह हा हि ही हु हू हे है हो हौ हं हः दातव्यम् । बाह्ये हकारसम्पुटं दातव्यम्। तस्य बाह्ये वलयारमध्ये वं झं हंसः पूरयेत् वंकारद्वयसम्पुटस्थम् ।

ॐ नमो भगवती पद्मावती ॐ स्वाहा।

पक्षिहंसः यः विषं हरय २ प्लावय २ विषं हर २ स्वाहा।

एतन्मन्त्रं निरन्तरं कर्णजापेन विषं नाशयति।

हकारं नामगर्भितस्य बाह्ये हंसः। वारत्रयं वेष्ट्य हा मस्तके, हा अष्टाङ्गन्यासः ४ तथा बाह्ये हंसः हंस वार ३ लिखेत्।

स्वकीयं मण्डलं स्थाप्यम्। यथा—

ॐ क्षाँ साँ हूँ क्षीँ क्ष्वीँ हसौँ हंसः। विषहरणमन्त्रः।

हुंकारं नामगर्भितं, ॐकारं सम्पुटस्थम्, वज्राष्टभिन्नं वज्रम्।

ॐकार लिखेत्। वकारपर्यन्ते लकारमालिखेत्। सर्वेषामपि।

अथवा–हुंकारं नामगर्भितस्य बाह्ये ॐकारद्वयं सम्पुटस्थं तस्य बाह्ये स्वरा वेष्टयाः। दिशि विदिशि वज्राष्टभिन्नं वज्राग्रे।

ॐछकारं मध्ये सकारं सर्वत्र वज्रेषु द्रष्टव्यम् । तद्यन्त्रं शुभद्रव्यैः

कांश्यपात्रे दर्भाग्रेण यन्त्रमालिखेत्। यथा श्वेतपुष्पैरष्टोत्तरशतप्रमाणं जापः क्रियतेऽनेन परविद्या-मन्त्र-यन्त्र-रक्षा छेदनं करोति।

अधुना दार्वोक्तव्यम् (?)। कंसपात्रेषु सुगन्धद्रव्यैः हुंकारं नामगर्भितस्य बाह्ये षोडशस्वरावेष्टितस्य बाह्ये ॐकारं वेष्टय बहिः ॐ कलिकुण्ड-स्वाहा लिखेत्। तस्यैव यन्त्रस्य श्वेतपुष्पैरष्टोत्तरसहस्रप्रमाणैरक्षतैर्बलिधूपदीपप्रभृतिभिः गृहीतस्य पूर्वोक्तकंसपात्रं पानीयेन प्रक्षालयेत् तत् पानीयं च भूतादिगृहीतं रोगाक्रान्तं चुलुकत्रिकं पाययेत। सर्वग्रहरोगनिर्मुक्तो भवित। इदानीं परविद्याच्छेदानन्तरं चतुःप्रकारं देवकुलमाह—

प्रातर्बालार्करश्मिच्छुरितघनमहासान्द्रसिन्दूरधूली-
सन्ध्यारागारुणाङ्गी त्रिदशवरवधूवन्द्यपादारविन्दे!।
चञ्चच्चण्डासिधाराप्रहतरिपुकुले! कुण्डलोद्घृष्टगल्ले!
श्राँ श्री श्रूँ श्रौं स्मरन्ती मदगजगमने! रक्ष मां देवि! पद्मे!॥१

रक्ष—पालय। देवि! पद्मावति!। कम्? माम्। कीदृशे?

'प्रातर्बालार्करश्मिच्छुरितघनमहासान्द्रसिन्दूरधूलीसन्ध्यारागारुणाङ्गी' प्रातः—प्रभाते बालो-नवोद्गतो यः अर्कस्तस्य रश्मयः-किरणाः तेषां छुरितं प्रातर्बालार्करश्मिच्छुरितम्, घनो-बहुः, महासान्द्रो निबिडो यः सिन्दूरस्तस्य-धूली घनमहासान्द्रसिन्दुरधूली, सन्ध्याया रागः सन्ध्यारागः, प्रातर्बालार्करश्मयश्च घनमहासान्द्रसिन्दूरधूली च सन्ध्यारागश्च ते प्रातर्बालार्करश्मिच्छुरितघनमहासान्द्रसिन्दूरधूलीसन्ध्यारागाः तद्वत् अरुणं अङ्गं यस्याः सा प्रातर्बालार्करश्मिच्छुरितघनमहासान्द्रसिन्दूरधूलीसिन्ध्यारागारुणाङ्गी। पुनरपि कीदृशे? 'त्रिदशवरवधूवन्द्यपादारविन्दे?' वराश्च ता वध्वश्च वरवध्वः, त्रिदशानां वरवध्वः त्रिदशवरवध्वः ताभिः अभिवन्द्ये पादारविन्दे यस्याः सा तस्याः सम्बोधनं त्रिदशवरवधूवन्द्यपादारविन्दे!—अमरवराङ्गनानमस्यमानचरणपङ्केरुहे!। पुनरपि कीदृशे? 'चञ्चच्चण्डासिधाराप्रहतरिपु-

कुले !' चण्डा चासौ असिधारा च चण्डासिधारा, चञ्चन्ती चासौ चण्डासिधारा च तया प्रहतं रिपुकुलं यया सा चञ्चच्चण्डासिधाराप्रहतरिपुकुला, तस्याः सम्बोधनं चञ्चच्चण्डासिधाराप्रहतरिपुकुले !–देदीप्यमानप्रचण्डमण्डलाग्रधाराव्यापादितशत्रुसमूहे !। पुनरपि कीदृशे ? 'कुण्डलोद्घृष्टगल्ले !' कुण्डलाभ्यां उद्घृष्टौ गल्लौ—गण्डौ यस्याः सा, तस्याः सम्बोधनं कुण्डलोद्घृष्टगल्ले !–कर्णवेष्टकोद्घृष्यमाणगण्डस्थले ! । पुनरपि कीदृशे ? 'श्राँ श्रीँ श्रूँ श्रौँ स्मरन्ती' श्राँ च श्रीँ च श्रूँ च श्रौँ च तानि स्मरन्ती–ध्यायन्ती। एतेषां पञ्चाक्षराणां यन्त्रं दर्शयन्नाह—

क्मलवर्यूँ नामगर्भितस्य बाह्ये ल्मलवर्यूँ वेष्टयम्, बाह्ये षोडश स्वरान् लिखेत् बहिः अष्टदलेषु क च छ ज ढ र भ स्म्लवर्यूँ पिण्डाक्षराणि दातव्यानि । बहिरष्टदलेषु ब्रह्माणी, कुमारी, इन्द्राणी, माहेश्वरी, वाराही, वैष्णवी, चामुण्डा, गान्धारी । ॐकारपूर्वं मन्त्रमालिख्य तद्बाह्ये स्मलवर्यूँ ह्रा ह्रँ ह्रा आँ क्रौँ क्लीँ द्राँ द्रीँ पद्मावती श्राँ श्रीँ श्रूँ श्रोँ श्रौँ श्रः हुं फट् घीँ स्वाहा ।

एषा विद्या अष्टोत्तरसहस्रप्रमाणं करजापेन क्रियमाणेन दश दिनपर्यन्ते सर्वकार्याणि सिध्यन्ति । पुनरपि कीदृशे ? 'मदगजगमने ! ' मदेनोपलक्षितो गजो मदगजः तद्वद् गमनं यस्याः सा, तस्याः सम्बोधनं मदगजगमने ! ॥

साम्प्रतमुपसंहरन्नाह—

दिव्यं स्तोत्रं पवित्रं पटुतरपठतां भक्तिपूर्वं त्रिसन्ध्यं
लक्ष्मीसौभाग्यरूपं दलितकलिमलं मङ्गलं मङ्गलनाम् ।
पूज्यं कल्याणमान्यं जनयति सततं पार्श्वनाथप्रसादात्–
देवी पद्मावतीतः प्रहसितवदना या स्तुता दानवेन्द्रैः ॥

जनयति—उत्पादयति । कासौ कर्त्री ? इयं देवी पद्मावती । कीदृशा ? 'प्रहसितवदना' प्रहृष्टानना । कस्मात् ! 'पार्श्वनाथप्रसादात्' । या स्तुता ।

कैः ! 'दानवेन्द्रैः' दैत्यपुरुहूतैः । किं जनयति ? ' लक्ष्मीसौभाग्यरूपम् लक्ष्मीश्च सौभाग्यं च रूपं च लक्ष्मीसौभाग्यरूपम्। कीदृशं तत् ? ' दलितकलिमलम्' निर्दलितपापमलम् । तथा मङ्गलं जनयति। केषाम् ? 'मङ्गलानाम्' निःश्रेयसानामपि मध्ये विशिष्टं निःश्रेयसं जनयतीत्यर्थः ।

पुनरपि कथम्भूतम् ? 'पूज्यम्' । पुनरपि कीदृशम् ? 'कल्याणमान्यम्' । कल्याणैर्मान्यं कल्याणमान्यम्–कुशलयुक्तम् । कथम् ? 'सततम्' निरन्तरम्। केषाम्? ' पटुतरपठताम्' स्पष्टतरं भणताम्। कथम् 'भक्तिपूर्वं' भक्तिपुरस्सरम। न केवलं भक्तिपूर्वं। त्रिसन्ध्यं च । किं कर्मतापन्नम् ? 'स्तोत्रम्' स्तवनम्। कीदृशम् ? 'दिव्यम्' प्रधानम् । पुनरपि कीदृशम् ? 'पवित्रम्' । अस्यां **पार्श्वदेव**विरचितायां पद्मावत्यष्टकवृत्तौ यत् किमप्यवद्यं पतितं तत्सर्वं क्षन्तव्यं देवताभिरिति ॥

वर्षाणां द्वादशभिः शतैर्गतैस्त्र्युत्तरैरियं वृत्तिः ।
वैशाखे सूर्यदिने समर्थिता शुक्लपञ्चम्याम् ॥

अस्या वृत्त्या अक्षरगणनातः पञ्चशतानि जातानि ।
द्वाविंशदक्षराणि च सदनुष्टुप्छन्दसां प्रायः ॥

---

ङपरिशिष्टम्

श्रीमुनिचन्द्रसूरिप्रणीतं

प्रबन्धगतं

# श्रीशङ्खेश्वरपार्श्वनाथस्तवनम्।

समस्तकल्याणनिधानकोशं वामाङ्गकुक्ष्येकमृणालहंसम्।
अलङ्कृतेक्ष्वाकुविशालवंशं वन्दे सदा शङ्खपुरावतंसम् ॥१॥
आराधितः श्रीऋषभस्य काले विद्याधरेन्द्रेण नमीश्वरेण।
पूर्वं हि वैताढ्यगिरौ जिनं तं वन्दे सदा शङ्खपुरावतंसम् ॥२॥
यः पूजितः पन्नगनायकेन पातालभूमौ भवनाधिपेन।
कालं कियन्तं जिननायकं तं वन्दे सदा शङ्खपुरावतंसम् ॥३॥
यदा जरासन्धजयोद्यतेन कृष्णेन नेमीश्वरशासितेन।
पातालतो बिम्बमिदं तदानीमानीय संस्थापितमेव तीर्थम्। ॥४॥
ज्वरार्तभूतं स्वबलं विलोक्य यत्स्नात्रपीयूषजलेन सिक्तम्।
सज्जीकृतं तत्क्षणमेव सर्वं वन्दे सदा शङ्खपुरावतंसम् ॥ ५ ॥
पञ्चाशदादौ किल पञ्चयुक्ते एकादशे वर्षशते व्यतीते।
निवेशितः **सज्जन**श्रेष्ठिनायं वन्दे सदा शङ्खपुरावतंसम् ॥ ६ ॥
काले कलौ कामगवी प्रणष्टा चिन्तामणिः कल्पतरुश्च नष्टः।
धत्ते ह्यसौ तत्प्रतिहस्तकत्वं, वन्दे सदा शङ्खपुरावतंसम् ॥ ७ ॥
प्रभूतरोगेण विनष्टदेह आराध्य यं **दुर्जनशैल्यदेवः**।
चकार देहं मदनस्य तुल्यं वन्दे सदा शङ्खपुरावतंसम् ॥ ८ ॥

राज्यार्थिनां राज्यसुखप्रदाता सुतार्थिनां सन्ततिदायको यः ।
नेत्रार्थिनां लोचनदोऽस्ति नित्यं वन्दे सदा शङ्खपुरावतंसम् ॥९॥

इति स्तुतः श्रीमुनिचन्द्रसूरिणा
कृपाकरः शङ्खपुरावतार ! ।
प्रबन्धकादौ प्रणतासुभाजां
प्रयच्छ नित्यं निजपादसेवाम् ॥ १० ॥

---

चपरिशिष्टम्

श्रीनयचन्द्रसूरिविरचितं

## श्रीस्तम्भनपार्श्वनाथस्तवनम् ।

सेढीतटस्तम्भनकप्रतिष्ठः श्रीपार्श्वनाथः सुगुणैर्गरिष्ठः ।
पायादपायादलिनीलकायः सिद्धयङ्गनासङ्घटनाभ्युपायः ॥ १ ॥
तस्याहमुच्चैर्हरिशब्दवाच्यैः स्तोत्रं नवं षोडशभिर्विधास्ये ।
वाचां च तत्र प्रथमं निधास्ये यथाक्रमं तांश्च तथाभिधास्ये ॥२॥
हयवायुजनार्दनसिंहविधूरगभेककपीन्द्रशुकार्कयमैः ।
घृणिपिङ्गभवाम्बुधिनीलगुणैर्हरिशब्दभवैः प्रणवीमि जिनम् ॥३॥
जय मुक्तिमहापुरमार्गहरे ! जय विघ्नघटोघननाशहरे ! ।
जय मन्मथकैटभघातहरे ! जय मोहमतङ्गजभङ्गहरे ! ॥ ४ ॥
जय सङ्घसमुद्रविबोधहरे ! जय सप्तफणामणिकान्तिहरे ! ।
जय गाढजडत्वनिषेधहरे ! जय पापलताफलपातहरे ! ॥ ५ ॥
जय मानमहीधरदारहरे ! जय योगमहासहकारहरे ! ।
जय भव्यजनाम्बुजबोधहरे ! जय रागरिपुप्रलयैकहरे ! ॥६॥

जय शून्यशशिप्रतिमार्तिहरे ! जय भीमभवाम्बुधिपारहरे ! ।
जय लोभसमीरणपानहरे ! जय बालपलाशफलाशहरे ! ॥ ७ ॥

प्रशमरससमुद्रः कीर्तिभारैरमुद्रः
कुमतितिमिरचन्द्रः साधुसिद्धावतन्द्रः ।
सुगतिनगरपन्था दुःखदौर्भाग्यमन्था
घनभवदवपाथः पातु वः पार्श्वनाथः ॥ ८ ॥

इत्थं स्तम्भनमण्डन ! खण्डन ! कमठोपसर्गवर्गस्य ।
**नयचन्द्रसूरि**संस्तुत ! मार्ग ! स्वर्गापवर्गस्य ॥ ९ ॥

इति श्रीऋषिबाणाक्षिविधौ (१२५७) संवत्सरे मुदा ।
वादिश्री**देवसूरीणां** गच्छे विरचितः स्तवः ॥ १० ॥

---

## छ परिशिष्टम्
## श्रीधर्मघोषसूरिविरचितः
# श्रीपार्श्वनाथमालामन्त्रस्तवः ।

वरमन्त्र ( **धर्म** ) **कीर्तितविद्यानन्द**त्यपीह यन्नाम ।
तं नौमि नम्रपार्श्वं पार्श्वं देवेन्द्रनुतपार्श्व**म्** ॥ १ ॥
ॐमिति नमो भगवते पार्श्वतीर्थङ्कराय भवताते ।
धरणेन्द्रयुजा पद्मावत्या सहिताय चैह्येहि ॥ २ ॥
यक्षं सयक्षणीकं राक्षसमनु राक्षसीं तथा भूतम् ।
भूतीं पिशाचमत्र पिशाचीं कुष्माण्डकुष्माण्डयौ ॥ ३ ॥
नागं नागीं ज्वरकं ज्वरीमपस्मारमप्यपस्मारीम् ।
प्रेतं च प्रेतीं ब्रह्मराक्षसं ब्रह्मराक्षसिकाम् ॥ ४ ॥

गन्धर्वं गान्धर्वीं भृङ्गरीटभृङ्गरीटिकासुभटम् ।
चामुण्डां चर्ममहाचण्डां........सप्तमातृकिकाम् ॥ ५ ॥
दुष्टमहासप्तकमातृकां महारोहिणीं सरोहिणिकाम् ।
सूर्यग्रहं भृशं गृह्णि गृह्णि समहेश्वरग्रहकम् ॥ ६ ॥
लघु गृह्णि गृह्णि चैकाहिकज्वरं द्वयाह्निकं त्र्यहप्रभवम् ।
दुष्टं चातुर्थिकमपि विषमज्वरमर्द्धमासभवम् ॥ ७ ॥
मासिक–सांवत्सर–वात–पित्तिक–श्लेष्मसन्निपातभवान् ।
एह्येहि शीघ्रमिह हन हन दह पच पच च्छिन्द ॥ ८ ॥
छिन्दय भिन्दय भिन्दय मारय मारय च मङ्क्षु भक्षय च ।
भक्षय शोषय शोषय प्रज्वल संसंप्रज्वलान्हाय ॥ ९ ॥
ॐ मन्तरस्थं नामाग्निकुण्डगं बाह्यतोऽष्टसु दलेषु ।
ह्रींमादिवर्णपूर्णं स्वाहावृतमस्यरपवो (?) दुष्टः ॥ १० ॥
नागेन्द्रयुजा पद्मावत्या वेष्टितमिहाहि–भोगाभ्याम् ।
मुखनाशाश्वासाहितविहायसीत्यष्टदलकमले ॥ ११ ॥
ध्यायत शिवदं पार्श्वं शिवैरिव [1]शिवङ्करैरिहाँ ह्रूँ श्रीँ ।
प्रेँ प्रोँ क्रोँ क्रीँ क्रूँ फट् स्वाहेति शिवप्रमितवर्णैः ॥ १२ ॥
इति तमसोऽन्तकृतेऽस्मै नमो नमो भगवते **पार्श्वनाथाय** ।
क्षेमङ्कराय पदं ह्रूँ नमतः स्वाहा भुजोऽपि स्युः ॥ १३ ॥

---

१ शिवैरिव शिवङ्करैः ह्रीँ ह्रीँ ।
श्रीँक्रैँक्रौँॐह्रीँह्रूँ फूँ स्वाहेति शिवप्रमितवर्णैः ॥
इति प्रत्यन्तरे पाठः ।

ज परिशिष्टम् ।

श्रीधर्मघोषसूरिविरचितं

## लोकान्तिकदेवस्तवनम् ।

थोसामि जिणे जेहि उ विन्नविया पव्वयंति जं दाउं ।
तज्जियकप्पियलोगंतिदेवट्ठाणाइकित्तणओ ॥१॥
असंखतमेऽरुणवरुदहिम्मि जोयणसहस्सबायाला ।
गंतु जलोवरिमतला उप्पइओ आउतमकाओ ॥२॥
पढमं जोयणसंखिज्जवि वित्थडो उवरुवरिय संखिज्जे ।
महयंधयाररूवो उड्ढं आवरिय चउकप्पो ॥३॥

---

### अवचूरिः ।

यैर्देवैर्विज्ञप्ताः प्रव्रजन्ति जिनास्ते जीतकल्पाः स्थिराचारा लोकान्तिकदेवास्तत्स्थानादि कीर्तनतोऽहं जिनान् स्तोष्ये । यच्च दत्त्वा प्रव्रजन्ति जिनास्तत्कीर्तनाच्च स्तोष्ये जिनानिति ॥१॥

लोकान्तिकदेवाः कस्मिन् विमाने क्व कल्पे सन्ति ?, उच्यते—जम्बूद्वीपात् तिर्यगसङ्ख्याततमेऽरुणवरसमुद्रेऽरुणवरद्वीपपर्यन्तवेदिकातो द्विचत्वारिंशद् योजनानि गत्वा तस्मिन् प्रदेशे जलोवरिमतलादुत्पत्तितः तमस्कायो अप्कायमयो महान्धकाररूपो वलयाकारः प्राप्यते ॥२॥

स च प्रथमं सप्तदशयोजनशतान्येकविंशतिसमधिकानि यावत् समभित्त्याकारतयास्ति, तथा प्रथमं विष्कम्भेण सङ्ख्येययोजनविस्तरः, तदुपरि असङ्ख्येयविस्तृतः, परिक्षेपेण सर्वत्राप्यसङ्ख्येयान्येव स च तिर्यग्विस्तराद्यकल्पचतुष्टयमावृत्य पञ्चमकल्पतृतीयेऽरिष्टप्रस्तरे निष्ठितः स चाधः शरावाकाराः उपरि कुक्कुटपञ्जरसंस्थानः ।

बंभस्स रिट्ठपयरंमि निट्ठिओ हिट्ठिमल्लगागारा ।
उवरिं कुक्कुडिपंजरसंठाणो चउदिसिं तत्थ ॥ ४ ॥

दो दो अ कण्हराई सचित्ताचित्तपुढविपरिणामा ।
पुव्वाइ मज्झिमादाहिणाइ वज्झाफुसहिं कमसो ॥ ५ ॥

पुव्वावरा छलं सातं सा पुण दाहिणुत्तरा बज्झा ।
अब्भिंतरचउरंसा सव्वा विय कण्हराईओ ॥ ६ ॥

---

अस्य च महत्वमेवम्—

यो देवो महर्धिको यया गत्या तिसृभिश्च पुविकाभिः २१ वारान् जम्बूद्वीपमनुपरिवृत्त्या गच्छेत् स एव देवस्तयैव गत्या षड्भिरपि मासैः सङ्ख्यातयोजनविस्तरमेव तमस्कायं व्यतिव्रजेन्नेतरं 'चउदिसिं तत्थ' इति । तत्र रिष्टप्रस्तरे रिष्टविमानस्य चतुर्दिक्षु सचित्ताचित्तपृथ्वीविकाररूपे द्वे द्वे कृष्णराज्यौ वर्तेते । अयं च तमस्कायो लोकान्तस्तथाविधस्यान्यान्धकारस्याभावाल्लोकतमिस्र इति । तथा देवानामपि तत्रोद्योताभावेनान्धकारात्मकत्वाद्देवतमिस्रः । बलवद्देवभयान्नश्यतां देवानां शरण्यभूतत्वात् तथाविधारण्यमिव देवारण्यम् । देवानां दुर्भेदत्वाच्चक्रव्यूह इवेति देवव्यूहः, देवानां भयोत्पादकत्वेन गमनविघातहेतुत्वात् परिघ इव देवपरिघः, प्रथमदर्शने देवानामपि क्षोभहेतुत्वात् प्रतिपक्ष इवेति देवप्रतिपक्षः, इत्यादिनामभिरुच्यते । तमस्कायान्तश्च देवादिविकुर्विता बादरा मेघा गर्जितानि विद्युतश्च भवन्ति । चन्द्रसूर्यादयस्तु न सन्ति । तत्प्रभा पुनरन्तर्गतास्ति परं तमस्कायपरिणामपरिण...सतीति 'चउदिसि तत्थ'त्ति तत्र रिष्ठाभविमानप्रस्तटे रिष्ठाभवि-

